॥ श्री मद्भगवद्बुद्धाय नमः ॥

श्रीसर्ववर्माचार्य विरचितं

# कातंत्र व्याकरणम्

अपर नाम

# कलापव्याकरणम्



पालिभाषाध्यापकेन

श्रीनारदभिक्षुणा सम्पादितम्



कलिकाता विश्वकोष लेनस्थ

श्रीजैनसिद्धान्तप्रकाशक यंत्रालये

श्रीयुत पं० श्रीलालजैनकाव्यतीर्थ व्याकरणशास्त्रिणः

प्रबन्धेन मुद्रापितं च।

प्रथमावृत्तिः ] [ १९२७ खृष्टाब्दः

# कलापसूत्रम् ।

## सन्धिप्रकरणे

### प्रथमः पादः

नमो गणेशाय ।

१ सिद्धो वर्णसमाम्नायः ॥ २ । तत्र चतुर्दशादौ स्वराः ॥ ३ । दश समानाः ॥ ४ । तेषां द्वौ द्वावन्योऽन्यस्य सवर्णौ ॥ ५ । पूर्वो ह्रस्वः ॥ ६ । परो दीर्घः ॥ ७ । स्वरोऽवर्णवर्ज्जो नामी ॥ ८ । एकारादीनि सन्ध्यक्षराणि ॥ ९ । कादीनि व्यञ्जनानि ॥ १० । ते वर्गाः पञ्च पञ्च पञ्च ॥ ११ । वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः ॥ १२ । घोषवन्तोऽन्ये ॥ १३ । अनुनासिका ङञणनमाः ॥ १४ । अन्तस्था यरलवाः ॥ १५ । उष्माणः शषसहाः ॥ १६ । अः इति विसर्ज्जनीयः ॥ १७ । क 'x' इति जिह्वामूलीयः ॥ १८ । प 'ᯅ' इत्युपध्मानीयः ॥ १९ । अं इत्यनुस्वारः ॥ २० । पूर्वपरयोरर्थोपलब्धौ पदम् ( इति संज्ञासूत्राणि ) ॥ २१ । व्यञ्जनमस्वरं परं वर्णं नयेत् ॥ २२ । अनतिक्रमयन् विश्लेषयेत् ॥ २३ । लोकोपचाराद् ग्रहणसिद्धिः ।

इति सन्धौ प्रथमः पादः समाप्तः ॥

---

## स्वरसन्धिः ।

### द्वितीयः पादः ।

२४ । समानः सवर्णे दीर्घीभवति परश्च लोपम् ॥ २५ । अवर्ण इवर्णे ए ॥ २६ । उवर्णे ओ ॥ २७ । ऋवर्णे अर् ॥ २८ । ऌवर्णे अल् ॥ २९ । एकारे ऐ ऐकारे च ॥ ३० । ओकारे औ औकारे च ॥ ३१ ।

इवर्णो यमसवर्णे न च परो लोप्यः ॥ ३२ । वमुवर्णः ॥ ३३ । रमृवर्णः ॥ ३४ । लम्लृवर्णः ॥३५ । ए अय् ॥ ३६ । ऐ आय् ॥३७ । ओ अव् ॥ ३८ । औ आव् ॥ ३९ । अयादीनां य-व-लोपः पदान्ते न वा लोपे तु प्रकृतिः ॥ ४० । एदोत्परः पदान्ते लोपमकारः ॥ ४१ । न व्यञ्जने स्वराः सन्धेयाः ॥

इति सन्धौ द्वितीयः पादः समाप्तः ॥

---

## प्रकृतिसन्धिः ।

### तृतीयः पादः ।

४२ । ओदन्ता अइउआ निपाताः स्वरे प्रकृत्या ॥ ४३ । द्विवचनमनौ ॥ ४४ । बहुवचनममी ॥ ४५ । अनुपदिष्टाश्च ॥

इति सन्धौ तृतीयः पादः समाप्तः ॥

---

## व्यञ्जनसन्धिः ।

### चतुर्थः पादः ।

४६ । वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान् ॥ ४७ । पञ्चमे पञ्चमां स्तृतीयान्नवा ॥ ४८ । वर्ग प्रथमेभ्यः शकारः स्वर-य-व र-परश्छकारं नवा ॥ ४९ । तेभ्य एव हकारः पूर्व्वचतुर्थंनवा ॥ ५० । पररूपं तकारो ल-च-ट वर्गेषु ॥ ५१ । चं शे ॥ ५२ । ङणना ह्रस्वोपधाः स्वरे द्विः ॥ ५३ । नोऽन्तश्चछयोः शकारमनुस्वारपूर्व्वम् ॥ ५४ । टठयोः षकारम् ॥ ५५ । तथयोः सकारम् ॥ ५६ । ले लम् ॥ ५७ । ज-झ-ञ-शकारेषु ञकारम् ॥ ५८ । शिनूचौ वा ॥ ५९ । डढणपरस्तु णकारम् ।

## अनुस्वारसन्धिः ।

६०। मोऽनुस्वारं व्यञ्जने ॥ ६१। वर्गे तद्वर्गपञ्चमं वा ॥

इति सन्धौ चतुर्थः पादः समाप्तः ॥

---

## विसर्गसन्धिः ।

### पञ्चमः पादः ।

६२। विसर्जनीयश्चे छे वा शम् ॥ ६३। टे ठे वा षम् ॥ ६४। ते थे वा सम् ॥ ६५। कखयोर्जिह्वामूलीयं न वा ॥ ६६। पफयोरुपध्मानीयं नवा ॥ ६७। शे षे से वा वा पररूपम् ॥ ६८। उमकारयोर्मध्ये ॥ ६९। अघोषवतोश्च ॥ ७०। अपरो लोप्योऽन्यस्वरे यं वा ॥ ७१। आभोभ्यामेवमेव स्वरे ॥ ७२। घोषवति लोपम् ॥ ७३। नामिपरो रम् ॥ ७४। घोषवत्स्वरपरः ॥ ७५। रप्रकृतिरनामिपरोऽपि ॥ ७६। एषसपरो व्यञ्जने लोप्यः ॥ ७७। न विसर्जनीयलोपे पुनः सन्धिः ॥ ७८। रो रे लोपं स्वरश्च पूर्वो दीर्घः ॥ ७९। द्विर्भावं स्वरपरश्छकारः ॥

इति सन्धौ पञ्चमः पादः समाप्तः ॥

---

## नाम्नि चतुष्टये

### प्रथमः पादः ।

१। धातुविभक्तिवर्जमर्थवल्लिङ्गम् ॥ २। तस्मात् परा विभक्तयः सि, औ, जस् (१मा)। अम्, औ, शस् (२या)। टा, भ्याम्, भिस् (३या)। ङे, भ्याम्, भ्यस् (४र्थी)। ङसि, भ्याम्, भ्यस् (५मी)। ङस्, ओस्, आम् (६ष्ठी)। ङि, ओस्, सुप् (७मी)
३। पञ्चादौ घुट् ॥ ४। जस् शसौ नपुंसके ॥ ५। आमन्त्रिते सिः सम्बुद्धिः ॥ ६। आगम उदनुबन्धः स्वरादन्त्यात् परः ॥ ७। तृती-

यादौ तु परादिः । ८ । इदुदग्निः ॥ ९ । ईदूवस्त्र्याख्यौ नदी ॥ १० । आ श्रद्धा । ११ । अन्त्यात् पूर्व्व उपधा ॥ १२ । व्यञ्जनामोऽनुषङ्गः १३ । धुड्व्यञ्जनमनन्तस्थानुनासिकम् ॥ १४ । अकारो दीर्घः घवति ॥ १ । जसि ॥ १६ । शसि सस्य च नः ॥ १७ । अकारे लोपम् ॥ १८ । भिस् ऐस् वा ॥ १९ । धुटि बहुत्वे त्वे ॥ २० । ओसि च ॥ २१ । ङसिरात् ॥ २२ । ङस् स्यः ॥ २३ । इन टा ॥२४ । ङेयः ॥ २५ । स्मै सर्व्वनाम्नः ॥ २६ । ङसिः स्मात् ॥ २७ । ङिः स्मिन् ॥ २८ । विभाष्येते पूर्वादेः ॥ २९ । सुरामि सर्वतः ॥ ३० । जस् सर्व इः ॥ ३१ । अल्पादेर्वा ॥ ३२ । द्वन्द्वस्थाच्च ॥ ३३ । नान्यत् सार्वनामिकम् ॥ ३४ । तृतीयासमासे च ॥ ३५ । बहुव्रीहौ ॥ ३६ । दिशां वा ॥ ३७ । श्रद्धायाः सिर्लोपम् ॥ ३८ । टौसोरे ॥ ३९ । सम्बुद्धौ च ॥ ४० । ह्रस्वोऽम्बार्थानाम् ॥ ४१ । औरिम् ॥ ४२ । ङवन्ति यै-यास्-यास्-याम् ॥ ४३ । सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च ॥ ४४ । द्वितीयातृतीयाभ्यां वा ॥ ४५ । नद्या ऐ आस् आस् आम् ४६ । सम्बुद्धौ ह्रस्वः ॥ ४७ । अमशसोरादिर्लोपम् ॥ ४८ । ईकारान्तात्सिः ॥ ४९ । व्यञ्जनाच्च ॥ ५० । अग्नेरमोऽकारः ॥ ५१ । औकारः पूर्वम् ॥ ५२ । शसोऽकारः सश्च नोऽस्त्रियाम् ॥ ५३ । टा ना ॥ ५४ । अदोऽमुश्च ॥ ५५ । इरेदुरोज्जसि ॥ ५६ । सम्बुद्धौ च ५७ । ङे ॥ ५८ । ङसिङसोरलोपश्च ॥ ५९ । गोश्च ॥ ६० । ङिरौ सपूर्वः ॥ ६१ । सखिपत्योर्ङिः ॥ ६२ । ङसिङसोरुमः ॥ ६३ । ऋदन्तात्सपूर्वः ॥ ६४ । आ सौ सिलोपश्च ॥ ६५ । अग्निवच्छसि ॥६६ । अर्कौ ॥ ६७ । घुटि च ॥ ६८ । धातोस्तृशब्दस्यार् ॥ ६९ । स्वस्रादीनां च ॥ ७० । आ च न सम्बुद्धौ ॥ ७१ । ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम् ॥ ७२ । आमि च नुः ॥ ७३ । त्रेस्त्रयश्च ॥ ७४ । चतुरः ॥ ७५ । संख्यायाः ष्णान्तायाः ॥ ७६ । कतेश्च जसशसोलु क् ॥ ७७ । त्रियो ङिराम् ॥

इति नाम्नि चतुष्टये प्रथमः पादः समाप्तः ॥

# द्वितीयः पादः ।

७८ । न सखिष्टादावग्निः ॥ ७९ । पतिरसमासे ॥ ८० । स्त्री नदीवत् ॥ ८१ । स्त्र्याख्यावियुवौ वामि ॥ ८२ । ह्रस्वश्च ङवति ॥ ८३ नपुंसकात् स्यमोर्लोपो न च तदुक्तम् ॥ ८४ । आकारादसम्बुद्धौ मुश्च ८५ । अन्यादेस्तु तुः ॥ ८६ । औरीम् ॥ ८७ । जसशसोः शिः ॥ ८८ धुट्स्वराद् घुटि नुः ॥ ८९ । नामिनः स्वरे ॥ ९० । अस्थिदधिसक्-थ्यक्ष्णामनन्तष्टादौ ॥ ९१ । भाषितपुंस्कं पुंवद्वा ॥ ९२ । दीर्घमामि सनौ ॥ ९३ । नान्तस्य चोपधायाः ॥ ९४ । घुटि चासम्बुद्धौ ॥ ९५ । सान्तमहतोर्नोपधायाः ॥ ९६ । अपश्च । ९७ । अन्त्वसन्तस्य चाधातोः सौ ॥ ९८ । इन्हन्पूषार्यम्णां शौ च ॥ ९९ । उशनः पुरुदंशोऽनेहसां सावनन्तः ॥ १०० । सख्युश्च ॥ १०१ । घुटि त्वै ॥ १०२ । दिव उद् व्यञ्जने ॥ १०३ । औ सौ ॥ १०४ । वाम्या ॥ १०५ । युजेरसमासे नुर्घुटि ॥ १०६ । अभ्यस्तादन्तिरनकारः ॥ १०७ । वा नपुंसके ॥ १०८ । तुदभादिभ्य ईकारे ॥ १०९ । हनेर्घिरुपधालोपे ॥ ११० । गोरौ घुटि ॥ १११ । अमशसोरा ॥ ११२ । पन्थिमन्थिऋभुक्षीणां सौ ॥ ११३ । अनन्तो घुटि ॥ ११४ । अघुट्स्वरे लोपम् ॥ ११५ । व्यञ्जने चैषां निः ॥ ११६ । अनुषङ्गश्चाक्रुञ्चेत् ॥ ११७ । पुंसोऽन्-शब्दलोपः ॥ ११८ । चतुरो वाशब्दस्योत्वम् ॥ ११९ । अनडुहश्च १२० । सौ नुः ॥ १२१ । सम्बुद्धावुभयोर्ह्रस्वः ॥ १२२ । अनसः पदे मः ॥ १२३ । अधुट्स्वरादौ सेट्कस्यापि वन्सेर्वशब्दस्योत्वम् ॥ १२४ श्वयुवमघोनाञ्च ॥ १२५ । वाहेर्वाशब्दस्यौ ॥ १२६ । अनूचेरलोपः पूर्वस्य च दीर्घः ॥ १२७ । तिर्य्यङ् तिरश्चिः ॥ १२८ । उदङ् उदीचिः १२९ । पात् पदं समासान्तः ॥ १३० । अवमसंयोगादनो लोपोऽलुप्त-वच्च पूर्वविधौ ॥ १३१ । इङ्योर्वा ॥ १३२ । आ धातोरघुट्स्वरे ॥ १३३ । ईदूतोरियुवौ स्वरे ॥ १३४ । सुधीः ॥ १३५ । भूरवर्षाभूरपुनर्भूः ॥ १३६ । अनेकाक्षरयोस्त्वसंयोगाद्यवौ ॥ १३७ । भ्रूर्धातुवत् ॥

१३८ । स्त्री च ॥ १३९ । वमुशसोः ॥ १४० । भवतो वादेरुत्वं सम्बुद्धौ ॥ १४१ । अव्ययसर्वनाम्नः स्वरादन्त्यात् पूर्वोऽकः ॥ १४२ के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम् ॥

इति नाम्नि चतुष्टये द्वितीयः पादः समाप्तः ॥

---

## तृतीयः पादः ।

१४३ । युष्मदस्मदोः पदं पदात् षष्ठीचतुर्थीद्वितीयासु वस्नसौ ॥ १४४ । वांनौ द्वित्वे ॥ १४५ । त्वन्मदोरेकत्वे तेमे त्वामा तु द्वितीयायाम् ॥ १४६ । न पदादौ ॥ १४७ । चादियोगे च ॥ १४८ । एषां विभक्तावन्तलोपः ॥ १४९ । युवावौ द्विवाचिषु ॥ १५० । अम् औ चाम् ॥ १५१ । आन् शस् ॥ १५२ । त्वमहं सौ सविभक्त्योः ॥ १५३ । यूयं वयं जसि ॥ १५४ । तुभ्यं मह्यं ङयि ॥ १५५ । तवमम ङसि ॥ १५६ । आत् पञ्चम्यद्वित्वे ॥ १५७ । भ्यस् भ्यम् ॥ १५८ । सामाकम् ॥ १५९ । एत्वमस्थानिनि ॥ १६० । आत्वं व्यंजनादौ ॥ १६१ । रैः ॥ १६२ । अष्टनः सर्व्वासु ॥ १६३ । औ तस्माज्जस्शसोः ॥ १६४ । अर्व्वनर्व्वन्तिरसावनञ् ॥ १६५ । सौ च मघवान् मघवा वा १६६ । जरा जरस् स्वरे वा ॥ १६७ । त्रिचतुरोः स्त्रियां तिसृचतसृ विभक्तौ ॥ १६८ । तौरं स्वरे ॥ १६९ । न नामि दीर्घम् ॥ १७० । नृ वा ॥ १७१ । त्यदादीनामविभक्तौ । १७२ । किमः कः ॥ १७३ । दोऽद्वेर्म्मः ॥ १७४ । सौ सः ॥ १७५ । तस्य च ॥ १७६ । इदमियमयं पुंसि ॥ १७७ । अद्व्यञ्जनेऽनक् ॥ १७८ । टौसोरन ॥ १७९ । एतस्य चान्वादेशे द्वितीयायाञ्चैन ॥ १८० । तस्माद्भिस्भिर् ॥ १८१ । अदसश्च ॥ १८२ । सावौ सिलोपश्च ॥ १८३ । उत्वं मात् ॥ १८४ । एद्बहुत्वेत्वी ॥ १८५ । अपां भेदः ॥ १८६ । विराम-व्यञ्जनादिष्वनडुन्नहिवनसीनाञ्च ॥ १८७ । स्रसिध्वसोश्च ॥ १८८ । ह-श-ष छान्तेजादीनां डः ॥ १८९ । दादेर्हस्य गः ॥ १९० । चवर्गदृगादीनाञ्च ॥

१९१ । मुहादीनां वा ॥ १९२ । हचतुर्थान्ततस्य धातोस्तृतीयादेरादि-चतुर्थत्वमकृतवत् ॥ १९३ । सजुषाशिषोरः ॥ १९४ । इरुरोरीरूरौ १९५ । अहः सः ॥ १९६ । संयोगान्तस्य लोपः ॥ १९७ । संयोगादेर्धुटः ॥ १९८ । लिङ्गान्तनकारस्य ॥ १९९ । न सम्बुद्धौ ॥ २०० । नसंयोगान्तावलुप्तवच्च पूर्वविधौ ॥ २०१ । इसुस् दोषां घोषवति रः ॥ २०२ । धुटां तृतीयः ॥ २०३ । अघोषे प्रथमः ॥ २०४ । वा विरामे ॥ २०५ । रेफसोर्विसर्जनीयः ॥ २०६ । विरामव्यञ्जनादावुक्तं नपुंसकात् स्यमोर्लोपेऽपि ॥

इति नाम्नि चतुष्टये तृतीयः पादः समाप्तः ॥

---

## अथ कारकपादः ।

२०७ । अव्ययीभावादकारान्तद् विभक्तीनाममपञ्चम्याः ॥ २०८ । वा तृतीया-सप्तम्योः ॥ २०९ । अन्यस्माल्लुक् ॥ २१० । अव्ययाच्च ॥ २११ । रूढानां बहुत्वेऽस्त्रियामपत्ययस्य ॥ २१२ । गगयस्कविदादीनाञ्च ॥ २१३ । भृग्वत्र्यङ्गिरः कुत्सवशिष्ठगोतमेभ्यश्च ॥ २१४ । यतोऽपैति भयमादत्ते वा तदपादानम् ॥ २१५ । इप्सितञ्च रक्षार्थानाम् ॥ २१६ । यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम् ॥ २१७ । य आधारस्तदधिकरणम् ॥ २१८ । येन क्रियते तत् करणम् ॥ २१९ । यत् क्रियते तत् कर्म्म ॥ २२० । यः करोति स कर्त्ता ॥ २२१ । कारयति यः स हेतुश्च ॥ २२२ । तेषां परमुभयप्राप्तौ ॥ २२३ । प्रथमा विभक्तिलिङ्गार्थवचने ॥ २२४ । आमन्त्रणे च ॥ २२५ । शेषः कर्मकरणसम्प्रदानापादानस्वाम्याद्यधिकरणेषु ॥ २२६ । पर्य्यपाङ्योगे पञ्चमी ॥ २२७ । दिगितरर्त्तेऽन्यैश्च ॥ २२८ । द्वितीयैनेन ॥ २२९ । कर्म्मप्रवचनीयैश्च ॥ २३० । गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ २३१ । मन्यकर्मणि चानादरेऽप्राणिनि ॥ २३२ । नमः-स्वस्ति-स्वाहा-स्वधा-अलं-वषड् योगे चतुर्थी ॥ २३३ । तादर्थ्ये ॥ २३४ । तुमर्थाच्च

भाववाचिनः ॥ २३५। तृतीयाया सहयोगे ॥ २३६। हेत्वर्थे ॥ २३७। कुत्सितेऽङ्गे ॥ २३८। विशेषणे ॥ २३९। कर्त्तरि च ॥ २४०। कालभावयोः सप्तमी ॥ २४१। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च ॥ २४२। निर्धारणे च ॥ २४३। षष्ठी हेतुप्रयोगे ॥ २४४। स्मृत्यर्थकर्म्मणि ॥ २४५। करोतेः प्रतियत्ने । २४६ । हिंसार्थानामज्वरेः ॥ २४७। कर्तृकर्मणोः कृति नित्यम् ॥ २४८। न निष्ठादिषु ॥ २४९ षड्ो णो ने ॥ २५० । मनोरनुस्वारो धुटि ॥ २५१ । वर्गे वर्गान्तः ॥ २५२ । तवर्गश्चटवर्गयोगे चटवर्गौ ॥ २५३। नामिकरपरः प्रत्ययविकारागमस्थः सिः षन्नु विसर्ज्जनीयषान्तरोऽपि ॥ २५४ । रषृवर्णेभ्यो नो णमनन्त्यः स्वरह-य व कवर्ग-पवर्गान्तारोऽपि ॥ २५५ । स्त्रियामादा ॥ २५६ । नदाद्यन्चिवाह्यन्स्यन्तृ सखिनान्तेभ्य ई ॥ २५७। ईकारे स्त्रीकृते लोप्यः २५८। स्वरो ह्रस्वो नपुंसके ॥

इति नाम्नि चतुष्टये कारकपादः समाप्तः।

---

## अथ समासः पादः।

२५९। नाम्नां समासो युक्तार्थः ॥ २६०। तत्स्था लोप्या विभक्तयः ॥ २६१। प्रकृतिश्च स्वरान्तस्य ॥ २६२। व्यञ्जनान्तस्य यत् सुभोः ॥ २६३। पदे तुल्याधिकरणे विज्ञेयः कर्म्मधारयः ॥ २६४। संख्यापूर्वो द्विगुरिति ज्ञेयः ॥ २६५। तत्पुरुषावुभौ ॥ २६६। विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च ॥ २६७। स्यातां यदि पदे द्वे तु यदि व स्युर्बहून्यपि, तान्यन्यस्य पदस्यार्थे बहुव्रिहिः ॥ २६८। विदिक् तथा ॥ २६९। द्वन्द्वः समुच्चयो नाम्नोर्बहूनां वापि यो भवेत् ॥ २७०। अल्पस्वरतं तत्र पूर्वम् २७१। यच्चार्चितं द्वयोः ॥ २७२। पूर्ववाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते ॥ २७३। स नपुंसकलिङ्गं स्यात् ॥ २७४। द्वन्द्व कत्वम् ॥

२७५ । तथा द्विगोः॥ २७६ । पुंवद्भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे ॥ २७७ । संज्ञापूरणीकोपधास्तु न ॥ २७८ । कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥ २७९ । आकारो महतः कार्यस्तुल्याधिकरणे पदे ॥ २८० । नस्य तत्पुरुषे लोप्यः ॥ २८१ । स्वरेऽक्षरविपर्ययः ॥ २८२ । कोः कत् ॥ २८३ । का त्वीषदर्थेऽक्षे ॥ २८४। पुरुषे तु विभाषया ॥ २८५ । याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् ॥ २८६ । ह्रस्वस्य दीर्घता ॥ २८७ । अनव्ययविसृष्टस्तु सकारं कपवर्गयोः ॥

इति नाम्नि चतुष्टये समासः पादः समाप्तः ॥

---

## तद्धितः पादः ।

२८८ । वाणपत्ये ॥ २८९ । णय गर्गादेः ॥ २९० । कुञ्जादेरायनण् स्मृतः ॥ २९१ । स्त्र्यत्र्यादेरेयण् ॥ २९२ । इणतः ॥ २९३ । बाह्वादेश्च विधीयते ॥२९४ । रागान्नत्रयोगाच्च समूहात् सास्य देवता, तद्वेत्त्यधीते वा तस्येदमेवमादेरण् इष्यते ॥ २९५ । तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि, पण्याच्छिल्पान्नियोगाच्च क्रतादेरायुधादपि ॥ २९६ । नावस्ताय्य विषाद्वध्ये तुलया सम्मितेऽपि च, तत्र साधौ यः ॥ २९७ । ईयस्तु हिते ॥ २९८ । यदुगवादितः ॥ २९९ । उपमाने वतिः ॥ ३०० । तत्वौ भावे ॥ ३०१ । यण् च प्रकीर्तितः ॥ ३०२ । तदस्यास्तीति मन्त्वन्त्वीन् ॥ ३०३ । संख्यायाः पूरणे डमौ ॥ ३०४ । द्वेस्तीयः ॥ ३०५ । त्रेस्तृ च ॥ ३०६ । अन्तस्थो डे र्षोः ॥ ३०७ । कतिपयात्कतेः ॥ ३०८ । विंशत्यादेस्तमट् ॥ ३०९ । नित्यं शतादेः ॥ ३१० । षष्ठ्याद्यतत्परात् ॥ ३११ । विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये, अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः ॥ ३१२ । तत्र दपिः ॥ ३१३ । रथोरेतेत् ॥ ३१४ । तेषु त्वेतदकारताम् ॥ ३१५ । पञ्चम्यास्तस् ॥ ३१६ । त्र सप्तम्याः ॥ ३१७ । इदमो हः ॥ ३१८ । किमः ॥ ३१९ । अत् क्व च ॥ ३२० । तहोः कुः ॥ ३२१ ।

काले किंसर्वयदेकान्येभ्य एव दा ॥ ३२२ । इदमोः र्धुनादानीम् ॥ ३२३ । दादानीमौ तदः स्मृतौ ॥ ३२४ । सद्यआद्या निपात्यन्ते ॥ ३२५ । प्रकारवचने तु था ॥ ३२६ । इदम् किम्भ्यां थमुः कार्य्यः ॥ ३२७ । आख्यातात्च तमादयः ॥

## ( तमादिसूत्राणि )

३२८ । आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तरामतमाम् ॥ ३२९ । तथा गुणादिष्ठं यन्स् वा ॥ ३३० । प्रकर्षे रूपः ॥ ३३१ । ईषदसमाप्तौ कल्पदेश्यदेशीयाः ॥ ३३२ । कुत्सितवृत्ते-र्नाम्न एव पाशः ॥ ३३३ । भूतपूर्ववृत्ते श्चरट् ॥ ३३४ । षष्ठ्यन्ताद्भूत-पूर्वाऽभिधेये रूप्यश्च ॥ ३३५ । बह्वल्पार्थात्कारकाच्छस् वा मङ्गले गम्यमाने ॥ ३३६ । संख्यैकार्थाभ्यां वीप्सायाम् ॥ ३३७ । कतिगणवन्तूनां संख्यावत् ॥ ३३८ । वारस्य संख्यायाः कृत्वस् ॥ ३३९ । बहोरवि-प्रकर्षे धा च ॥ ३४० । द्वित्रिचतुर्भ्यः सुच् ॥ ३४१ । प्रस्तुतवृत्ते र्मयट् ॥ ३४२ । प्रकृतेर्विकारेऽवयवे वा भक्ष्याच्छादनयोः ॥ ३४३ । एकस्वरान्नि-त्यम् ॥ ३४४ । अभूततद्भावे कृभ्वस्तिषु विकाराच्च्विः ॥ ३४५ । अरुर्मनश्चक्षुश्चेतोरहोरजोभ्यः कृतसलोपेभ्य एवायं विधिः ॥ ३४६ । अभिव्याप्तौ सम्पद्यतौ च सातिर्वा ॥ ३४७ । स्वाम्यर्थादायत्ते ॥ ३४८ । देये त्रा च ॥ ३४९ । अव्यक्तानुकरणादनेकस्वरादनितौ डाच् ॥ ३५० । द्वितीयतृतीयसम्बबीजेभ्यः कृषिविषये करोतौ ॥ ३५१ । संख्यादेर्गुणात् ॥ ३५२ । समयाद् यापनायाम् ॥ ३५३ । सपत्रनिष्पत्राभ्यामतिव्यथने ॥ ३५४ । निष्कुलान्निष्कोषणे ॥ ३५५ । प्रियसुखाभ्यामानुकूल्ये ॥ ३५६ । दुःखात्प्रातिकूल्ये ॥ ३५७ । शूला-त्पाके ॥ ३५८ । सत्यादशपथे ॥ ३५९ । मद्रभद्राभ्यां वपने ॥

## ( राजादिसूत्राणि )

३६० । समासान्तगतानां वा राजादीनामदन्तता ॥ ३६१ । राजाश्मलसखि ॥ ३६२ । गौरतद्धिताभिधेये ॥ ३६३ । उरः प्रधा-

नार्थम् ॥ ३६४ । अनस् अश्मन् अयस् सरस् जातिसंज्ञयोः ॥ ३६५ ।
ग्रामकौटाभ्यां तक्ष्णः ॥ ३६६ । अतेः श्वन् ॥ ३६७ । उपमानादप्रा-
णिनि ॥ ३६८ । मृगपूर्वोत्तरेभ्यश्च सक्थि ॥ ३६९ । अतद्धितार्थे
द्विगोर्नौः ३७० । अर्द्धाच्च ॥ ३७१ । वा खारी ॥ ३७२ । द्वित्रिभ्या-
मञ्जलिः ॥ ३७३ । जनपदाद् ब्रह्मन् ॥ ३७४ । कुमहद्भ्यां वा ॥
३७५ । उक्तेषु स्त्रीत्वसम्भवे नदादौ द्रष्टव्याः ॥ ३७६ । संख्याव्य-
याद्यङ्गुलिः ॥३७७॥ अहःसर्वैकदेशसंख्यातपुण्यवर्षादीर्घादिश्च रात्रिः॥
३७८ । प्रागुक्तो विधिस्तत्पुरुष एव ॥ ३७९ । पथ्यपपुरः ॥ ३८० ।
धुरनक्षस्य ॥ ३८१ । ऋच् ॥ ३८२ । नञ्बह्वादिश्च माणवकचर-
णयोः ॥ ३८३ । प्रत्यन्ववेभ्यः सामलोमनी ॥ ३८४ । अचक्षुरक्षि ॥
३८५ । ब्रह्महस्तिराजपल्येभ्यो वर्चस् ॥ ३८६ । अन्धसमवेभ्यस्त
मस् ॥ ३८७ । श्वसोऽवसीयस् ॥ ३८८ । निसश्च श्रेयस् ॥ ३८९ ।
अन्ववतप्तेभ्यो रहस् ॥ ३९० । प्रतेरुरस् आधारश्चेत् ॥ ३९१ । अनु-
गवमायामवति ॥ ३९२ । उपसर्गादध्वन् ॥ ३९३ । उदक्पाण्डुकृष्णेभ्यो
भूमिः ॥ ३९४ । संख्याया नदीगोदावर्यौ च ॥ ३९५ । उक्तेषु
स्त्रीत्वसम्भवे स्त्रियामादा ॥ ३९६ । समाहारद्वन्द्वचवर्गदषहान्तः ॥
३९७ । इतोऽव्ययीभावः ॥ ३९८ । शरद्विपाशयसचेतस्-मनस्-
उपानह्-दिवः संज्ञायाम् ॥ ३९९ । हिमवन्त् द्विधा ॥ ४०० । अनड्वाह्
विश्-चत्वार्-यद्-तद् ॥ ४०१ । जरा जरस् ॥ ४०२ । प्रतिसमनु-
भ्योऽक्षि ॥ ४०३ । उप श्वन् ॥ ४०४ । सह रजस् ॥ ४०५ । अनन्तः ॥
४०६ । नपुंसकं वा ॥ ४०७ । धुरन्तः ॥ ४०८ । गिरिनदीपौर्ण-
मासीआग्रहायणी ॥ ४०९ । इतो बहुव्रीहिः ॥ ४१० । सक्थ्यक्षिणी
स्वाङ्गे ॥ ४११ । दारुण्यङ्गुलिः ॥ ४१२ । द्वित्रिभ्यां मूर्द्धन् ॥
४१३ । उक्तेषु स्त्रीत्वसम्भवे नदादित्वादी ॥ ४१४ । पूरणीप्रमाण्योः ॥
४१५ । अन्तर्बहिर्भ्यां लोमन् ॥ ४१६ । नक्षत्रान्नेतृ ॥ ४१७ । नञ्-
सुव्युपत्रिभ्यश्चतुर् ॥ ४१८ । संज्ञायां नाभिः ॥ ४१९ । नञ्सु-
दुर्भ्यः सक्थि वा ॥ ४२० । संख्याया अवहोरन्त्यस्वरादिलोपश्च ॥

४२१। न किमः क्षेपे॥ ४२२। स्वतिभ्यां पूजायां प्राग्बहुव्रीहेः॥ ४२३। नञस्तत्पुरुषे॥४२४। पथो वा॥ ४२५। धेन्वनडुहादयश्च॥ (इति राजादिसूत्राणि)॥ ४२६। डानुबन्धेऽन्त्यस्वरादेर्लोपः॥ ४२७। तेर्विंशतेरपि॥ ४२८। इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥ ४२९। नस्तु क्वचित्॥ ४३०। उवर्णस्त्वोत्वमापाद्यः॥ ४३१। एयेऽकद्रास्तु लुप्यते॥ ४३२। कार्य्यावावावादेशावोकारौकारयोरपि॥ ४३३। वृद्धिरादौ सणे॥ ४३४। न य्वोः पदाद्योर्वृद्धिरागमः॥

इति नाम्नि चतुष्टये तद्धितः पादः समाप्तः॥

---

# आख्यातप्रकरणम्।

## प्रथमः पादः।

१। अथ परस्मैपदानि॥२। नव पराण्यात्मने॥३। त्रीणि त्रीणि प्रथममध्यमोत्तमाः॥ ४। युगपद्वचने परः पुरुषाणाम्॥ ५। नाम्नि प्रयुज्यमानेऽपि प्रथमः॥ ६। युष्मदि मध्यमः॥७। अस्मद्युत्तमः॥८। अदाब्दाधौ दा॥ ९। क्रियाभावो धातुः॥१०। काले॥ ११। सम्प्रति वर्त्तमाना॥ १२। स्मेनातीते॥ १३। परोक्षा॥ १४। भूतकरणवत्यश्च॥ १५। भविष्यति भविष्यन्त्याशीः श्वस्तन्यः॥ १६। तासां स्वसंज्ञाभिः कालविशेषः॥१७। प्रयोगतश्च॥ १८। पञ्चम्यनुमतौ॥ १९। समर्थनाशिषोश्च॥ २०। विध्यादिषु सप्तमी च २१। क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः॥ २२। मायोगेऽद्यतनी॥२३। मास्मयोगे ह्यस्तनी च॥ २४। वर्त्तमाना— ति, तस् अन्ति; सि, थस्, थ; मि, वस्, मस्; ते, आते, अन्ते; से, आथे, ध्वे; ए, वहे, महे॥ २५। सप्तमी—यात्, याताम्, युस्; यास् यातम्, यात; याम्, याव, याम; ईत, ईयाताम्, ईरन्; ईथास्, ईयाथाम् ईध्वम्; ईय, ईवहि, ईमहि॥२६। पञ्चमी—तु, ताम्, अन्तु; हि, तम्, त; आनि, आव, आम; ताम्, आताम्, अन्ताम्; स्व, आथाम्, ध्वम्;

ऐ, आवहै, आमहै ॥ २७ । ह्यस्तनी—दि, ताम्, अन्; सि, तम्, त; अम्, व, म; त, आताम्, अन्त; थास्, आथाम्, ध्वम्; इ, वहि, महि ॥ २८ । एवमेवाद्यतनी ॥ २९ । परोक्षा—अट्, अतुस्, उस्; थल्, अथुस्, अ; अट्, व, म; ए, आते, इरे; से, आथे, ध्वे; ए, वहे, महे ॥ ३० । श्वस्तनी—ता, तारौ, तारस्; तासि, तास्थस्, तास्थ; तास्मि, तास्वस्, तास्मस्; ता, तारौ, तारस्; तासे, तासाथे, ताध्वे; ताहे, तास्वहे, तास्महे ॥ ३१ । आशीः—यात्, यास्ताम्, यासुस्; यास्, यास्तस्, यास्त; यासम्, यास्व, यास्म; सीष्ट, सीयास्ताम्, सीरन्; सीष्ठास्, सीयास्थाम्, सीध्वम्; सीय, सीवहि, सीमहि ॥ ३२ । स्यसंहितानि त्यादीनि भविष्यन्ती—स्यति, स्यतस्, स्यन्ति; स्यसि, स्यथस्, स्यथ; स्यामि, स्यावस्, स्यामस्; स्यते, स्येते, स्यन्ते; स्यसे, स्येथे, स्यध्वे; स्ये, स्यावहे, स्यामहे ॥ ३३ । द्यादीनि क्रियातिपत्तिः—स्यत्, स्यताम्, स्यन्; स्यस्, स्यतम्, स्यत; स्यम्, स्याव, स्याम; स्यत, स्येताम् स्यन्त; स्यथास्, स्येथाम्, स्यध्वम्; स्ये, स्यावहि स्यामहि ॥ ३४ । षडाद्याः सार्वधातुकम् ॥

इत्याख्याते प्रथमः पादः समाप्तः ॥

---

## द्वितीयः पादः ।

३५ । प्रत्ययः परः ॥ ३६ । गुप्तिज् किद्भ्यः सन् ॥ ३७ । मानबध-दानशान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३८ । धातोर्वा तुमन्तादिच्छतिनैक-कर्तृकात् ॥ ३९ । नाम्न आत्मेच्छायां यिन् ॥ ४० । काम्य च ॥ ४१ । उपमानादाचारे ॥ ४२ । कर्तुरायिः सलोपश्च ॥ ४३ । इन् कारितं धात्वर्थे ॥ ४४ । धातोश्च हेतौ ॥ ४५ । चुरादेश्च ॥ ४६ । इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः ॥ ४७ । रषब्दऋतो लघोर्व्य-ञ्जनादेः ॥ ४८ । धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ॥ ४९ ।

गुपू-धूपू-विच्छि-पणिपनेरायः ॥ ५० । ते धातवः ॥ ५१ । चकास्-कास् प्रत्ययान्तेभ्य आम परोक्षायाम् ॥ ५२ । दययासश्च ॥ ५३ । नाम्यादेगुरुमतोऽनृच्छः ॥ ५४ । उष विद् जागृभ्यो वा ॥ ५५ । भीह्री-भृहुवान्तिवच्च ॥ ५६ । आमः कृञनुप्रयुज्यते ॥ ५७ । अस् भुवौ च परस्मै ॥ ५८ । सिजद्यतन्याम् ॥ ५९ । सणनिटः शिड़न्तान्नाम्युपधा-दद्दशः ॥ ६० । श्रि-द्रु स्रु कमि-कारितान्तेभ्यश्चण् कर्त्तरि ॥ ६१ । अणसु-वचि-ख्याति-लिपि-सिचि-ह्वः ॥ ६२ । पुषादिद्युताद्यलृकारा-नुबन्धार्त्तिसतिशास्तिभ्यश्च परस्मै ॥६३। इजात्मने पदेः प्रथमैकवचने ॥ ६४ । भावकर्म्मणोश्च ॥ ६५ । सार्व्वधातुके यण् ॥ ६६ । अन् विक-रणःकर्त्त रि ॥ ६७ । दिवादेर्यन् ॥ ६८ । नुःस्वादेः ॥ ६९ । श्रुवः शृ च ॥ ७० । स्वराद्रुधादेः परो नशब्दः ॥ ७१ । तनादेरुः ॥ ७२ । ना क्र्यादेः ॥ ७३ । आन व्यञ्जनान्ताद्धौ ॥ ७४ । आत्मनेपदानि भावकर्मणोः ॥ ७५ । कर्म्मवत् कर्म्मकर्त्ता ॥ ७६ । कर्त्तरि रुचादि-ङानुबन्धेभ्यः ॥

---

## ( अथ रुचादिसूत्राणि )

७६ । १ नेर्विशः ॥ ७६।२ परिव्यवेभ्यः क्रीञ ॥ ७६।३ वि-परा-भ्याञ्जिः ॥ ७६।४ आङो दाञ आनात्मप्रसारणे ॥ ७६।५ गमिन् वान्तौ ॥ ७६।६ नुप्रच्छौ ॥ ७६।७ अनुपरिभ्याञ्च क्रीड् ॥ ७६।८ समोऽकूजने ॥ ७६।९ अपस्किरः ॥ ७६।१० गत्यनुकरणे ह्रञ ॥ ७६।११ आशिषि नाथ ॥ ७६।१२ शपथे शप ॥ ७६।१३ प्रतिज्ञानि-र्णयप्रकाशनेषु स्थाः ॥ ७६।१४ समवप्रविभ्यः ॥ ७६।१५ उदोऽनूर्द्ध-चेष्टायाम् ॥ ७६।१६ उपान्मन्त्रणे ॥ ६६।१७ पथ्याराधनयोश्च ॥ ७६।१८ वा लिप्सायाम् ॥ ७६।१९ अकर्म्मकश्च ॥ ७६।२० समो गमृच्छिप्रच्छिश्रुस्वृविदर्त्तिदृशः ॥ ७६।२१ उपसर्गादस्यत्यूहो वा ॥ ७६।२२ आङो यमहनौ स्वाङ्गकर्मकौ च ॥ ७६।२३ व्युद्भ्यां तपः ॥

७६।२४ तपःकर्मकः ॥ ७६।२५ निसंव्युपेभ्यो ह्वाः ॥ ७६।२६ स्पर्द्धायामाङः ॥ ७६।२७ सूचनावक्षेपणसेवनसाहसयत्नकथोपयोगेषु कृञ् ॥ ७६।२८ अधेः शक्तौ ॥ ७६।२९ वेः शब्दकर्म्मकः ॥ ७६।३० अकर्म्मकश्च ॥ ७६।३१ पूजोत्क्षेपणोपनयनज्ञानभृतिविगणनव्ययेषु नीञ् ॥ ७६।३२ कर्त्तृस्थामूर्त्तकर्मकश्च ॥ ७६।३३ वृत्त्युत्साहतायनेषु क्रमः ॥ ७६।३४ परोपाभ्याम् ॥ ७६।३५ आङो ज्योतिरुद्गमे ॥ ७६।३६ वेः पादाभ्याम् ॥ ७६।३७ प्रोपाभ्यामारम्भे ॥ ७६।३८ अनुपसर्गो वा ॥ ७६।३९ निह्नवे ज्ञः ७६।४० अकर्म्मकश्च ॥ ७६।४१ सम्प्रतिभ्यामस्मृतौ ॥ ७६।४२ ज्ञानयत्नोपच्छन्दनेषु वदः ॥ ७६।४३ अनोरकर्म्मकः ॥ ७६।४४ विमतौ ॥ ७६।४५ व्यक्तं सहोक्तौ ॥ ७६।४६ तयोर्व्वा ॥ ७६।४७ अवादगिरः ॥ ७६।४८ समः प्रतिज्ञायाम् ७६।४९ किरादिग्रन्थिग्रन्थिसनन्ताः कर्म्मकर्त्तृस्थाः ॥ ७६।५० दुहः ७६।५१ अद्यतन्यां स्वरान्तश्च वा ॥ ७६।५२ स्नु नमौ स्वयम् ॥ ७६।५३ उदः सकर्म्मकश्चर ॥ ७६।५४ समस्तृतीयायुक्तः ॥ ७६।५५ दाण सा चेच्चतुर्थ्यर्थे ॥ ७६।५६ उद्वाहे उपयम ॥ ७६।५७ शदिरनि ॥ ७६।५८ आशीरद्यतन्योश्च मृङ् ॥ ७६।५९ अशने भुजिः ॥ ७६।६० समः क्ष्णुः ॥ ७६।६१ स्वराद्यन्तादुपसर्गादयज्ञपात्रेषु युजिर् ॥ ७६।६२ हेतुकर्त्तृभीस्म्योरिन् ॥ ७६।६३ प्रलम्भने गृधिवञ्च्योः ॥७६।६४ पूजाभिभवयोश्च लातेः ॥ ७६।६५ मिथ्याभियोगेऽभ्यासे कृञः ॥ ७६।६६ अनियमे चागतिहिंसाशब्दार्थहसः ॥

इति रुचादि सूत्राणि समाप्तानि ।

———

७७। चेक्रीयितान्तात् ॥ ७८। अय्यन्ताच्च ॥ ७९। इन्ञ् यजादेरुभयम् ॥ ८०। पूर्व्ववत् सनन्तात् ॥८१। शेषात् कर्त्तरि परस्मैपदम् ॥

इत्याख्याते द्वितीयः पादः समाप्तः ।

———

## तृतीयः पादः ।

८२ । द्विर्व्वचनमनभ्यासस्यैकस्वरस्याद्यस्य ॥ ८३ । स्वरादेर्द्वितीयस्य ॥ ८४ । न नवद्राः संयोगादयोऽये ॥ ८५ । पूर्व्वोऽभ्यासः ॥ ८६ । द्वयमभ्यस्तम् ॥ ८७ । जक्षादिश्च ॥ ८८ । चण् परोक्षाचेक्रीयितसनन्तेषु ॥ ८९ । जुहोत्यादीनां सार्व्वधातुके ॥ ९० । अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् ॥ ९१ । शिट्परोऽघोषः ॥ ९२ । द्वितीयचतुर्थयोः प्रथमतृतीयौ ॥ ९३ । ह्रोजः ॥ ९४ । कवर्गस्य चवर्गः ॥ ९५ । न कवतेश्चेक्रीयिते ॥ ९६ । ह्रस्वः ॥ ९७ । ऋवर्णस्याकारः ॥ ९८ । दीर्घइणः परोक्षायामगुणे ॥ ९९ । अस्यादेः सर्व्वत्र ॥ १०० । तस्मान्नागमः परादिरन्तश्चेत् संयोगः ॥ १०१ । ऋकारे च ॥ १०२ । अश्नोतेश्च ॥ १०३ । भवतेरः ॥ १०४ । निजि-विजि विषां गुणः सार्व्वधातुके ॥ १०५ । भृङ्-हाङ्-माङामित् ॥ १०६ । अर्त्तिपिपर्त्योश्च ॥ १०७ । सन्यवर्णस्य ॥ १०८ । उवर्णस्य जान्तस्थापवर्गपरस्यावर्णे ॥ १०९ । गुणश्चेक्रीयिते ॥११० । दीर्घोऽनागमस्य ॥१११ । वन्चिस्रन्सिध्वन्सि भ्रन्सिकसिपतिपदिस्कन्दामन्तो नीः ॥ ११२ । अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य ॥ ११३ । जपादीनाञ्च ॥ ११४ । चरफलोरुच्च परस्यास्य ॥ ११५ । ऋमतो रीः ॥ ११६ । अलोपे समानस्य सन्वल्लघुनीनि चण् परे ॥ ११७ । दीर्घो लघोः ॥ ११८ । अत् त्वरादीनाञ्च ॥ ११९ । इतो लोपोऽभ्यासस्य ॥१२० । सनि मि–मी–मा–दा–रभ–लभ–शकपतपदामिस् स्वरस्य ॥ १२१ । आप्नोतेरीः ॥ १२२ । दन्भेरिच्च ॥ १२३ । दिगि दयतेः परोक्षायाम् ॥

इत्याख्याते तृतीयः पादः समाप्तः ।

---

## चतुर्थः पादः ।

१२४ । स्वपरस्वरायाः सम्प्रसारणमन्तःस्थायाः ॥ १२५ । ग्रहिज्याश्वयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे ॥ १२६ । स्वपिव-

चियजादीनां यण्परोक्षाशीःषु ॥ १२७ । परोक्षायामभ्यासस्योभये-षाम् ॥ १२८ । व्यथेश्च ॥ १२९ । न वाश्वयोरगुणे च ॥ १३० । स्वपि-स्यमिव्येञां चेक्रीयिते ॥ १३१ । स्वापेश्चणि ॥ १३२ । ग्रहिस्वपिप्रच्छां सनि ॥ १३३ । चायः किश्चेक्रीयिते ॥ १३४ । प्यायः पिः परोक्षा-याम् ॥ १३५ । श्वयतेर्वा ॥ १३६ । कारिते च संश्चणोः ॥ १३७ । ह्वयतेर्नित्यम् ॥ १३८ । अभ्यस्तस्य च ॥ १३९ । द्युतिस्वाप्योरभ्या-सस्य ॥ १४० । न सम्प्रसारणे ॥ १४१ । वशेश्चेक्रीयिते ॥ १४२ । प्रच्छादीनां परोक्षायाम् ॥ १४३ । सन्ध्यक्षरान्तानामाकारोऽविकरणे ॥ १४४ । न व्ययतेः परोक्षायाम् ॥ १४५ । मीनातिमिनोतिदीङां गुणवृद्धिस्थाने ॥ १४६ । सनि दीङः ॥ १४७ । स्मिजिक्रीङामिनि ॥ १४८ । सृजिदृशोरागमोऽकारः स्वरात्परो धुटि गुणवृद्धिस्थाने ॥ १४९ । दीङोऽन्तो यकारः स्वरादावगुणे ॥ १५० । आलोपोऽसार्व-धातुके ॥ १५१ । इटि च ॥ १५२ । दामागायतिपिबतिस्थास्यतिजहा-तीनामीकारो व्यञ्जनादौ ॥ १५३ । आशिष्येकारः ॥ १५४ । अन उस् सिजभ्यस्तविदादिभ्योऽभुवः ॥ १५५ । इचस्तलोपः ॥ १५६ । हेरकारादहन्तेः ॥ १५७ । नोश्च विकरणादसंयोगात् ॥ १५८ । उकाराच्च ॥ १५९ । उकारलोपो वमोर्वा ॥ १६० । करोतेर्नित्यम् ॥ १६१ । ये च ॥ १६२ । अस्योकारः सार्वधातुकेऽगुणे ॥ १६३ । रुधादे-र्विकरणान्तस्य लोपः ॥ १६४ । अस्तेरादेः ॥ १६५ । अभ्यस्तानामा-कारस्य ॥ १६६ । क्र्यादीनां विकरणस्य ॥ १६७ । उभयेषामीकारो व्यञ्जनादावदः ॥ १६८ । इकारो दरिद्रातेः ॥ १६९ । लोपः सप्तम्यां जहातेः ॥ १७० । धुटि हन्तेः सार्वधातुके ॥ १७१ । शासेरिदुपधाया अण्व्यञ्जनयोः ॥ १७२ । हन्तेर्जहौ ॥ १७३ । दास्त्योरेऽभ्यासलो-पश्च ॥ १७४ । अस्यैकव्यञ्जनमध्येऽनादेशादेः परोक्षायाम् ॥ १७५ । थलि च सेटि ॥ १७६ । तॄफलभजत्रपश्रन्थिग्रन्थिदन्भीनां च ॥ १७७ । न शसददवादिगुणिनाम् ॥ १७८ । स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ ॥ १७९ । अभ्यासस्यासवर्णे ॥ १८० । नोर्विकरणस्य ॥

१८१ । य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य ॥ १८२ । इणश्च ॥ १८३ । नोर्वकारो विकरणस्य ॥ १८४ । जुहोतेः सार्वधातुके ॥ १८५ । भुवो वोऽन्तः परोक्षाद्यतन्योः ॥ १८६ । गोहेरूदुपधायाः ॥ १८७ । दुषेः कारिते ॥ १८८ । मानुबन्धानां ह्रस्वः ॥ १८९ । इचि वा ॥ १९० । जनिवध्योश्च ॥ १९१ । ओतो यिन्नायी स्वरवत् ॥ १९२ । औतश्च ॥ १९३ । नाम्यन्तानां यणायियिन् आशीश्चिचेक्रीयितेषु ये दीर्घः ॥ १९४ । इणोऽनुपसृष्टस्य ॥ १९५ । ऋत ईदन्तश्चिचेक्रीयितयिन्नायिषु ॥ १९६ । इरन्यगुणे ॥ १९७ । यणाशिषोर्ये ॥ १९८ । गुणोऽर्तिसंयोगाद्योः ॥ १९९ । चेक्रीयिते च ॥ २०० । घ्राध्मोरीः ॥ २०१ । यिन्यवर्णस्य ॥ २०२ । अदेर्घस्लृ सनद्यतन्योः ॥ २०३ । वा परोक्षायाम् ॥ २०४ । वेञश्च वयिः ॥ २०५ । हन्तेर्वधिराशिषि ॥ २०६ । अद्यतन्यां च ॥ २०७ । इणो गा ॥ २०८ । इङः परोक्षायाम् ॥ २०९ । सनीणिङोर्गमिः ॥ २१० । अस्तेर्भूरसार्वधातुके ॥ २११ । ब्रुवो वचिः ॥ २१२ । चक्षिङः ख्याञ् ॥ २१३ । वा परोक्षायाम् ॥ २१४ । अजेर्वीः ॥ २१५ । अदादेर्लुग् विकरणस्य ॥ २१६ । इणस्थादापिबतिभूभ्यः सिचः परस्मै ॥

इत्याख्याते चतुर्थः पादः समाप्तः ।

---

## पञ्चमः पादः ।

२१७ । नाम्यन्तयोर्धातुविकरणयोर्गुणः ॥ २१८ । नामिनश्चोपधाया लघोः ॥ २१९ । अनि च विकरणे ॥ २२० । करोतेः ॥ २२१ । मिदेः ॥ २२२ । अभ्यस्तानामुसि ॥ २२३ । न णकारानुबन्धचेक्रीयितयोः ॥ २२४ । अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके ॥ २२५ । सनि चानिटि ॥ २२६ । सिजाशिषोश्चात्मने ॥ २२७ । ऋदन्तानां च ॥ २२८ । स्थादोश्च ॥ २२९ । भुवः सिज्लुकि ॥ २३० । सूतेः पञ्चम्याम् ॥ २३१ । दीधीवेव्योश्च ॥ २३२ । रुदविद-

मुषां सनि ॥ २३३ । नाम्यन्तानामनिटाम् ॥ २३४ । सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः ॥ २३५ । द्वित्वबहुत्वयोश्च परस्मै ॥ २३६ । परोक्षायां च ॥ २३७ । सर्वत्रात्मने ॥ ३८ । आशिषि च परस्मै ॥ १३९ । सप्तम्यां च ॥ २४० । ह्यौ च ॥ २४१ । तुदादेरनि ॥ २४२ । आमि विदेरेव ॥ २४३ । कुटादेरनिनिचट्सु ॥ २४४ । विजेरिटि ॥ २४५ । स्थादोरिरद्यतन्यामात्मने ॥ २४६ । मुचादेरागमो नकारः स्वरादनि विकरणे ॥ २४७ । मसूजिनशोर्धुटि ॥ २४८ । रधिजभोः स्वरे ॥ २४९ । नेटि रधेरपरोक्षायाम् ॥ २५० । रभिलभोरविकरणपरोक्षयोः ॥ २५१ । हुधुड्भ्यां हेर्धिः ॥ २५२ । अस्तेः ॥ २५३ । शा शास्तेश्च ॥ २५४ । लोपोऽभ्यस्तादन्तिनः ॥ २५५ । आत्मने चानकारात् ॥ २५६ । शेतेरिरन्तेरादिः ॥ २५७ । आकारादट औ ॥ २५८ । ऋदन्तस्येरगुणे ॥ २५९ । उरोष्ठ्योपधस्य च ॥ २६० । इन्यसमानलोपोपधाया ह्रस्वश्चणि ॥ २६१ । न शास्वृदनुबन्धानाम् ॥ २६२ । लोपः पिबतेरीच्चाभ्यासस्य ॥ २६३ । तिष्ठतेरित् ॥ २६४ । जिघ्रतेर्वा ॥

इत्याख्याते पञ्चमः पादः समाप्तः ।

---

## षष्ठः पादः ।

२६५ । अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ॥ २६६ । नशब्दाच्च विकरणात् ॥ २६७ । परोक्षायामिन्धिश्रन्थिग्रन्थिदन्भीनामगुणे ॥ २६८ । दन्शिसन्जिस्वन्जिरन्जीनामनि ॥ २६९ । अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु ॥ २७० । सिचि परस्मै स्वरान्तानाम् ॥ २७१ । व्यञ्जनान्तानामनिटाम् ॥ २७२ । अस्य च दीर्घः ॥ २७३ । वदव्रजरलन्तानाम् ॥ २७४ । श्विजाग्रोर्गुणः ॥ २७५ । अर्त्तिसर्त्तोरणि ॥ २७६ । जागर्तेः कारिते ॥ २७७ । यणाशिषोर्ये ॥ २७८ । परोक्षायामगुणे ॥ २७९ । ऋतश्च संयोगादेः ॥ २८० । ऋदन्तानां

च ॥ २८१। ऋच्छ ऋतः ॥ २८२। शीङः सार्वधातुके ॥ २८३। अयीर्ये ॥ २८४। आर्यिरिच्यादन्तानाम् ॥ २८५। शाछासाह्वाव्यावे-पामिनि ॥ २८६। अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यादन्तानामन्तः पो यलोपो गुणश्च नामिनाम् ॥ २८७। पातेर्लोऽन्तः ॥ २८८। धूञ्प्रीणात्योर्नः ॥ २८९। स्फायेर्वादेशः ॥ २९०। शदेरगतौ तः ॥ २९१। हन्तेस्तः ॥ २९२। हस्य हन्तेर्घिरिनिचोः ॥ २९३। लुप्तोपधस्य च ॥ २९४। अभ्यासाच्च ॥ २९५। जेर्गिः सन्परोक्षयोः ॥२९६। चेः कि वा ॥ २९७। सणोऽलोपः स्वरेऽबहुत्वे ॥ २९८। दरिद्रातेरसार्वधातुके ॥ २९९। व्रश्चिमसृजोर्धुटि ॥ ३००। यन्योकारस्य ॥ ३०१। आकारस्योसि ॥३०२। संध्यक्षरे च ॥३०३। अस्तेः सौ ॥ ३०४। असन्ध्यक्षरयोरस्य तौ तल्लोपश्च ॥ ३०५। दीधीवेव्योरिवर्णयकारयोः ॥ ३०६। नामि व्यञ्जनान्तादायेरादेः ॥ ३०७। गमहनजनखनघसामुपधायाः स्वरादावनण्य-गुणे ॥ ३०८। कारितस्यानामिड् विकरणे ॥ ३०९। यस्यापत्यप्रत्ययस्यास्वरपूर्वस्य यिन्न्यायिषु ॥ ३१०। न लोपश्च ॥ ३११। व्यञ्जनादिस्योः ॥ ३१२ ॥ यस्याननि ॥ ३१३ अस्य च लोपः ॥ ३१४। सिचो धकारे ॥ ३१५। धुटश्च धुटि ॥ ३१६। ह्रस्वाच्चानिटः ॥ ३१७। इटश्चेटि ॥ ३१८। स्कोः संयोगाद्योरन्ते च ॥ ३१९। चवर्गस्य किरसवर्णे ॥ ३२०। हो ढः ॥ ३२१। दादेर्घः ॥ ३२२। नहेर्धः ॥ ३२३। भृजादीनां षः ॥ ३२४। छ्शोश्च ॥ ३२५। भाषितपुंस्कं पुंवदायौ ॥ ३२६। आदातामाथामादेरिः ॥ ३२७। आते आथे इति च ॥ ३२८। याशब्दस्य च सप्तम्याः ॥ ३२९। यामुयुसोरियमियुसौ ॥ ३३०। शमादीनां दीर्घो यनि ॥ ३३१। ष्ठिवुक्लम्वाचमामनि ॥ ३३२। क्रमः परस्मै ॥ ३३३ गमिष्यमां छः ॥ ३३४। पः पिबः ॥ ३३५। घ्रो जिघ्रः ॥ ३३६। ध्मो धमः ॥ ३३७। स्थस्तिष्ठः ॥ ३३८। म्नो मनः ॥३३९। दाणो यच्छः ॥ ३४०। दृशेः पश्यः ॥ ३४१। अर्तेऋच्छः ॥ ३४२। सर्त्तेर्धावः ॥ ३४३। शदेः शीयः ॥ ३४४। सदेः सीदः ॥ ३४५। जा जनेर्विकरणे ॥ ३४६। ज्ञश्च ॥ ३४७। प्वादीनां ह्रस्वः ॥ ३४८। उतो वृद्धिर्व्यञ्जनादौ

गुणिनि सार्वधातुके ॥ ३४९ । ऊर्णोतेर्गुणः ॥ ३५० । ह्यस्तन्यां च ॥ ३५१ । तृहेरिड् विकरणात् ॥ ३५२ । ब्रुव ईड् वचनादिः ॥ ३५३ । अस्तेर्दिस्योः ॥ ३५४ । सिचः ॥ ३५५ । रुदादिभ्यश्च ॥ ३५६ । आदोऽट् ॥ ३५७ । सस्य सेऽसार्वधातुके तः ॥ ३५८ । अणि वचेरोदुपधायाः ॥ ३५९ । अस्यतेः स्योऽन्तः ॥ ३६० । पतेः पप्तिः ॥ ३६१ । कृपे रो लः ॥ ३६२ । गिरतेश्चेक्रीयिते ॥ ३६३ । वा स्वरे ॥ ३६४ । तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वं सिध्वोः ॥ ३६५ । लोपे च दिस्योः ॥ ३६६ । सध्वोश्च दधातेः ॥

इत्याख्याते षष्ठः पादः समाप्तः ॥

---

## सप्तमः पादः ।

३६७ । इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः ॥ ३६८ । स्नुक्रमिभ्यां परस्मै ॥ ३६९ । रुदादेः सार्वधातुके ॥ ३७० । ईशः से ॥ ३७१ । ईड्जनोः सध्वे च ॥ ३७२ । से गमः परस्मै ॥ ३७३ । हनृदन्तात् स्ये ॥ ३७४ । अञ्जेः सिचि ॥ ३७५ । स्तुसुधुञ्भ्यः परस्मै ॥ ३७६ । यमिरमिनम्यादन्तानां सिरन्तश्च ॥ ३७७ । स्मिङ्पूङ्रञ्ज-शूकृगृदृधृप्रच्छां सनि ॥ ३७८ । इटो दीर्घो ग्रहेरपरोक्षायाम् ॥ ३७९ । अनिडेकस्वरादातः ॥ ३८० । इवर्णादश्विश्रिडीङ्शीङः ॥ ३८१ । उतोऽयुरुणुस्नुतुक्ष्णुवः ॥ ३८२ । ऋतोऽवृङ्वृञः ॥ ३८३ । शकेः कात् ॥ ३८४ । पचिवचिसिचिरिचिमुचेश्चात् ॥ ३८५ । प्रच्छेश्छात् ॥ ३८६ । युजिरुजिरञ्जिभुजिभजिभञ्जिसञ्जित्यजिभ्रस्जियजिमस्-जिसृजिनिजिविजिस्वञ्जेर्जात् ॥ ३८७ । अदितुदिनुदिक्षुदिस्विद्यति-विद्यतिविन्दतिविनत्तिछिदिभिदिहदिशदिसदिपदिस्कन्दिखिदेर्दात् ॥ ३८८ । राधिरुधिक्रुधिक्षुधिबन्धिशुधिसिध्यतिबुध्यतियुधिव्यधिसा-धेर्धात् ॥ ३८९ । हनिमन्यतेर्नात् ॥ ३९० । आपितपितिपिस्वपिवपिशपि-छिपिक्षिपितिपिलिपिलुपिसृपेः पात् ॥ ३९१ । यभिरभिलभेर्भात् ॥ ३९२ । यमिरमिनमिगमेर्मात् ॥ ३९३ । रिशिरुशिक्रुशिलिशिविशिदि-

म्रिहशिस्पृशिमृशिदन्शेः शात् ॥ ३९४ । द्विषिपुष्यतिकृषिश्लिष्यति-त्विषिपिषिविषिशिषिशुषितुषिदुषेः षात् ॥ ३९५ । वसतिघसेः सात् ॥ ३९६ । दहिदिहिदुहिमिहिरिहिरुहिलिहिलुहिनहिवहेर्हात् ॥ ३९७ । ग्रहगुहोः सनि ॥ ३९८ । उवर्णान्ताच्च ॥ ३९९ । इवन्तधभ्रस्जदन्भुश्रियूर्णु भरज्ञपिसनितनिपतिदरिद्रां वा ॥ ४०० । भुवः सिज्लुकि ॥ ४०१ । सृदृभृस्तुद्रुश्रुस्रुव एव परोक्षायाम् ॥ ४०२ । थल्य कारात् ॥ ४०३ । कृञोऽसुटः ॥ ४०४ । सुट् भूषणे सम्परि पात् ॥

इत्याख्याते सप्तमः पादः समाप्तः ॥

# अष्टमः पादः ।

४०५ । पदान्ते धुटां प्रथमः ॥ ४०६ । रसकारयोर्विसृष्टः ॥ ४०७ । घढधभेभ्यस्तथोर्धोऽधः ॥ ४०८ । षढोः कः से ॥ ४०९ । तवर्गस्य षटवर्गाटवर्गः ॥ ४१० । ढेढलोपो दीर्घश्चोपधायाः ॥ ४११ । सहिवहोरोदवर्णस्य ॥ ४१२ । धुटां तृतीयश्चतुर्थेषु ॥ ४१३ । अघोषेष्वशिटां प्रथमः ॥ ४१४ । भृजः स्वरात् स्वरे द्विः ॥ ४१५ । अस्य वमोर्दीर्घः ॥ ४१६ । स्वरान्तानां सनि ॥ ४१७ । इनिङ्गमोरुपधायाः ॥ ४१८ । नामिनोर्वोरकुर्छुरोर्व्यञ्जने ॥ ४१९ । सस्य ह्यस्तन्यां दौतः ॥ ४२० । अड्धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु ॥ ४२१ । स्वरादीनां वृद्धिरादेः ॥ ४२२ । अवर्णस्याकारः ॥ ४२३ । अस्तेः ॥ ४२४ । एतेर्ये ॥ ४२५ । न मा-मास्मयोगे ॥ ४२६ । नाम्यन्ताधातोराशीरद्यतनीपरोक्षासु धो ढः ॥ ४२७ । मर्जो मार्जिः ॥ ४२८ । धात्वादेः षः सः ॥ ४२९ । णो नः ॥ ४३० । निमित्तात् प्रत्ययविकारागमस्थः सः षत्वम् ॥ ४३१ । शासि-वसि-घसीनाञ्च । ४३२ । स्तौतीनन्तयोरेव सनि ॥ ४३३ । लुग्लोपे न प्रत्यय-कृतम् ॥ ४३४ । स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने ॥ ४३५ । योऽनुबन्धोऽप्रयोगी ॥ ४३६ । शिड़िति शादयः ॥ ४३७ । संप्रसारणं यवृतोऽन्तस्थानिमित्ताः ॥ ४३८ । अर् पूर्वे द्वे सन्ध्यक्षरे च गुणः ॥ ४३९ । आरुत्तरे च वृद्धिः ॥

इत्याख्याते अष्टमः पादः समाप्तः ।

# कृत्प्रकरणम् ।

## प्रथमः पादः ।

१। सिद्धिरिज्वण् णानुबन्धे ॥ २। हन्तेस्तः ॥ ३। न सेटोऽम-न्तस्यावमि-कमि-चमाम् ॥ ४। प्रत्ययलुकाञ्चानाम् ॥ ५। सार्व्वधा-तुकवच्छे ॥ ६। ङे न गुणः ॥ ७। के यणवच्च योक्तवर्ज्जम् ॥ ८। जागुः कृत्यशन्तृङ्न्योः ॥ ६। गुणी क्त्वा सेड्रुदादिक्षुधकुषक्लिश-गुधमृड्मृदवदवस ग्रहाम् ॥ १०। स्कन्दस्यन्द्रोः क्त्वा ॥ ११। व्यञ्ज-नादेव्र्यु पधस्यावोवा ॥ १२। तृषिमृषिकृशिवञ्चिलुञ्चितञ्च ॥ १३। थ-फान्तानाञ्चानुषङ्गिनाम् ॥ १४। जान्तनशामनिटाम् ॥ १५। शीङ्-पूङ्-दृशिक्ष्विदिस्विदिमिदां निष्ठा सेट् ॥ १६। मृषः क्षमायाम् ॥ १७। भावादिकर्म्मणोर्व्वोदुपधात् ॥ १८। ह्लादो ह्रस्वः ॥ १६। छादेर्घेस्-मन्वन्क्विप् सु च ॥ २०। दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे ॥ २१। नामिनोऽम्प्रत्ययवच्चैकस्वरस्य ॥ २२। ह्रस्वारुषोर्म्मोऽन्तः ॥ २३। सत्यागदास्तूनां कारे ॥ २४। गिलेऽगिलस्य ॥ २५। उपसर्गादसुदुर्भ्या लभेः प्राग्भाव् खलघञोः ॥ २६। आङो यि ॥ २७। उपात् प्रशंसा-याम् ॥ २८। वा कृति रात्रेः ॥ २६। पुरन्दरवाचंयमसर्व्वसहद्विषन्त-पाश्च ॥ ३०। धातोस्तोऽन्तः पानुबन्धे ॥ ३१। ओदौद्भ्यां कृद्यः स्वरवत् ॥ ३२। जिक्ष्योः शक्ये ॥ ३३। क्रीङस्तदर्थे ॥ ३४। वेर्लोपोऽ-पृक्तस्य ॥ ३५। य्वोर्व्यञ्जनेऽये ॥ ३६। निष्ठेटीनः ॥ ३७। नाल्वि-च्यवाय्यान्तेत्नुषु ॥ ३८। लघुपूर्व्वोऽय्यपि ॥ ३६। मीनात्यादिदा-दीनामा ॥ ४०। स्तेर्दीर्घः ॥ ४१। निष्ठायाञ्च ॥ ४२। स्फायः स्फीः ॥ ४३। प्यायः पीः स्वाङ्गे ॥ ४४। शृतं पाके ॥ ४५। प्रस्त्यः संप्रसार-णम् ॥ ४६। द्रवघनस्पर्शयोः श्यः ॥ ४७। प्रतेश्च ॥ ४८। वाभ्यवा-भ्याम् ॥ ४६। नवेज्योर्यपि ॥ ५०। व्येश्च ॥ ५१। सम्परिभ्यां वा ॥ ५२। तह्रीर्घमन्त्यम् ॥ ५३। वः क्वौ ॥ ५४। धाप्योः ॥ ५५। पञ्चमोपधाया धुटि चागुणे ॥ ५६। छ्वोः शूठौ पञ्चमे च ॥ ५७।

श्रि-व्यवि-मविज्वरि-त्वरामुपधायाः ॥५८। राल्लोप्यौ । ५९। वनतित-नोत्यादि-प्रतिषिद्धे टां धुटि पञ्चमोऽच्चातः ॥ ६० । यपि च ॥ ६१ । वामः ॥ ६२ । न तिकि दीर्घश्च ॥ ६३ । उन्देर्मनि ॥ ६४ । घञीन्धेः ॥ ६५ । स्यदो जवे ॥ ६६ । रनूजेर्भावकरणयोः ॥ ६७ । वुषूघिनिणोश्च ६८ । हूंहेः स्वरेऽनिटि वा ॥ ६९ । यम-मन-तनगमां क्वौ ॥ ७० । विड्-वनोरा ॥ ७१ । धुटि खनिसनिजनाम् ॥ ७२ । ये वा ॥ ७३ सनस्ति कि वा ॥ ७४ । स्फुरिस्फुल्योर्घञ्योतः ॥ ७५ । इज्जहातेः क्त्वि ॥ ७६ । घतिस्यतिमास्थां त्यगुणे ॥ ७७ । वाच्छाशोः ॥ ७८ । दधातेर्हिः ७९ । चरफलोरुदस्य ॥ ८० । ददूदोऽधः ॥ ८१ । स्वरादुपसर्गात् तः ॥ ८२ । यपि चादो जग्धिः ॥ ८३ । घञलोर्घस्लृः ॥ ८४ । क्तक्तवन्तू निष्ठा ॥

इति कृत्सु प्रथमः पादः समाप्तः ॥

---

## द्वितीयः पादः ।

८५ । धातोः ॥ ८६ । सप्तम्युक्तमुपपदम् ॥ ८७ । तत् प्राङ्नाम चेत् ॥ ८८ । तस्य तेन समासः ॥ ८९ । नाव्ययेनानमा ॥ ९० । तृतीयादीनां वा ॥ ९१ । कृत् ॥ ९२ । वाऽसरूपोऽस्त्रियाम् ॥ ९३ । तव्यानीयौ ॥ ९४ । स्वराद्‌यः ॥ ९५ । शकिसहिपवर्गान्ताच्च ॥ ९६ । आत्-खनोरिच्च ॥ ९७ । यमिमदिगदान्त्वनुपसर्गे ॥ ९८ । चरेराङि चागुरौ ॥ ९९ । पण्यावद्यवर्य्याविक्रेयगर्ह्यानिरोधेषु ॥ १००। वह्यं करणे १०१ । अर्य्यः स्वामिवैश्ययोः ॥ १०२ । उपसर्य्या काल्या प्रजने ॥ १०३ । अजर्य्य संगते च ॥ १०४ । नाम्नि वदः क्यप् च ॥ १०५ । भावे भुवः ॥ १०६ । हनस्त च ॥ १०७ । वृङ्-दृ-जुषीणशासुस्तुगुहां क्यप् ॥ १०८ । ऋदुपधाच्चाकॢपिचृतेः ॥ १०९ । भृञोऽसंज्ञायाम् ॥ ११० ग्रहोऽपि-प्रतिभ्यां वा ॥ १११। पदपच्ययोश्च ॥ ११२। वौ नीपूभ्यां कल्कमुञ्जयोः ॥ ११३ । कृवृषि-मृजां वा ॥ ११४ । सूर्य्य-रु-

ण्यान्यध्याः कर्त्तरि ॥ ११५ । भिद्योद्ध्यौ नदे ॥ ११६ । पुष्यसिध्यौ नक्षत्रे ॥ ११७ । युग्यं पत्रे ॥ ११८ । कृष्ट-पच्यकुप्ये संज्ञायाम् ॥ ११९। ऋवर्णाव्यञ्जनान्ताद् घ्यण् ॥१२०। आसु-यु-वपि-रपि-लपि-त्रपि-दभि-चमाञ्च ॥ १२१। उवर्णादावश्यके ॥ १२२ । पाय्योर्मानसा-मिधेन्योः ॥ १२३ । आङोर्नियोऽसम्मतानिसयोः स्वरवत् ॥ १२४ । सञ्चिकुण्डपः क्रतौ ॥ १२५ । राजसूयश्च ॥ १२६ । सान्नाय्यनि-काय्यौ हविर्निवासयोः ॥ १२७ । परिचाय्योपचाय्यावग्नौ ॥ १२८ । चित्याग्निचित्ये च ॥ १२९ । अमावस्या वा ॥ १३० । ते कृत्याः ॥ १३१ । वुण्तृचौ ॥ १३२ । अच् पचादिभ्यश्च ॥ १३३ । नन्द्यादेर्युः ॥ १३४ । ग्रहादेर्णिन् ॥१३५। नाम्युपधप्रीकृगृज्ञां कः ॥ १३६। उपसर्गे त्वातो डः ॥ १३७ । घेड्दृशिपाघ्राध्मः शः ॥ १३८ । साहिसातिवेद्युदेजिचेतिधारि-पारिलिम्पविन्दां त्वनुपसर्गे ॥ १३९ । वा ज्वलादिदुनीभुवो णः ॥ १४० । समाङो स्रुवः ॥ १४१ । अवे हृसोः ॥ १४२ । दिहिलिहिश्लिषि-श्वसिव्यध्यतीणश्यातां च ॥ १४३ । ग्रहेर्वा ॥ १४४ । गेहेत्वक् ॥ १४५ । शिल्पिनि वुष् ॥ १४६ । गस्थकः ॥ १४७ । ण्युट् च ॥ १४८ । हः कालव्रीह्योः ॥ १४९ । आशिष्यकः ॥ १५० । प्रुसृल्वां साधुकारिणि ॥

इति कृत्सु द्वितीयः पादः समाप्तः ॥

## तृतीयः पादः ।

१५१ । कर्मण्यण् ॥ १५२ । ह्वावामश्च ॥ १५३। शीलिकामिभक्ष्या-चरिभ्यो णः ॥ १५४ । आतोऽनुपसर्गात् कः ॥ १५५ । नाम्नि स्थश्च ॥ १५६ । तुन्दशोकयोः परिमृजापनुदोः ॥ १५७ । प्रे दाज्ञः ॥ १५८ । समि ख्यः ॥ १५९ । गः ष्टक् ॥ १६० । सुरासीध्वोः पिबतेः ॥ १६१ । हृञोऽज् वयोऽनुद्यमनयोः ॥ १६२ । आङि ताच्छील्ये ॥१६३। अर्हश्च ॥ १६४ । धृञः प्रहरणे चादण्डसूत्रयोः ॥ १६५ । धनुर्दण्डत्सरुलाङ्गला-ङ्कुशयष्टितोमरेषु ग्रहेर्वा ॥ १६६ । स्तम्बकर्णयो रमिजपोः ॥ १६७ । शम्पूर्वभ्य संज्ञायाम् ॥ १६८ । शीङोऽधिकरणे च ॥ १६९ । चरेष्टः ॥

१७० । पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ १७१ । पूर्वं कर्त्तरि ॥ १७२ । कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ १७३ । तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्र-कर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुःसंख्यासु च ॥ १७४ । भृतौ कर्मशब्दे ॥ १७५ । इः स्तम्बशकृतोः ॥ १७६ । हरतेर्दृ-तिनाथयोः पशौ ॥ १७७ । फलेमलरजःसु ग्रहेः ॥ १७८ । देववातयो-रापेः ॥ १७९ । आत्मोदरकुक्षिषु भृञः खिः ॥ १८० । एजेः खश् ॥ १८१ । शुनीस्तनमुञ्जकूलास्य पुष्पेषु धेटः ॥ १८२ । नाडीकरमुष्टि-पाणिनासिकासु ध्मश्च ॥ १८३ । विध्वरुस्तिलेषु तुदः ॥ १८४ । असूर्य्योग्रयोर्दृशः ॥ १८५ । ललाटे तपः ॥ १८६ । मितनखपरिमाणेषु पचः ॥ १८७ । कूलउद्रुजोद्वहोः ॥ १८८ । वहंलिहाभ्रंलिहपरन्त-पेरम्मदाश्च ॥ १८९ । वदः खः प्रियवशयोः ॥१९० । सर्वकूलाभ्रकरीषेषु कषः ॥ १९१ भयर्त्तिमेघेषु कृञः ॥ १९२ । क्षेमप्रियमद्रे ष्वण् च ॥ १९३ । भावकरणयोस्त्वाशिते भुवः ॥ १९४ । नाम्नि तृभृवृजिधारि-तपिदमिसहां संज्ञायाम् ॥ ॥१९५ । गमश्च ॥ १९६ । उरोविहायसोरु-रविहौ च ॥ १९७ । डोऽसंज्ञायामपि ॥ १९८ । विहङ्गतुरङ्गभुजङ्गाश्च ॥ १९९ । अन्यतोऽपि च ॥ २०० । हन्तेः कर्मण्याशीर्गत्योः ॥ २०१ ॥ अपात् क्लेशतमसोः ॥ २०२ । कुमारशीर्षयोर्णिन् ॥ २०३ । टग् लक्षणे जायापत्योः ॥ २०४ । अमनुष्यकर्तृकेऽपि च ॥ २०५ । हस्तिबाहुक-पाटेषु शक्तौ ॥ २०६ । पाणिघताडघौ शिल्पिनि ॥ २०७ । नग्नपलित-प्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युट् करणे ॥ २०८ । भुवः खिष्णुखुकञौ कर्त्तरि ॥ २०९ । भजो विण् ॥ २१० । सहश्छन्दसि ॥ २११ । वहश्च ॥ २१२ । अनसि डश्च ॥ २१३ । दुहः को घश्च ॥ २१४ । विट् क्रमिगमिखनिसनिजनाम् ॥ २१५ । मन्त्रे श्वेतवहुक्थशंसपुरोडा-शावयजिभ्यो विण् ॥२१६। आतो मन् क्वनिब्वनिब्विचः ॥२१७। अन्ये-भ्योऽपि दृश्यन्ते ॥ २१८ । क्विप् च ॥ २१९ । वहे पञ्चम्यां भ्रंशेः ॥ २२० । स्पृशोऽनुदके ॥ २२१ । अदोऽनन्ने ॥ २२२ । क्रव्ये च ॥ २२३ ।

ऋत्विग्दधृक्स्रग्दिगुष्णिहश्च ॥ २२४ । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि ॥ २२५ । कर्मण्युपमाने सदादौ दृशष्टक्सकौ च ॥ २२६ । नाम्न्यजातौ णिनिस्ताच्छील्ये ॥ २२७ । कर्तर्युपमाने ॥ १२८ । व्रताभीक्ष्ण्ययोश्च ॥ २२९ । मनः पुंवच्चात्र ॥ २३० । खश्चात्मने ॥ २३१ । करणेऽतीते यजः ॥ २३२ । कर्मणि हनः कुत्सायाम् ॥ २३३ । क्विब्ब्रह्मभ्रूणवृत्रेषु ॥ २३४ । कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥ २३५ । सोमे सुञः ॥ २३६। चेरग्नौ ॥ २३७ । विक्रिय इन् कुत्सायाम् ॥ २३८ । दृशेः क्वनिप् ॥ २३९ सहराज्ञोर्युधः ॥ २४० । कृञश्च ॥ २४१ । सप्तमीपञ्चम्यन्ते जनेर्डः ॥ २४२ । अन्यत्रापि च ॥ २४३ । निष्ठा ॥ २४४ । ङ्वनिप् सुयजोः ॥ २४५ । जीर्य्यतेरन्तन् ॥

इति कृत्सु तृतीयः पादः समाप्तः ॥

## चतुर्थः पादः ।

२४६ । क्वन्सुकानौ परोक्षावच्च ॥ २४७ । वर्त्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः ॥ २४८ । लक्षणहेत्वोः क्रियायाः ॥ २४९ । वेत्तेः शन्तृ वंन्सुः ॥ २५०। आनोऽत्रात्मने ॥ २५१ । ई तस्यासः ॥ २५२ । आन्मोऽन्त आने ॥ २५३ । पूङ्यजोः शानङ् ॥ २५४। शक्तिवयस्ताच्छील्ये॥ २५५ । इङ्धारिभ्यां शन्तृङ्ङकृच्छ्रे ॥ २५६। द्विषः शत्रौ ॥ २५७ । सूञो यज्ञसंयोगे॥ २५८ । अर्हः प्रशंसायाम् ॥ २५९ । तच्छीलतद्धर्म्मतत्साधुकारिष्वाक्वेः ॥ २६० । तृन् ॥ २६१ । भ्राज्यलंकृञ्भूसहिरुचिवृधिचरिप्रजनापत्रपेनामिष्णुच् ॥ २६२ । मदिपतिपचामुदि ॥ २६३ । जिभुवोः स्नुक् ॥ २६४ । ग्लाम्लास्थाक्षिपचिपरिमृजां स्नुः ॥ २६५ । त्रसिगृधिधृषिक्षिपां क्नुः ॥ २६६ । शमाष्टानां घिनिण् ॥ २६७ । युजभजभुजद्विषद्रुहदुहदुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरन्जाभ्याङ्हनाञ्च ॥ २६८ । समि सृजिपृचिज्वरित्वराम् ॥ २६९ । वौ विचकत्थस्रन्भुकषल षाम् ॥ २७० । प्रं-द्रु मथवदवसलपाम् ॥ २७१ । परौ सृदहोः ॥ २७२ । क्षिपरटवदवादिदेविभ्यो वुण् च ॥ २७३ । निन्दहिंसक्लिशखादानेकस्वरविनाशव्या-

भाषाम्रूयां वुञ् ॥ २७४ । देविक्रुशोश्चोपसर्गे ॥ २७५ । क्रुधिमण्डिचलिशब्दार्थेभ्यो युः ॥ २७६ । रुचादेश्च व्यञ्जनादेः ॥ २७७ । जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलष(स)पतपदाम् ॥ २७८ । न यान्तसूददीपदीक्षाम् ॥ २७९ । शृ-कमगमहनवृषभूस्थालषपतपदामुकञ् ॥ २८० । तृङ्भृक्षिलुण्टिजल्पिकुट्टां षाकः ॥ २८१ । प्रे जुसुवोरिन् ॥ २८२ । जीनृदृक्षिविश्रिपरिभूवमाभ्यमाव्यथाञ्च ॥ २८३ । दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलुः ॥ २८४ । शदिसदिभेड्दासिभ्यो रुः ॥ २८५ । अदिघसां मरक् ॥ २८६ । भिदिभासि-भन्जां घुरः ॥ २८७ । छिदिभिदिविदां कुरः ॥ २८८ । जागुरूकः ॥ २८९ । चेक्रीयितान्तानां यजि जपिदन्शिवदाम् ॥ २९० । तस्य लुगचि ॥ २९१ । ततो यातेर्वरः ॥ २९२ । कसिपिसि[ष]भासीशस्थाप्रमदाञ्च ॥ २९३ । सृजीणनशां क्वरप् ॥ २९४ । गमस्त च ॥ २९५ । दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः ॥ २९६ । सनन्ताशंसिभिक्षामुः ॥ २९७ । विन्दिच्छु च ॥ २९८ । आद्दवर्णोपधालोपिनां किर्द्वे च ॥ २९९ । तृषिधृषिस्वपां नजिङ् ॥ ३०० । इवन्द्योरारुः ॥ ३०१ । भियोरुक्लुकौ च ॥ ३०२ । क्विब्भ्राजिधुर्वीभासाम् ॥ ३०३ । द्युति गमोर्द्वे च ॥ ३०४ । भुवोडुर्विशंप्रे षु ॥ ३०५ । कर्म्मणि धेटः ष्ट्रन् ॥ ३०६ । नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतदन्शनहां करणे ॥ ३०७ । हलशूकरयोः पुवः ॥ ३०८ । अर्त्तिलुधूसूखनिसहिचरिभ्य इत्रन् ॥ ३०९ । पुवः संज्ञायाम् ॥ ३१० । ऋषिदेवतयोः कर्त्तरि ॥ ३११ । अथानुबन्ध-मति-बुद्धिपूजार्थेभ्यः क्तः ३१२ । उणादयो: भूतेऽपि ॥ ३१३ । भविष्यति गम्यादयः ॥ ३१४ । वुणतुमौ क्रियायां क्रियार्थायाम् ॥ ३१५ । भाववाचिनश्च ॥ ३१६ । कर्म्मणि चाण् ॥ ३१७ । अन्त्रानौ स्यसंहितौ शेषे च ॥

इति कृत्सु चतुर्थः पादः समाप्तः ।

## पञ्चमः पादः ।

३१८ । पदरुजविशस्पृशोर्वा घञ् ॥ ३१९ । सृ-स्थिरव्याध्योः ॥ ३२० । भावे ॥ ३२१ । अकर्त्तरि च कारके संज्ञायाम् ॥ ३२२ । सर्व्व-

स्थाद् परिमाणे ॥ ३२३ । इङश्भ्याञ्च ॥ ३२४ । उपसर्गे रुवः ॥ ३२५।
समि दुवः ॥ ३२६ । युद्रुवोरुदि च ॥ ३२७ । श्रिनीभूभ्योऽनुपसर्गे ॥
३२८ । तुश्रुभ्यां वौ ॥ ३२९ । स्त्रश्च मथनेऽशब्दे ॥ ३३० । प्रे चायज्ञे ।
३३१ । छन्दो नाम्नि च ॥ ३३२ । प्रे द्रुस्तुश्रुश्रुवः ॥३३३। नियोऽवो-
दोः ॥ ३३४ । निरभ्योः पूल्वोः ॥ ३३५। यज्ञे समि स्तुवः ॥ ३३६ ।
उन्न्योर्गिरः ॥ ३३७ । किरो धान्ये ॥ ३३८ । नौ वृञः ॥ ३३९ । लदि
श्रि-पुवोः ॥ ३४० । ग्रहेश्च ॥ ३४१ । अवन्योराक्रोशे ॥ ३४२ । प्रे
लिप्सायाम् ॥ ३४३ । समि मुष्टौ ॥ ३४४ । परौ यज्ञे ॥ ३४५ । वाऽवे
वर्षप्रतिबन्धे ॥ ३४६ । प्रे रश्मौ ॥ ३४७ । वणिजाञ्च ॥ ३४८ । वृणो-
तेराच्छादने ॥ ३४९ । आङि रुःप्लुवोः ॥ ३५० । परौ भुवोऽवज्ञाने ॥
३५१ । चेस्तु हस्तादाने ॥ ३५२ । शरीरनिवासयोः कश्चादेः ॥ ३५३ ।
संघे चानौत्तराधर्य्ये ॥ ३५४ । परित्योर्नीणोर्घ्यूताभ्रेषयोः ॥ ३५५ ।
व्युपयोः शेतेः पर्य्याये ॥ ३५६ । अभिविधौ भावे इनुण् ॥ ३५७ ।
कर्म्मव्यतीहारे णच् स्त्रियाम् ॥ ३५८ । स्वर-वृ-दृ-गमि-ग्रहामल् ॥
३५९ । उपसर्गेऽदेः ॥ ३६० । नौ ण च ॥ ३६१ । मदः प्रसमो हर्षे ॥
३६२ । व्यधिजपोश्चानुपसर्गे ॥ ३६३ । स्वनहसोर्वा ॥ ३६४ । यमः
सन्न्युपविषु च ॥ ३६ । नौ गदनदपठस्वनाम् ॥ ३६६ । कणो वीणा-
यांच ॥ ३६७ । पणः परिमाणे नित्यम् ॥ ३६८ । समुदोरजःपशुषु ॥
३६९ । ग्लहोऽक्षेषु ॥ ३७० । सर्त्तेः प्रजने ॥ ३७१ । ह्वो हुश्चाभ्युपनि-
विषु च ॥ ३७२ । आङि युद्धे ॥ ३७३ । भावेऽनुपसर्गस्य ॥ ३७४ ।
हन्तेर्वधिश्च ॥ ३७५ । मूर्त्तौ घनिश्च ॥ ३७६ । प्रादूगृहैकदेशे घञ् च ॥
३७७ । अन्तर्घनोद्घनौ देशात्याधानयोः ॥ ३७८ । करणेऽयो-विद्रुषु ।
३७९ । परौ डः ॥ ३८० । नौ निर्मिते ॥ ३८१ । समुदोर्गण-प्रशंसयोः ॥
३८२ । उपाद् क आश्रये ॥ ३८३ । स्तंबेऽब ॥ ३८४ । ट्वनुबन्धादथुः ॥
३८५ । ड्वनुबन्धात्त्रिमक् तेन निर्वृत्ते ॥ ३८६ । याचिविच्छि-
प्रच्छियजिस्वपिरक्षियतां नङ् ॥ ३८७ । उपसर्गे दः किः ॥ ३८८ ।
कर्म्मण्यधिकरणे च ॥ ३८९ । स्त्रियां क्तिः ॥ ३९० । सातिहेतियूति-

जूतयश्च ॥ ३९१ । भावे पचिगापास्थाभ्यः ॥ ३९२ । व्रजयजोः क्यप् ॥ ३९३ । समजासनिसदनिपतिशीङ्सुविद्यटिचरिमनिभृञिणां संज्ञायाम् ॥ ३९४ । कृञः श च ॥ ३९५ । सर्त्तेर्यश्च ॥ ३९६ । इच्छा ॥ ३९७ । शंसिप्रत्ययादः ॥ ३९८ । गुरोश्च निष्ठासेटः ॥ ३९९ । षानुबन्धभिदादिभ्यस्त्वङ् ॥ ४०० । भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्च ॥ ४०१ । आतश्चोपसर्गे ॥ ४०२ । ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः ॥ ४०३ । कीर्त्तीषोः क्तिश्च ॥ ४०४ । रोगाख्यायां वुञ् ॥ ४०५ । संज्ञायां च ॥ ४०६ । पर्य्यायार्हर्णेषु च ॥ ४०७ । प्रश्नाख्यानयोरिञ् च वा ॥ ४०८ । नञ्यन्याक्रोशे ॥ ४०९ । कृत्ययुटोऽन्यत्रापि च ॥ ४१० । नपुंसके भावे क्तः ४११ । युट् च ॥ ४१२ । करणाधिकरणयोश्च ॥ ४१३ । पुंसि संज्ञायां घः ॥ ४१४ । गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमाश्च ॥ ४१५ । अवेतॄस्त्रोर्घञ् ॥ ४१६ । व्यञ्जनाच्च ॥ ४१७ । उदङ्कोऽनुदके ॥ ४१८ । जालमानायः ॥ ४१९ । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ४२० । कर्तृकर्मणोश्च भूकृञोः ॥ ४२१ । आद्भ्यो युवदरिद्रातेः ॥ ४२२ । शासुयुधिदृशिधृषिमृषां वा ॥ ४२३ । इच्छार्थेष्वेककर्तृकेषु तुम् ॥ ४२४ । कालसमयवेलाशक्तयर्थेषु च ॥ ४२५ । अर्हतौ तृच् ॥ ४२६ । शकि च कृत्याः ॥ ४२७ । प्रैष्यातिसर्गप्राप्तकालेषु ॥ ४२८ । आवश्यकाधमर्णयोर्णिन् ॥ ४२९ । तिकृतौ संज्ञायामाशिषि ॥ ४३० । धातुसम्बन्धे प्रत्ययाः ॥

इति कृद्वृत्ते पञ्चमः पादः समाप्तः ॥

---

## षष्ठः पादः ।

४३१ । अलङ्खल्वोः प्रतिषेधयोः क्त्वा वा ॥ ४३२ । मेङः ॥ ४३३ । एककर्तृकयोः पूर्वकाले ॥ ४३४ । परावरयोगे च ॥ ४३५ । णम् चाभीक्ष्ण्ये द्विश्च पदम् ॥ ४३६ । विभाषाग्रे प्रथमपूर्वेषु ॥ ४३७ । कर्मण्याक्रोशे कृञः खमिञ् ॥ ४३८ । स्वादौ च ॥ ४३९ । अन्यथैवङ्-

थमित्थंसु सिद्धाप्रयोगश्चेत् ॥ ४४० । यथातथयोरसूयाप्रतिवचने ॥ ४४१ । दृशो णमु साकल्ये ॥ ४४२ । यावति विन्दजीवोः ॥ ४४३ । चर्मोदरयोः पूरेः ॥ ४४४ । वर्षप्रमाणे ऊलोपश्च वा ॥ ४४५ । चेलार्थे क्नोपेः ॥ ४४६ । निमूलसमूलयोः कषः ॥ ४४७ । शुष्कचूर्णरूक्षेषु पिषः ॥ ४४८ । जीवे ग्रहेः ॥ ४४९ । अकृते कृञः ॥ ४५० । समूले हन्तेः ॥ ४५१ । करणे ॥ ४५२ । हस्तार्थे ग्रहवर्तिवृताम् ॥ ४५३ । स्वार्थे पुषः ॥ ४५४ । स्नेहने पिषः ॥ ४५५ । वन्धोऽधिकरणे ॥ ४५६ । संज्ञायां च ॥ ४५७ । कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम् ॥ ४५८ । ऊर्ध्वे शुषिपूरोः ॥ ४५९ । कर्मणि चोपमाने ॥ ४६० । कषादिषु तैरेवानुप्रयोगः ॥ ४६१ । तृतीयायामुपदंशेः ॥ ४६२ । हिंसार्थाच्चैककर्मकात् ॥ ४६३ । सप्तम्यां च प्रमाणासत्त्योः ॥ ४६४ । उपपीडरुधकर्षश्च ॥ ४६५ । अपादाने परीप्सायाम् ॥ ४६६ । द्वितीयायां च ॥ स्वाङ्गेऽध्रुवे ॥ ४६८ । परिक्लिश्यमाने च ॥ ४६९ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ४७० । तृष्यस्वोः क्रियान्तरे कालेषु ॥ ४७१ । नाम्न्यादिशिग्रहोः ॥ ४७२ । कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च ॥ ४७३ । तिर्यच्यपवर्गे ॥ ४७४ । स्वाङ्गे तसि ॥ ४७५ । भुवस्तूष्णीमि च ॥ ४७६ । कर्तरि कृतः ॥ ४७७ । भावकर्मणोः कृत्यक्तखलर्थाः ॥ ४७८ । आदिकर्मणि क्तः कर्तरि च ॥ ४७९ । गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च ॥ ४८० । दाशगोघ्नौ सम्प्रदाने ॥ ४८१ । भीमादयोऽपादाने ॥ ४८२ । ताभ्यामन्यत्रोणादयः ॥ ४८३ । क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ४८४ । युवुक्त्रामनाकान्ताः ॥ ४८५ । समासे भाविन्यनञः क्त्वो यप् ॥ ४८६ । चजोः कगौ घुड्घानुबन्धयोः ॥ ४८७ । न्यङ्क्वादीनां हश्च घः ॥ ४८८ । न कवर्गादिव्रज्यजाम् ॥ ४८९ । ण्यस्यावश्यके ॥ ४९० । प्रवचर्चिरुचियाचित्यजाम् ॥ ४९१ । वचोऽशब्दे ॥ ४९२ । निप्राभ्यां युजः शक्ये ॥ ४९३ । भुजोऽन्ने ॥ ४९४ । भुजन्युब्जौ पाणिरोगयोः ॥ ४९५ । दृग्दृशदृक्षेषु समानस्य सः ॥ ४९६ । इदमो ॥

४९७। किम् की ॥ ४९८। अदोऽमूः ॥ ४९९। आ सर्वनाम्नः ॥ ५००। विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ क्वौ ॥ ५०१। सहसन्तिरसां सध्रिसमितिरयः ॥ ५०२। रुहेर्धो वा ॥ ५०३। मो नो धातोः ॥ ५०४। वमोश्च ॥ ५०५। स्वरे धातुरनात् ॥ ५०६। अर्तीणूघसकस्वरातामिड् वन्सौ ॥ ५०७। गमहनविदविशदृशां वा ॥ ५०८। दाश्वान् साह्वान् मीढ्वांश्च ॥ ५०९। न श्र्युवर्णवृतां कानुबन्धे ॥ ५१०। घोषवत्योश्च कृति ॥ ५११। वेषुसहलुभरुषरिषां ति ॥ ५१२। रधादिभ्यश्च ॥ ५१३। स्वरतिसूतिसूयत्यूदनुबन्धात् ॥ ५१४। उदनुबन्धपूक्लिशां क्त्वि ॥ ५१५। जृव्रश्चोरिट् ॥ ५१६। लुभो विमोहने ॥ ५१७। क्षुधिवसोश्च ॥ ५१८। निष्ठायां च ॥ ५१९। पूक्लिशोर्वा ॥ ५२०। न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः ॥ ५२१। आदनुबन्धाच्च ॥ ५२२। भावादिकर्मणोर्वा ॥ ५२३। क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु ॥ ५२४। लग्नम्लिष्टविरिब्धाः सक्ताविस्पष्टस्वरेषु ॥ ५२५। परिवृढदृढौ प्रभुबलवतोः ॥ ५२६। संनिविभ्योऽर्देः ॥ ५२७। सामीप्येऽभेः ॥ ५२८। वा रुष्यमत्वरसंघुषास्वनाम् ॥ ५२९। हृषेर्लोमसु ॥ ५३०। दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्च नन्ताः ॥ ५३१। रात्निष्ठातो नोऽपृमूर्छिमदिख्याध्याभ्यः ॥ ५३२। दाद् दस्य च ॥ ५३३। आतोऽन्तःस्थासंयुक्तात् ॥ ५३४। ल्वाद्योदनुबन्धाच्च ॥ ५३५। व्रश्चेः क च ॥ ५३६। क्षेर्दीर्घात् ॥ ५३७। श्योऽस्पर्शे ॥ ५३८। अनपादानेऽनूचेः ॥ ५३९। अविजिगीषायां दिवः ॥ ५४०। ह्रीघ्राव्रोन्दनुदविन्दां वा ॥ ५४१। त्तोर्शुषिपचां मकवाः ॥ ५४२। वा प्रस्त्यो मः ॥ ५४३। निर्वाणोऽवाते ॥ ५४४। भित्तर्णवित्ताः शकलाधमर्णभोगेषु ॥ ५४५। अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥ ५४६। अवर्णादूटो वृद्धिः ॥

इति श्रीमन्महामहोपाध्याय-कात्यायनकृतेषु कृत्सु

षष्ठः पादः समाप्तः ॥

अथ

श्रीदुर्गसिंहविरचितवृत्तिसहितं

# कातन्त्रम् ।

## सन्धिवृत्तिः

### प्रथमः पादः

॥ गणेशाय नमः ॥

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम् ।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम् ॥

### १ । सिद्धो वर्णसमाम्नायः ॥

सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः, न पुनरन्यथोपदेष्टव्य इत्यर्थः । सिद्धशब्दोऽत्र नित्यार्थो निष्पन्नार्थः प्रसिद्धार्थो वा । यथा सिद्धमाकाशम्, सिद्धमन्नम्, काम्पिल्यः सिद्ध इति । वर्णा अकारादयः, तेषां समाम्नायः पाठक्रमः ॥

### २ । तत्र चतुर्दशादौ स्वराः ॥

तस्मिन्वर्णसमाम्नायविषये आदौ ये चतुर्दश वर्णास्ते स्वरसंज्ञा भवन्ति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । यथानुकरणे ह्रस्व ऌकारोऽस्ति तथा दीर्घोऽप्यस्तीति मतम् । स्वरप्रदेशाः—"स्वरोऽवर्णवर्जो नामी" इत्येवमादयः ॥

### ३ । दश समानाः ॥

तस्मिन्वर्णसमाम्नायविषये आदौ ये दश वर्णास्ते समानसंज्ञा भवन्ति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । समानप्रदेशाः—"समानः सवर्णे दीर्घो भवति परश्च लोपम्" इत्येवमादयः ॥

## ४ । तेषां द्वौ द्वावन्योन्यस्य सवर्णौ ॥

तेषामेव दशानां यौ द्वौ द्वौ वर्णौ तावन्योन्यस्य सवर्णसंज्ञकौ भवतः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । तेषां ग्रहणं व्यक्त्यर्थम्, तेन ह्रस्वयोर्द्वयोर्दीर्घयोश्च सवर्णसंज्ञा सिद्धेति । सवर्णप्रदेशाः—"समानः सवर्णे दीर्घो भवति परश्च लोपम्" इत्येवमादयः ॥

## ५ । पूर्वो ह्रस्वः ॥

द्वयोर्द्वयोः सवर्णसंज्ञयोर्यो यः पूर्वो वर्णः स ह्रस्वसंज्ञो भवति । अ इ उ ऋ ऌ । ह्रस्वप्रदेशः—"स्वरो ह्रस्वो नपुंसके" इत्येवमादयः ॥

## ६ । परो दीर्घः ॥

द्वयोर्द्वयोः सवर्णसंज्ञयोर्यो यः परो वर्णः स स दीर्घसंज्ञो भवति । आ ई ऊ ॠ ॡ । ह्रस्वो लघुर्दीर्घो गुरुरित्युच्चारणवशाल्लभ्यते । तथा संयोगे सति ह्रस्वोऽपि गुरुः, गुरुमतोऽनृच्छ इति वर्जनाच्च । दीर्घप्रदेशाः—"रो रे लोपं स्वरश्च पूर्वो दीर्घः" इत्येवमादयः ॥

## ७ । स्वरोऽवर्णवर्जो नामी ॥

अवर्णवर्जस्वरो नामिसंज्ञो भवति । इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । नामिप्रदेशाः—"नामिपरो रम्" इत्येवमादयः ॥

## ८ । एकारादीनि सन्ध्यक्षराणि ॥

एकारादीनि स्वरनामानि सन्ध्यक्षराणि भवन्ति । ए ऐ ओ औ । सन्ध्यक्षरप्रदेशाः—"सन्ध्यक्षरे च" इत्येवमादयः ॥

## ९ । कादीनि व्यञ्जनानि ॥

ककारादीनि हकारपर्यन्तानि व्यञ्जनसंज्ञकानि भवन्ति । क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह । व्यञ्जनप्रदेशाः—"व्यञ्जनमस्वरं परं वर्णं नयेत्" इत्येवमादयः ॥

## १० । ते वर्गाः पञ्च पञ्च पञ्च ॥

ते कादयो मावसाना वर्णाः पञ्च पञ्च भूत्वा पञ्चवते वर्गसंज्ञा भवन्ति । क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म । वर्गप्रदेशाः—"वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः" इत्येवमादयः ॥

## ११ । वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः ॥

वर्गाणां प्रथमद्वितीया वर्णाः शषसाश्चाघोषसंज्ञा भवन्ति । क ख च छ ट ठ त थ प फ श ष स । अघोषप्रदेशाः—"अघोषे प्रथमः" इत्येवमादयः ॥

## १२ । घोषवन्तोऽन्ये ॥

अघोषेभ्यो येऽन्येऽवशिष्टा गादयस्ते घोषवत्संज्ञा भवन्ति । ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म य र ल व ह । घोषवत्प्रदेशाः—"घोषवति लोपम्" इत्येवमादयः ॥

## १३ । अनुनासिका ङञणनमाः ॥

ङ ञ ण न म इत्येते वर्णा अनुनासिकसंज्ञा भवन्ति । अनुनासिकप्रदेशाः—"घुड् व्यञ्जनमनन्तःस्थानुनासिकम्" इत्येवमादयः ॥

## १४ । अन्तःस्था यरलवाः ॥

य र ल व इत्येते वर्णा अन्तःस्थासंज्ञा भवन्ति । अन्तःस्थाप्रदेशाः—"अवर्णस्य अन्तःस्थापवर्गपरस्यावर्णो" इत्येवमादयः ॥

## १५ । ऊष्माणः शषसहाः ॥

श ष स ह इत्येते वर्णा ऊष्मसंज्ञा भवन्ति । शिड्ति शादयः इति पुनर्लघुसंज्ञा । एताः पूर्वाचार्यप्रसिद्धा अन्वर्था इह ज्ञाप्यन्ते ॥

## १६ । अः इति विसर्जनीयः ॥

अकार इहोच्चारणार्थः । 'ः' इति कुमारीस्तनयुगाकृतिर्वर्णो विसर्ज-

नीयसंज्ञो भवति । विसर्जनीयप्रदेशाः—"विसर्जनीयश्चे छे वा शम्" इत्येवमादयः ॥

## १७ । क× इति जिह्वामूलीयः ॥

ककार इहोच्चारणार्थः । '×' इति वज्राकृतिर्वर्णो जिह्वामूलीयसंज्ञो भवति । जिह्वामूलीयप्रदेशाः –"कखयोर्जिह्वामूलीयं न वा" इत्येवमादयः ॥

## १८ । प∞ इत्युपध्मानीयः ॥

पकार इहोच्चारणार्थः । '∞' इति गजकुम्भाकृतिर्वर्ण उपध्मानीयसंज्ञो भवति । उपध्मानीयप्रदेशाः—"पफयोरुपध्मानीयं न वा" इत्येवमादयः ॥

## १९ । अं इत्यनुस्वारः ॥

अकार इहोच्चारणार्थः । 'ं' इति बिन्दुमात्रो वर्णोऽनुस्वारसंज्ञो भवति । अनुस्वारप्रदेशाः—"मोऽनुस्वारं व्यञ्जने" इत्येवमादयः ॥

## २० । पूर्वपरयोरर्थोपलब्धौ पदम् ॥

पूर्वपरयोः प्रकृतिविभक्त्योरर्थोपलब्धौ सत्यां समुदायः पदसंज्ञो भवति । ते ऽत्र, यजन्ते ऽत्र । अर्थोपलब्धिग्रहणं विभक्त्यर्थम् । पदप्रदेशाः—"पदान्तस्थः पदान्ते लोपमकारः" इत्येवमादयः ॥

## २१ । व्यञ्जनमस्वरं परं वर्णं नयेत् ॥

व्यञ्जनं परं वर्णं नयेत् । न तु स्वरम्, व्यञ्जनमन्वक् । स्वरः स्वयं राजते हि । तत्प्रकृति, षड्त्र । क × खनति, प '∞' फलतीति योगवाहत्वात् स्वरूपमेतत् ॥

## २२ । अनतिक्रमयन्विश्लेषयेत् ॥

वर्णान् संघटितान् संश्लिष्टान् अनतिक्रमयन्विश्लेषयेत्, विघटयेदित्यर्थः । वैयाकरणः, उच्चकैः । असंमोहार्थोऽयं योगः ॥

## २३ । लोकोपचाराद् ग्रहणसिद्धिः ॥

लोकानामुपचारो व्यवहारः, तस्मादनुक्तस्यापि ग्रहणस्य सिद्धि- र्वेदितव्येति । निपाताव्ययोपसर्गकारककालसंख्यालोपादयः । तथा वरणा इति नगरस्यापि संज्ञा, पञ्चाला वरणा इति जनपदस्यापि, पञ्चा- ला वरणा इति योगो न दृश्यते संज्ञाशब्दत्वात् । हरीतक्यः फलानीति फलेष्वपि स्त्रियां वृत्तिः । एवमन्येऽपि । संज्ञाशब्दा इव तद्धिता लोकतः सिद्धाः । खलतिकं वनानीति तेषां वनानामेकवचनान्तमेव नाम । शब्दानामेकार्थेऽपि लिङ्गवचनभेदः । यथा— आपो जलम्, दाराः कलत्रं भार्य्येति ॥ वैदिका लौकिकाश्च ये यथोक्तास्तथैव ते । निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसंग्रहः ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ प्रथमः पादः समाप्तः ॥

---

## २४ । समानः सवर्णे दीर्घो भवति परश्च लोपम् ॥

समानसंज्ञको वर्णः सवर्णे परे दीर्घो भवति परश्च लोपमापद्यते । दण्डाग्रम्, सागता, दधीदम्, नदीहते, मधूदकम्, वधूढम्, पितॄषभः, कॄकारः, क्लृकारेण । होतृकार इति वक्तव्यम् । समानग्रहणमश्रुतादपि दीर्घात्समानात्सवर्णस्य लोपार्थम्, तेन—वृक्षाः ॥

## २५ । अवर्ण इवर्णे ए ॥

अवर्ण इवर्णे परे एर्भवति परश्च लोपमापद्यते । वर्णग्रहणे सवर्ण- ग्रहणम् । तवेहा, सेयम् । चकारोऽधिकारोऽनुक्तसमुच्चयार्थः, तेन— क्वचित्पूर्वोऽपि लुप्यते,—इषीषा, लाङ्गलीषा, मनस ईषा—मनीषा ॥

## २६ । उवर्णे ओ ॥

अवर्ण उवर्णे परे ओ भवति परश्च लोपमापद्यते । तवोदकम्, गङ्गोदकम् ॥

## २७। ऋवर्णे अर्॥

अवर्ण ऋवर्णे परे अर्भवति परश्च लोपमापद्यते। तवर्कारः, सवर्कारेण। ऋण प्रवसन वत्सतर कम्बल दशानामृणे कश्चिदृतेऽपि दीर्घता,—ऋणार्णम्, प्रार्णमित्येवमादयः। ऋते च तृतीयासमासे,—शीतेन ऋतः—शीतार्तः। ऋति धातोरुपसर्गस्य—प्रार्छति। नामधातोर्वा—प्रार्षभीयति, प्रर्षभीयति॥

## २८। लृवर्णे अल्॥

अवर्ण लृवर्णे परे अल्भवति परश्च लोपमापद्यते। तवल्कारः, सल्कारेण। उपसर्गस्य वा लृति धातोरलो दीर्घः,—उपाल्कारीयति, उपल्कारीयति॥

## २९। एकारे ऐ ऐकारे च॥

अवर्ण एकारे ऐकारे च परे ऐर्भवति परश्च लोपमापद्यते। तवैषा, सैन्द्री। चकाराधिकारात् क्वचित्पूर्वोऽपि लुप्यते एवे चानियोगे,—अद्येव, इहेव। नियोगे तु—अद्यैव गच्छ, इहैव तिष्ठ। स्वस्यैरैत्वमीरेरिणोरपि वक्तव्यम्,—स्वैरम्, स्वैरी॥

## ३०। ओकारे औ औकारे च॥

अवर्ण ओकारे औकारे च परे औभर्वति परश्च लोपमापद्यते। तवौदनम्, सौपगवी। चकाराधिकारादुपसर्गावर्णलोपो धातोरेदोतोः,—प्रेलयति, परोखति। इणेधत्योर्न—उपैति, उपैधते। नामधातोर्वा—उपेकीयति, उपैकीयति, प्रोपधीयति, प्रौपधीयति। ओष्ठोत्वोः समासे वा—बिम्बोष्ठः, बिम्बौष्ठः। स्थूलोतुः, स्थूलौतुः। समास इति किम्? हे खाट्वोष्ठं पश्य, अद्यौतुं पश्य। ओमि च नित्यम्,—अद्योम्, सोमित्यवोचत्। अक्षस्यौत्वमूहिन्याम्—अक्षौहिणी सेना। प्रस्योढोढ्योश्च,—प्रौढः, प्रौढिः। एषैष्ययोरैत्वं लोपस्यापवादः—प्रेषः, प्रैष्यः। ईषेस्तु—प्रेषः, प्रेष्यः॥

## ३१ । इवर्णो यमसवर्णे न च परो लोप्यः ॥

इवर्णो यमापद्यतेऽसवर्णे न च परो लोप्यः । दध्यत्र, नद्येषा । इवर्ण इति किम्? पचति । असवर्णे इति किम्? दधि ॥

## ३२ । वमुवर्णः ॥

उवर्णो वमापद्यते ऽ सवर्णे न च परो लोप्यः । मध्वत्र, वध्वास-नम् ॥

## ३३ । रमृवर्णः ॥

ऋवर्णो रमापद्यतेऽसवर्णे न च परो लोप्यः । पित्रर्थः, क्रर्थः ॥

## ३४ । लम्लृवर्णः ॥

लृवर्णो लमापद्यते ऽ सवर्णे न च परो लोप्यः । लनुबन्धः, लाकृतिः ॥

## ३५ । ए अय् ॥

एकारो अय् भवति न च परो लोप्यः । नयति, अग्नये ॥

## ३६ । ऐ आय् ॥

ऐकार आय् भवतिऽसवर्णे न च परो लोप्यः । नायकः, रायैन्द्रो ॥

## ३७ । ओ अव् ॥

ओकारो अव् भवतिऽसवर्णे न च परो लोप्यः । लवणम्, पटवोतुः ॥

## ३८ । औ आव् ॥

औकार आव् भवतिऽसवर्णे न च परो लोप्यः । गावौ, गावः । एतेषु विसन्धिः पृथग्योगश्च स्पष्टार्थः, विवक्षितश्च सन्धिर्भवति— गवाजिनम् गोऽ जिनमिति स्वरे विभाषा । गवाक्षः, गवेन्द्र इति नित्य-मकारवर्णागमः ॥

## ३९ । अयादीनां यवलोपः पदान्ते नवा लोपे तु प्रकृतिः ॥

अय् इत्येवमादीनां पदान्ते वर्त्तमानानां यवयोर्लोपो भवति न वा । लोपे तु प्रकृतिः स्वभावो भवति । त आहुः, तयाहुः । तस्मा आसनम्, तस्मायासनम् । पट इह, पटयिह । असा इन्दुः, असाविन्दुः । अयादीनामिति किम् ? दध्यत्र, मध्वत्र । पदान्त इति किम् ? नयनम् , नायकः, लावकः ॥

## ४० । एदोत्परः पदान्ते लोपमकारः ॥

एदोद्भ्यां परोऽकारः पदान्ते वर्त्तमानो लोपमापद्यते । तेऽत्र, पटोऽत्र । एदोद्भ्यामिति किम् ? तावत्र । पदान्तग्रहणं पदान्ताधिकारनिवृत्त्यर्थम्, तेन—चितम्, स्तुतम् ॥

## ४१ । न व्यञ्जने स्वराः संधेयाः ॥

न खलु व्यञ्जने परे स्वराः संधानीया भवन्ति । देवीगृहम्, पटुहस्तम्, मातृमण्डलम्, अग्ने पश्य, रैधृतिः, वायो गतिः, नौयानम् । नञा निर्दिष्टमनित्यम्, तेन—पिब्यम्, गव्यूतिः, अध्वमाने सङ्गेयम् ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ द्वितीयः पादः समाप्तः ॥

---

## ४२ । ओदन्ता अ इ उ आ निपाताः स्वरे प्रकृत्या ॥

ओदन्ता निपाता अ इ उ आ इत्येवमाद्याः केवलाः स्वरे परे प्रकृत्या तिष्ठन्ति । नो अत्र, अहो आश्चर्य्यम्, अथो एवम्, अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, आ एवं किं मन्यसे, आ एवं नु तत् । एवमिति किम् ? न वा इ । अन्तग्रहणमकारादीनां केवलार्थम्, तेन—चेतीतीह, नन्विति चेति । निपाता इति किम् ? पट इह, पटविह ईयतुः, ऊषतुः, अ टतुः ॥

## ४३ । द्विवचनमनौ ॥

द्विवचनं यदनौभूतं तत्स्वरे परे प्रकृत्या तिष्ठति । ओकाररूपं परि·

त्यस्य रूपान्तरं प्राप्तमित्यर्थः । कुण्डी एतौ, पटू इमौ, शाले एते, माले इमे । द्विवचनमिति किम् ? चिन्वत्र । पर्युदासः किम् ? अयजाव आवाम्, देवयोरत्र । अनौभूतमिति किम् ? तावत्र ॥

## ४४ । बहुवचनममी ॥

बहुवचनं यदमीरूपं तत् स्वरे परे प्रकृत्या तिष्ठति । अमी अश्वाः, अमी एडकाः । बहुवचनमिति किम् ? अम्यत्र । अमीरूपमिति किम् ? तयाहुः ॥

## ४५ । अनुपदिष्टाश्च ॥

ये चाक्षरसमाम्नायविषये व्यक्तया नोपदिष्टा जात्या तु स्वरसंज्ञिताः प्लुतास्ते स्वरे परे प्रकृत्या तिष्ठन्ति । आगच्छ भो देवदत्त अत्र, तिष्ठ भो यज्ञदत्त इह । दूराह्वाने गाने रोदने च प्लुतास्ते लोकतः सिद्धाः ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ तृतीयः पादः समाप्तः ॥

---

## ४६ । वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान् ॥

वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयानापद्यन्ते । वागत्र, षड्गच्छन्ति । वर्गप्रथमा इति किम् ? भवानाह । पदान्ता इति किम् ? शकनीयम् । स्वरघोषवत्स्विति किम् ? वाक् पूताः, षट्कुर्वन्ति ॥

## ४७ । पञ्चमे पञ्चमांस्तृतीयान्न वा ॥

वर्गप्रथमाः पदान्ताः पञ्चमे परे पञ्चमानापद्यन्ते तृतीयान्न वा । वाङ्मती, वाग्मती । षण्मुखानि, षड्मुखानि । तन्नयनम्, तद्नयनम्, त्रिष्टुम्मिनोति, त्रिष्टुब् मिनोति । पदान्ते धुटां प्रथमे सति—दशाशयनम्, ककुभाथो वा । व्यवस्थितविभाषया प्रत्ययपञ्चमे नित्यं पञ्चमो भाषायाम्,—वाङ्मयम्, यन्मात्रम् ॥

## ४८ । वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा ॥

वर्गप्रथमेभ्यः पदान्तेभ्यः परः शकारः स्वरयवरपरश्छकारमापद्यते न वा । वाक्छूरः, वाक्शूरः । षट्छ्यामाः, षट्श्यामाः । तच्छ्वेतम्, तच्श्वेतम् । त्रिष्टुप्छ्रुतम्, त्रिष्टुप्श्रुतम् । वर्गप्रथमेभ्य इति किम्? प्राङ् शेते । स्वरयवरपर इति किम्? वाक्श्लक्ष्णः, तच्श्मशानम् । सानुनासिकेष्वपीच्छन्त्यन्ये ॥

## ४९ । तेभ्य एव हकारः पूर्वचतुर्थं न वा ॥

तेभ्य एव वर्गप्रथमेभ्यः पदान्तेभ्यः परो हकारः पूर्वचतुर्थमापद्यते न वा । वाग्घीनः, वाग्हीनः । अज्झलौ, अज्हलौ । षड्ढलानि, षड्हलानि । तद्धितम्, तद्हितम् । ककुब्भासः, ककुब्हासः । हकार इति किम्? तत्कृतम् । तेभ्योग्रहणं स्वरयवरपर निवृत्त्यर्थम्, तेन—वाग्ह्लादयति । एवेति तृतीयमतव्यवच्छेदार्थम् ॥

## ५० । पररूपं तकारो लचटवर्गेषु ॥

तकारः पदान्तो लचटवर्गेषु परतः पररूपमापद्यते । तल्लुनाति, तच्चरति, तच्छादयति, तज्जयति, तज्झासयति, तञ्ञकारेण, तट्टीकते, तट्ठकारेण, तड्डीनम्, तड्ढौकते, तण्णकारेण । पदान्ते धुटां प्रथमे सति—तज्जयः, दशल्लेखा, ग्रामभुड्ढौकनमिति । लचटवर्गेष्विति किम्? तत् पचति ॥

## ५१ । चं शे ॥

तकारः पदान्तः शे परे चमापद्यते । तच्श्लक्ष्णः, तच्श्मशानम् । अछत्वपक्षे वचनमिदम् ॥

## ५२ । ङणना ह्रस्वोपधाः स्वरे द्विः ॥

ङणनाः पदान्ता ह्रस्वोपधाः स्वरे परे द्विर्भवन्ति । क्रुङ्ङत्र, सुग-

वृणत्र, पचन्नत्र । ङ्णना इति किम् ? क्रिमत्र । पदान्ता इति किम् ? वृत्रहणौ । ह्रस्वोपधा इति किम् ? प्राङास्ते ॥

## ५३ । नोऽन्तश्चछयोः शकारमनुस्वारपूर्वम् ॥

नकारः पदान्तश्चछयोः परयोः शकारमापद्यतेऽनुस्वारपूर्वम् । भवांश्चरति, भवांश्छादयति, भवांश्च्यवते, भवांश्छ्यति । व्यवस्थितवाक्यत्वात् प्रशाञ्चरति, एवमुत्तरत्रापि । तथान्तो विरतिरिति, तेन—त्वन्चरसि ॥

## ५४ । टठयोः षकारम् ॥

नकारः पदान्तष्टठयोः परयोः षकारमापद्यतेऽनुस्वारपूर्वम् । भवांष्टीकते, भवांष्ठकारेण ॥

## ५५ । तथयोः सकारम् ॥

नकारः पदान्तस्तथयोः परयोः सकारमापद्यतेऽनुस्वारपूर्वम् । भवांस्तरति, भवांस्थुडति । पुंस्कोकिलः, पुंस्खननम्, पुंश्चकोरः, पुंश्छत्रम्, पुंष्टिट्टिभः, सुपुंश्चरति । पुंसोऽशिट्यघोषविषये संयोगान्तलोपस्यानित्यत्वात् यथा प्राप्तमेव । अशिटीति किम् ? पुंसरः ॥

## ५६ । ले लम् ॥

नकारः पदान्तो ले परे लमापद्यतेऽनुस्वारहीनम् । भवाँल्लुनाति, भवाँल्लिखति । कारहीनत्वादनुनासिकम् ॥

## ५७ । जझञशकारेषु ञकारम् ॥

नकारः पदान्तो जझञशकारेषु परतो ञकारमापद्यते । भवाञ्जयति, भवाञ्झाषयति, भवाञ्ञकारेण, भवाञ्शेते । पदमध्ये च टवर्गादेश इति जझञेषु ञकारविधानम् ॥

## ५८ । शि न्चौ वा ॥

नकारः पदान्तः शि परे न्चौ वा प्राप्नोति ञकारं वा भवान्छूरः,

भवाञ्श्चूरः, भवाञ्शूरः, कुर्वञ्च्छूरः, कुर्वञ्श्चूरः, कुर्वञ्शूरः, प्रशाञ्छ्शयनम, प्रशाञ्श्शयनम्, प्रशाञ्शयनम् । णत्वं गत्वं च न स्यात्, अनुस्वारो वर्गान्तश्च स्यादेव । चात्र समुच्चये ॥

## ५९ । डढणपरस्तु णकारम् ॥

डढणाः परे ऽस्मादिति डढणपरः । डढणपरो नकारो णमापद्यते । भवाण्डीनम्, भवाण्ढौकते, भवाण्णकारेण । तुशब्दो वानिवृत्त्यर्थः ॥

## ६० । मोऽनुस्वारं व्यञ्जने ॥

मकारः पुनरन्तो व्यञ्जने परेऽनुस्वारमापद्यते । त्वं यासि, त्वं रमसे । अन्त इति किम् ? गम्यते । अनुस्वार इति संज्ञापूर्वको विधिरनित्यः, तेन—सम्राट्, सम्राजौ ॥

## ६१ । वर्गे तद्वर्गपञ्चमं वा ॥

अन्तोऽनुस्वारो वर्गे परे तद्वर्गपञ्चमं वापद्यते । त्वङ्करोषि, त्वं करोषि । त्वञ्चरसि, त्वं चरसि । पुम्याम्, पुंभ्याम् । वर्ग इति किम् ? त्वं लुनासि ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ चतुर्थः पादः समाप्तः ।

---

## ६२ । विसर्जनीयश्चे छे वा शम् ॥

विसर्जनीयश्चे वा छे वा परे शमापद्यते । कश्चरति । कश्छादयति ॥

## ६३ । टे ठे वा षम् ॥

विसर्जनीयष्टे वा ठे वा परे षमापद्यते । कष्टीकते, कष्ठकारेण । प्रत्येकं चात्र समुच्चये वाक्यावबोधार्थः ॥

## ६४ । ते थे वा सम् ॥

विसर्जनीयस्ते वा थे वा परे समापद्यते । कस्तरति, कस्थुडति । कारस्करादय इति संज्ञाशब्दा ज्ञोकतः सिद्धाः ॥

## ६५ । कखयोर्जिह्वामूलीयं न वा ॥

विसर्जनीयः कखयोः परयोर्जिह्वामूलीयमापद्यते न वा । क× करोति, कः करोति । क×खनति, कः खनति ॥

## ६६ । पफयोरुपध्मानीयं न वा ॥

विसर्जनीयः पफयोः परयोरुपध्मानीयमापद्यते न वा । क∞ पचति, कः पचति । क∞फलति, कः फलति । व्यवस्थितविभाषयाघोषे शिरपरे न शादयः । पुरुषः त्सरुकः, वासः क्षौमम्, अद्भिः प्सातम् ॥

## ६७ । शे षे से वा वा पररूपम् ॥

विसर्जनीयः शे वा षे वा से वा परे पररूपमापद्यते न वा । कश्शेते, कः शेते । कष्षण्डः, कः षण्डः । कस्साधुः, कः साधुः । चटता-नित्यकरणाद् विसर्जनीयादेशस्याघोषे प्रथमो न स्यात्, कश्चरतीत्यादि-ष्वप्येवम् ॥

## ६८ । उमकारयोर्मध्ये ॥

द्वयोरकारयोर्मध्ये विसर्जनीय उमापद्यते । कोऽत्र, कोऽर्थः । पुनर-त्रेति रप्रकृतिः इति परत्वाद्रेफः स्यात् ॥

## ६९ । अघोषवतोश्च ॥

अकारघोषवतोर्मध्ये विसर्जनीय उमापद्यते । को गच्छति, को धावति । अघोषवतोरिति किम् ? कः शेते ॥

## ७० । अपरो लोप्योऽन्यस्वरे यं वा ॥

अकारात्परो विसर्जनीयो लोप्यो भवति उकादन्यस्वरे यं वापद्यते । क इह, कयिह । क उपरि, कयुपरि । अपर इति किम् ? अग्निरत्र । वात्र समुच्चये । ईषत्स्पृष्टतरोऽत्र यकारः ॥

## ७१ । आभोभ्यामेवमेव स्वरे ॥

आकारभोशब्दाभ्यां परो विसर्जनीय एवमेव भवति स्वरे परे ।

देवा आहुः देवायाहुः । भो अत्र, भोयत्र । भो इत्यामन्त्रणौकारोपलक्षणं केचित्—भगो अत्र, भगोयत्र । अघो अत्र, अघोयत्र । आदीषत्स्पृष्टतर औकारादीषत्स्पृष्टतरोऽत्र यकारः । एवमेवग्रहणं नित्यलोपनिरासार्थम् ॥

## ७२ । घोषवति लोपम् ॥

आकारभोशब्दाभ्यां परो विसर्जनीयो लोपमापद्यते घोषवति परे। देवा गताः, भो यासि, भगो व्रज, अघो यज । लोपग्रहणं यं वेति निवृत्यर्थम् ॥

## ७३ । नामिपरो रम् ॥

नामिनः परो विसर्जनीयो रमापद्यते निरपेक्षः । सुपीः, सुतूः । ईकारार्थं वचनमिदम् ॥

## ७४ । घोषवत्स्वरपरः ॥

नामिनः परो विसर्जनीयो घोषवत्स्वरपरो रमापद्यते । अग्निर्गच्छति, अग्निरत्र, पटुर्वदति, पटुरत्र । घोषवत्स्वरपर इति किम् ? अग्निः शेते ॥

## ७५ । रप्रकृतिरनामिपरोऽपि ॥

रेफप्रकृतिर्विसर्जनीयो नामिनः परोऽनामिनः परोऽपि घोषवत्स्वरपरोऽघोषवत्स्वरोऽपि रमापद्यते । गीर्पतिः, गीः पतिर्वा, धूर्पतिः, धूः पतिर्वा । स्वरघोषवतोर्नित्यम्—पितरत्र, पितर्यातः । अरेफप्रकृतिरपि—हे प्रचेता राजन्, हे प्रचेतो राजन्निति वा । भुवर्भुवः । अहोऽरेफे—अहर्पतिः, अहर्गणः, अहरत्र । रेफे तु—अहोरात्रम्, अहोरूपम्, अहोरथन्तरं साम ॥

## ७६ । एषसपरो व्यञ्जने लोप्यः ॥

एषसाभ्यां परो विसर्जनीयो लोप्यो भवति व्यञ्जने परे । एष

चरति, स टीकते, एष शेते, स पचति । परत्वात्पूर्वान् बाधते । अव्य-धिकारात्, स्वरूपग्रहणाद्वा—एषकः करोति, सकः करोति । अनेषो गच्छति असौ गच्छति । अकि नञ्समासे न स्यात् ॥

## ७७ । न विसर्जनीयलोपे पुनः सन्धिः ॥

विसर्जनीयलोपे कृते पुनः सन्धिर्न भवति । अन्यलोपे तु भवत्येव । क इह, देवा आहुः, भो अत्र । विसर्जनीयाधिकारे पुनर्विसर्जनीय-ग्रहणमुत्तरत्र विसर्जनीयाधिकारनिवृत्त्यर्थम्. तेन—एष च्छात्रेण, द्वि-र्भावः सिद्धः ॥

## ७८ । रो रे लोपं स्वरश्च पूर्वो दीर्घः ॥

रो रे परे लोपमापद्यते, स्वरश्च पूर्वो दीर्घो भवति । अग्नी रथेन, पुना रात्रिः, उच्चै रौति ॥

## ७९ । द्विर्भावं स्वरपरश्छकारः ॥

स्वरात्परश्छकारो द्विर्भावमापद्यते । वृक्षच्छाया, इच्छति, अव्यधि-काराद्दीर्घात्पदान्ताद्वा—कुटीच्छाया, कुटीछाया । आङ्माभ्यां नित्यम्—आच्छाया, माच्छिदत् ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ पञ्चमः पादः समाप्तः ॥

---

# अथ चतुष्टयवृत्तिः

## नामप्रकरणम्

## १ । धातुविभक्तिवर्जमर्थवल्लिंगम् ॥

अर्थोऽभिधेयम् । धातुविभक्तिवर्जमर्थवल्लिङ्गसंज्ञं भवति । वृक्षः, कुण्डम्, कुमारी, डित्थः, राजपुरुषः, औपगवः, कारकः । धातुविभक्ति-वर्जमिति किम् ? अहन्, वृक्षान् । अर्थवदिति किम् ? वृक्ष इति वृक्षक्रमेकैकशो माभूत्, राजन्नित्युन्मत्तवचनस्य च । लिङ्गप्रदेशाः—"लिङ्गान्तनकारस्य" इत्येवमादयः ॥

## २ । तस्मात्परा विभक्तयः ॥

तस्मादर्थवतो लिङ्गात्पराः स्यादयो विभक्तयो भवन्ति । सि, औ, जस् । अम्, औ, शस् । टा, भ्याम्, भिस् । ङे, भ्याम्, भ्यस् । ङसि, भ्याम्, भ्यस् । ङस्, ओस्, आम् । ङि, ओस्, सुप् । दृशत्, दृषद्, दृशदौ, दृशदः । दृशदम्, दृशदौ, दृशदः । दृशदा, दृशद्भ्याम्, दृशद्भिरित्यादि । एवं कुमारी, कुमार्यौ, कुमार्यः । खट्वा, खट्वे, खट्वाः । अर्थस्य विभजनाद्विभक्तय इति ॥

## ३ । पञ्चादौ घुट् ॥

स्यादीनामादौ पञ्च वचनानि घुट्संज्ञानि भवन्ति । सि, औ, जस्, अम्, औ । घुट्प्रदेशाः—"घुटि चासंबुद्धौ" इत्येवमादयः ॥

## ४ । जस्शसौ नपुंसके ॥

नपुंसकलिङ्गे जस्शसौ घुट्संज्ञौ भवतः । सामानि तिष्ठन्ति, सामानि पश्य । नपुंसके जसेव घुडिति नियमाद्—वारिणी, त्रपुणी ॥

## ५ । आमन्त्रिते सिः संबुद्धिः ॥

सिद्धस्याभिमुख्यकरणमामन्त्रितम् । तस्मिन्नर्थे विहितः सिः संबुद्धिसंज्ञो भवति । हे अग्ने ! हे वृक्ष ! संबुद्धिप्रदेशाः—"संबुद्धौ च" इत्येवमादयः ॥

## ६ । आगम उदनुबन्धः स्वरादन्त्यात्परः ॥

प्रकृतिप्रत्ययोरनुपघाती आगमः । आगम उदनुबन्धोऽन्त्यात् स्वरात्परः परिभाष्यते । पयांसि, पयांसि । आगम इति किम् ? विद्युत्वान् । उदनुबन्ध आगमस्य लिङ्गम् ॥

## ७ । तृतीयादौ तु परादिः ॥

आगम उदनुबन्धस्तृतीयादौ विभक्तौ परादिर्भवति । सर्वस्यै, सर्वेषाम्, वृक्षाणाम् । तुशब्दस्तृतीयाद्यधिकारनिवृत्त्यर्थः ॥

## ८ । इदुदग्निः ॥

इकार उकारश्चाग्निसंज्ञो भवति । अग्निम्, पटुम् । इदुदिति किम् ? सेनान्यम्, यवल्वम् । अग्निप्रदेशाः—"अग्नेरमोऽकारः" इत्येवमादयः ॥

## ९ । ईदूत् स्त्र्याख्यौ नदी ॥

ईदूदित्येवं स्त्र्याख्यौ नदीसंज्ञकौ भवतः । नद्यै, वध्वै । तपरकरणमसन्देहार्थम । स्त्र्याख्याविति किम् ? सेनान्ये, यवल्वे । नदीप्रदेशाः—"नद्या ऐ आसासाम्" इत्येवमादयः ॥

## १० । आ श्रद्धा ॥

आकारो यः स्त्र्याख्यः स श्रद्धासंज्ञो भवति । श्रद्धा, माला । स्त्र्याख्य इति किम् ? कीलालपाः । श्रद्धाप्रदेशाः—"श्रद्धायाः सिर्लोपम्" इत्येवमादयः ॥

## ११ । अन्त्यात्पूर्व उपधा ॥

लिङ्गस्य धातोर्वान्त्याद्वर्णाद्यः पूर्वो वर्णः स उपधासंज्ञो भवति । राजन्—अकारः, भिदु—इकारः, वृत्—ऋकारः । उपधाप्रदेशाः-"अस्योपधाया दीर्घो वृद्धिर्नामिनामिनि चटसु" इत्येवमादयः ॥

## १२ । व्यञ्जनान्नोऽनुषङ्गः ॥

लिङ्गस्य धातोर्वान्त्याद्व्यञ्जनाद्यः पूर्वो नकारः सोऽनुषङ्गसंज्ञो भवति । विदुषः, भस्यते । न इति किम् ? ऊर्म्याम् । अनुषङ्गप्रदेशाः—"अनुषङ्गश्चाक्रुञ्चेत्" इत्येवमादयः ॥

## १३ । धुड् व्यञ्जनमनन्त स्थानुनासिकम् ॥

अन्तस्थानुनासिकवर्जितं व्यञ्जनं धुट्संज्ञं भवति । पर्यासि, अपक्त । अन्तस्थानुनासिकवर्जमिति किम् ? चत्वारि, अमंस्त । धुट्प्रदेशाः—"धुटश्च धुटि" इत्येवमादयः ॥

## १४। अकारो दीर्घं घोषवति ॥

अकारो लिङ्गान्तो घोषवति विभक्तौ दीर्घमापद्यते। आभ्याम्, वृक्षाय, वृक्षाणाम्। घोषवतीति किम्? वृक्षः॥

## १५। जसि ॥

अकारो लिङ्गान्तो जसि परे दीर्घमापद्यते। वृक्षाः। अकारे लोपे प्राप्ते वचनम्॥

## १६। शसि सस्य च नः ॥

अकारो लिङ्गान्तः शसि परे दीर्घमापद्यते, सस्य च नो भवति। वृक्षान्। स्याद्यधिकारः किम्? अवशः॥

## १७। अकारे लोपम् ॥

विभक्तौ लिङ्गस्याकारो लोपमापद्यते, अकारे सामान्ये। वृक्षम्, युष्मत्, यः, सः, अशना॥

## १८। भिसैस् वा ॥

अकारान्ताल्लिङ्गात्परो भिस् ऐस् वा भवति। वृक्षैः। वाशब्दः पक्षान्तरं सूचयति—एस् ऐस् वा। ऐस्करणादतिजरसैरिति केचित्॥

## १९। धुटि बहुत्वे त्वे ॥

अकारो लिङ्गान्तो बहुत्वे धुटि परे एकारो भवति। एषु, वृक्षेभ्यः। परत्वादेत्वं स्यात्। धुटीति किम्? वृक्षाणाम्। तुशब्दो विभाषानिवृत्त्यर्थः॥

## २०। ओसि च ॥

अकारो लिङ्गान्त ओसि परे एकारो भवति। वृक्षयोः॥

## २१। ङसिरात् ॥

अकारान्ताल्लिङ्गात्परो ङसिर् आद् भवति। वृक्षात्। दीर्घोच्चारणादतिजरसात्॥

## २२ । ङस् स्यः ॥

अकारान्ताल्लिङ्गात्परो ङस् स्यो भवति । वृक्षस्य ॥

## २३ । इन टा ॥

अकारान्ताल्लिङ्गात्परष्टा इनो भवति । वृक्षेण । टेनेति सिद्धे इनो-च्चारणमग्रत इन एव । तेन—अतिजरसिन कुलेन । पृथग्योगो वाक्यावबोधनार्थः ॥

## २४ । ङेर्य्यः ॥

अकारान्ताल्लिङ्गात्परस्य ङेवचनस्य य आदेशो भवति । वृक्षाय ॥

## २५ । स्मै सर्वनाम्नः ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परस्य ङेवचनस्य स्मैर्भवति । सर्वस्मै, विश्वस्मै । सर्वेषां नामेति किम् ? विश्वो नाम कश्चित्, विश्वमतिक्रा-न्ताय विश्वाय, अतिविश्वाय । तीयाद्वा वक्तव्यम्—द्वितीयस्मै, द्विती-याय । तृतीयस्मै, तृतीयाय । किं तत्सर्वनाम ? सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम त्वत् त्व नेम सम सिम पूर्वापरावर दक्षिणोत्तरपराधराणि । व्यवस्थायामसंज्ञायाम्, स्वमज्ञातिधनाख्या-याम्, अन्तरं बहिर्योगोपसंव्यानयोः, त्यद् । त्यद् तद् यद् एतद् अदस् इदम् किम् एक द्वि युष्मद् अस्मद् भवन्तः ॥

## २६ । ङसिः स्मात् ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङसिः स्माद्भवति । सर्वस्मात्, विश्वस्मात् । अकारान्तादिति किम् ? भवतः ॥

## २७ । ङिः स्मिन् ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङिः स्मिन्भवति । सर्वस्मिन्, विश्वस्मिन् । सर्वेषां नामेति किम् ? समे देशे यजति ॥

## २८ । विभाष्येते पूर्वादेः ॥

पूर्वादेर्गणात्परयोर्ङसिङ्योः स्थाने स्मात्स्मिनौ विभाष्येते प्राप्ते

विभाषा । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । तीयाद्वा वक्तव्यम्— द्वितीयस्मात्, द्वितीयात्, द्वितीयस्मिन्, द्वितीये । तृतीयस्मात्, तृतीयात्, तृतीयस्मिन्, तृतीये ॥

## २९ । सुरामि सर्वतः ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्सर्वत आमि परे सुरागमो भवति । सर्वेषाम्, विश्वेषाम्, यासाम्, तासाम् । सकारः परादित्वार्थः । प्रतिपदोक्तग्रहणात्—स्वाम्, युवाम् ॥

## ३० । जस् सर्व इः ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो जस् सर्व इर्भवति । सर्वे, विश्वे । अकारान्तदिति किम् ? सर्वाः ॥

## ३१ । अल्पादेर्वा ॥

अल्पादेर्गणात्परो जस् सर्व इर्भवति वा । अल्पे, अल्पाः, प्रथमे, प्रथमाः । उभय इति नित्यं भाषायाम् । अल्प प्रथम चरम तय अय कतिपय नेम अर्द्ध पूर्वादयश्च ॥

## ३२ । द्वन्द्वस्थाच्च ॥

द्वन्द्वस्थाच्च सर्वनाम्नो लिङ्गादकारान्तात्परो जस् सर्व इर्भवति वा । कतरकतमे, कतरकतमाः । द्वन्द्वकतमे, द्वन्द्वकतमाः ॥

## ३३ । नान्यत् सार्वनामिकम् ॥

चकारोऽनुवर्त्तते । द्वन्द्वस्थस्य सर्वनाम्नो लिङ्गस्योक्तमन्यच्च सार्वनामिकं कार्य्यं न भवति । पूर्वापराय । पूर्वापरात् । दक्षिणोत्तरपूर्वाणाम् ॥

## ३४ । तृतीयासमासे च ॥

तृतीयायाः समासेऽसमासे चोक्तमन्यच्च सार्वनामिकं कार्य्यं न भवति । मासेन पूर्वाय, मासपूर्वाय । मासेनावराः, मासावराः ।

श्रुतत्वात्सर्वनाम्नैव समासे इह स्यादक्—त्वयकाकृतम्, मयका-कृतम् ॥

## ३५ । बहुव्रीहौ ॥

बहुव्रीहौ समासे सार्वनामिकं कार्य्यं न भवति । त्वत्कपितृको, मत्कपितृकः—अक् न स्यात् । वस्त्रान्तरवसनान्तराः—अप्रधानादेव तृतीयस्याः इति वा न स्यात् ॥

## ३६ । दिशां वा ॥

दिशां बहुव्रीहौ समासे सार्वनामिकं कार्य्यं न भवति वा । उत्तर-पूर्वस्यै, उत्तरपूर्वायै । दिशां बहुव्रीहाविति किम्? दक्षिणपूर्वायै मुग्धायै ॥

## ३७ । श्रद्धायाः सिर्लोपम् ॥

श्रद्धासंज्ञकात्परः सिर्लोपमापद्यते । श्रद्धा, माला । श्रद्धाया इति किम्? कीलालपाः । सिरिति कृते जरा जरस् स्यात् ॥

## ३८ । टौसोरे ॥

टौसोः परयोः श्रद्धाया एत्वं भवति । तुलया, तुलयोः ॥

## ३९ । सम्बुद्धौ च ॥

श्रद्धायाः सम्बुद्धौ चैत्वं भवति । हे श्रद्धे ! हे माले !

## ४० । ह्रस्वोऽम्बार्थानाम् ॥

अम्बार्थानां श्रद्धासंज्ञकानां सम्बुद्धौ ह्रस्वो भवति । हे अम्ब ! हे अक्क ! । अम्बार्थानामिति सिद्धे ह्रस्व इति संज्ञापूर्वकत्वात्सुखार्थम् । बहुस्वरत्वाद्वलकवतां न स्यात्—हे अम्बाडे ! हे अम्बाले ! हे अम्बिके ! ॥

## ४१ । औरिम् ॥

श्रद्धायाः पर औरीमापद्यते । श्रद्धे ! माले ! दीर्घः किम्? जरसी इति केचित् ॥

## ४२ । ङवन्ति यै यास् यास् याम् ॥

श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथा· संख्यं भवन्ति । मालायै, मालायाः, मालायाः, मालायाम् ॥

## ४३ । सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च ॥

सर्वनाम्नः श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति । ह्रस्वपूर्वाश्च । सदनुबन्धः परादित्वार्थः । सर्वस्यै, सर्वस्याः, सर्वस्याः, सर्वस्याम् । तुशब्दः स्वाग· माधिकारनिवृत्त्यर्थः ॥

## ४४ । द्वितीयातृतीयाभ्यां वा ॥

अप्राप्ते विभाषा । द्वितीयातृतीयाभ्यां पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति ह्रस्वपूर्वाश्च वा । द्वितीयस्यै, द्वितीयायै । तृतीयस्यै, तृतीयायै । तीयाद्वेति सिद्धे द्विती· यातृतीयाभ्यामिति स्पष्टार्थम् ॥

## ४५ । नद्या ऐ आस् आस् आम् ॥

नदीसंज्ञकात्पराणि ङवन्ति वचनानि ऐ आस् आस् आमिति यथासंख्यं भवन्ति । वा न स्मर्य्यते । नद्यै, नद्याः, नद्याः, नद्याम् । वध्वै, वध्वाः, वध्वाः, वध्वाम् ॥

## ४६ । सम्बुद्धौ ह्रस्वः ॥

नद्याः सम्बुद्धौ ह्रस्वो भवति । हे नदि, हे वधु । नद्या इति किम् ? हे ग्रामणीः, हे खलपूः ॥

## ४७ । अम्शसोरादिर्लोपम् ॥

नद्याः परयोरम्शसोरादिर्लोपमापद्यते । नदीम्, नदीः । वधूम्, वधूः ।



## ४८ । ईकारान्तात्सिः ॥

नदीसंज्ञकेकारान्तात्परः सिर्लोपमापद्यते । नदी, मही । ईकारोऽन्तो यस्मादिति किम् ? लक्ष्मीः ॥

## ४९ । व्यञ्जनाच्च ॥

व्यञ्जनसंज्ञकात्परः सिर्लोपमापद्यते । वाक्, तडित् । संयोगान्तलोपे सिद्धं चेत् नादेर्धुटो लोपः स्यात् । लिङ्गं चानुवर्त्तते ॥

## ५० । अग्नेरमोकारः ॥

अग्निसंज्ञकात्परोऽमोऽकारो लोपमापद्यते । अग्निम्, पटुम्, बुद्धिम्, धेनुम् ॥

## ५१ । औकारः पूर्वम् ॥

अग्नेः पर औकारः पूर्वस्वरमापद्यते । अग्नी, पटू, बुद्धी, धेनू ॥

## ५२ । शसोऽकारः सश्च नोऽस्त्रियाम् ॥

अग्नेः परः शसोऽकारः पूर्वस्वरमापद्यते, सश्च नो भवति अस्त्रियाम् । अग्नीन्, पटून् । अस्त्रियामिति किम् ? बुद्धीः धेनूः ॥

## ५३ । टा ना ॥

अग्नेः परस्य टावचनस्य नादेशो भवति अस्त्रियाम् । अग्निना, पटुना । अस्त्रियामिति किम् ? बुद्ध्या, धेन्वा ॥

## ५४ । अदोऽमुश्च ॥

अदसोऽमुरादेशो भवति टावचनस्य च नादेशः अस्त्रियाम् । अमुना । अस्त्रियामिति किम् ? अमुया ॥

## ५५ । इरेदुरोज्जसि ॥

लिङ्गस्य इरेद् भवति उरोच्च जसि परे । अग्नयः, पटवः, बुद्धयः, धेनवः ॥

५६ । सम्बुद्धौ च ॥

संबुद्धौ च लिङ्गस्य इरेद्भवति उरोच । हे अग्ने ! हे धेनो ! अग्नेः सम्बुद्धावित्येके—हे नदि ! हे वधु !

५७ । ङे ॥

ङयि परतो लिङ्गस्य इरेद्भवति उरोच । अग्नये, पटवे, बुद्धये, धेनवे । ङे इत्यविकृतनिर्देशात्—बुद्ध्यै, धेन्वै ।

५८ । ङसिङसोरलोपश्च ॥

अग्नेः परस्य ङसिङसोरकारस्य लोपो भवति इरेद्भवति । उरोच, अग्नेः, अग्नेः, धेनोः, धेनोः ॥

५९ । गोश्च ॥

गोशब्दात्परस्य ङसिङसोरस्य लोपो भवति । गोः, गोः ॥

६० । ङिरौ सपूर्वः ॥

अग्निसञ्ज्ञकात्परो ङिः सह पूर्वेण स्वरेण और्भवति । अग्नौ, धेनौ ॥

६१ । सखिपत्योर्ङिः ॥

सखिपतिभ्यां परो ङिरौर्भवति । सख्यौ, पत्यौ । पुनर्ङिग्रहणं सपूर्वनिवृत्त्यर्थम् ॥

६२ । ङसिङसोरुम् ॥

सखिपतिभ्यां परो ङसिङसोरकार उमापद्यते । सख्युः, सख्युः, पत्युः, पत्युः । अग्रहणं यथासंख्यनिवृत्त्यर्थम् ॥

६३ । ऋदन्तात्सपूर्वः ॥

ऋदन्ताल्लिङ्गात्परो ङसिङसोरकार उमापद्यते सह पूर्वेण स्वरेण । पितुः, पितुः, मातुः, मातुः । ऋदन्तादिति किम् ? क्रो धातोः ॥

६४ । आ सौ सिलोपश्च ॥

ऋदन्तस्य लिङ्गस्य आ भवति सौ परे सिलोपश्च । पिता, माता ॥

## ६५ । अग्निवच्छसि ॥

ऋदन्तस्य लिङ्गस्याग्निवद्भवति शसि परे । पितॄन् । तत्रास्त्रियाम् इति प्रतिषेधात्—मातॄः ॥

## ६६ । अर्डौ ॥

ऋदन्तस्य लिङ्गस्य अर्भवति डौ परे । पितरि, मातरि । योगविभागात् पितरस्तर्पयामास ॥

## ६७ । घुटि च ॥

ऋदन्तस्य लिङ्गस्य अर्भवति घुटि परे । पितरौ, पितरः । घुटीति किम् ? पितॄन् । पृथग्योग उत्तरार्थः ॥

## ६८ । धातोस्तृशब्दस्यार् ॥

धातोर्विहितस्य तृशब्दस्य ऋत आर्भवति घुटि परे । अरोऽपवादः । कर्त्तारौ, कर्त्तारः । धातोर्विहितस्येति किम् ? यातरौ, यातरः—यत प्रयत्ने । तृशब्दस्येति किम् ? ननान्दरौ, ननान्दरः । नञि च नन्देः । क्रुशेस्तुन् घुटि स्त्रियां च नास्त्यौणादिकत्वात् । क्रोष्टा, क्रोष्ट्री—तृचा सिद्धम् । शसादौ तु—तृजन्तस्य तुनन्तस्य च प्रयोगः । क्रोष्टॄन्, क्रोष्टून् । क्रोष्ट्रा, क्रोष्टुना इत्येवमादयः ॥

## ६९ । स्वस्रादीनां च ॥

स्वस्रादीनां च ऋत आर्भवति घुटि परे । स्वसारौ, नप्तारौ । स्वसा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च । होता पोता प्रशास्ता च अष्टौ स्वस्रादयः स्मृताः ॥

## ७० । आ च न सम्बुद्धौ ॥

ऋदन्तस्य लिङ्गस्य सम्बुद्धावार आ च न भवति अर्थादरेव । हे कर्त्तः, हे स्वसः ॥

## ७१ । ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम् ॥

ह्रस्वनदीश्रद्धाभ्यः परः संबुद्धिः सिर्लोपमापद्यते । हे वृक्ष ! हे

अग्ने ! हे धेनो ! हे नदि ! हे वधु ! हे श्रद्धे ! माले ! सम्बुद्धिरिति किम् ? वृक्षः । नदीश्रद्धाग्रहणमुत्तरार्थमिहार्थं च ॥

## ७२ । आमि च नुः ॥

ह्रस्वनदीश्रद्धाभ्यः पर आमि परे नुरागमो भवति । वृक्षाणाम्, अग्नीनाम्, धेनूनाम्, नदीनाम्, वधूनाम्, श्रद्धानाम्, मालानाम् । श्रद्धासहचरितस्यामो ग्रहणान्न—नद्याम्; युवाम् ॥

## ७३ । त्रेस्त्रयश्च ॥

त्रेस्त्रयादेशो भवति नुरागमश्च आमि परे । त्रयाणाम्, परमत्रयाणाम् ॥

## ७४ । चतुरः ।

चत्वार् इत्येतस्य आमि परे नुरागमो भवति । चतुर्णाम् । प्रधानादेव । अतिचतुराम् ॥

## ७५ । संख्यायाः ष्णान्तायाः ॥

संख्यायाः षकारनकारान्ताया आमि परे नुरागमो भवति । षण्णाम्, पञ्चानाम् । अन्तग्रहणाद् भूतपूर्वनान्ताया अपि—अष्टानाम् । संख्याया इति किम् ? विप्रुषाम्, यज्वनाम् ॥

## ७६ । कतेश्च जस्शसोर्लुक् ॥

कतेः संख्यायाः षकारनकारान्तायाश्च जस्शसोर्लुग्भवति । कति, कति, षट्, षट्, पञ्च, पञ्च ॥

## ७७ । नियो ङिराम् ॥

नियः परो ङिराम् भवति । नियाम्, ग्रामण्याम् ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये प्रथमः पादः समाप्तः ॥

---

## ७८ । न सखिष्टादावग्निः ॥

सखिस्थः सखिष्टादौ स्वरे नाग्निर्भवति । सख्या, सख्ये ॥

## ७९ । पतिरसमासे ॥

पतिस्थः पतिष्टादौ स्वरे नाग्निर्भवति असमासे । पत्या, पत्ये । असमास इति किम्? नरपतिना ॥

## ८० । स्त्री नदीवत् ॥

स्त्रीशब्दो नदीवद्भवति त्रिभक्तौ । हे स्त्रि! स्त्रियै, स्त्रीणाम् । विकल्पमपि बाधते ॥

## ८१ । स्त्र्याख्यावियुवौ वामि ॥

स्त्र्याख्याविियुवस्थानावामि परे नदीवद्भवतो वा । श्रीणाम्, श्रियाम्, भ्रूणाम, भ्रुवाम् ॥ स्त्र्याख्याविति किम्? यवक्रियाम्, कटप्रुवाम् ॥

## ८२ । ह्रस्वश्च ङवति ॥

ह्रस्व इदुदेव स्त्र्याख्याविियुवस्थानौ च ङवति परे नदीवद्भवतो वा । बुद्ध्यै, बुद्धये । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे । पट्वै, पटवे स्त्रियै चेति केचित् । ङवतीति किम्? हे श्रीः, हे भ्रूः । अप्रसिद्धमुपमेयमिति ॥

## ८३ । नपुंसकात् स्यमोर्लोपो न च तदुक्तम् ॥

नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति तदुक्तं च कार्य्यं न भवति । पयः, पयः । तत्, तत् । सुसखि, सुसखि । नपुंसकादिति किम्? सुपया गौः ॥

## ८४ । अकारादसम्बुद्धौ मुश्च ॥

अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति मुरागमश्च असम्बुद्धौ । कुलम्, अतिजरसम् । असम्बुद्धाविति किम्? हे कुल ॥

## ८५ । अन्यादेस्तु तुः ॥

अन्यादेर्गणान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति तुरागमश्च । अन्यत्, अन्यतरत्, इतरत्, कतरत्, कतमत् । तुशब्दोऽसम्बुद्धिनिवृत्त्यर्थः । हे अन्यत् ॥

## ८६ । औरीम् ॥

सर्वस्मान्नपुंसकलिङ्गात्पर औरीमापद्यते । कुण्डे, पयसी ॥

## ८७ । जस्शसोः शिः ॥

सर्वस्मान्नपुंसकलिङ्गात्परयोर्जस्शसोः स्थाने शिर्भवति । पद्मानि पयांसि ॥

## ८८ । धुट्स्वराद् घुटि नुः ॥

धुटः पूर्वः स्वरात्परो नपुंसकलिङ्गस्य घुटि परे नुरागमो भवति । पयांसि, पद्मानि, सुकर्तृणि, सुसखीनि । कथं सुकुञ्चि, गोमन्ति, सुवल्गि ? धुटो व्यवहितत्वात् । गोरक्षीति धुट् आदित्वाददोषः । बहूर्जि, बहूर्ञ्जीति वा वक्तव्यम् ॥

## ८९ । नामिनः स्वरे ॥

नाम्यन्तान्नपुंसकलिङ्गात् स्वरे परे नुरागमो भवति । वारिणी, वारिणो । नामिनः स्वर इति किम् ? कुलयोः ॥

## ९० । अस्थिदधिसक्थ्यक्ष्णामन्नन्तष्टादौ ॥

नाम्यन्तानां नपुंसकलिङ्गानामस्थ्यादीनां टादौ स्वरेऽन्तोऽन् भवति । अस्थ्ना, दध्ना, सक्थ्ना, अक्ष्णा, अत्यस्थ्ना, अतिदध्ना कुलेन । अकारोच्चारणं किम् ? अस्थिन, अस्थनि वा स्यात् ॥

## ९१ । भाषितपुंस्कं पुंवद्वा ॥

भाषितपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे पुंवद्भवति वा । कर्त्रा, कर्तृणा कुलेन । मृदवे, मृदुने वस्त्राय । भाषितपुंस्कमिति

किम् ? वारिणे । नाम्यन्तमिति किम् ? सोमपेन कुलेन । नपुंसकमिति किम् ? कल्याण्यै । भाषितपुंस्कोऽर्थ इति किम् ? पीलुने फलाय ॥

## १२ । दीर्घमामि सनौ ॥

नाम्यन्तं लिङ्गं सनावामि परे दीर्घमापद्यते । अग्नीनाम्, धेनूनाम्, कर्तॄणाम् । सनौग्रहणमुत्तरार्थमिह कृते च न्वागमे दीर्घार्थं च ॥

## १३ । नान्तस्य चोपधायाः ॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति सनावामि परे । पञ्चानाम्, सप्तानाम् । सनाविति किम् ? चर्म्मणाम् ॥

## १४ । घुटि चासम्बुद्धौ ॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति घुटि परे असम्बुद्धौ । राजा, राजानौ, सामानि । नान्तस्येति किम् ? जनम्, जनौ । असम्बुद्धाविति किम् ? हे राजन् ॥

## १५ । सान्तमहतोर्नोपधायाः ॥

सान्तमहन्त् इत्येतयोर्नकारस्योपधाया दीर्घो भवति घुट्यसम्बुद्धौ । श्रेयान्, श्रेयांसौ, महान्, महान्तौ । असम्बुद्धाविति किम् ? हे श्रेयन्, हे महन् । सान्तस्येति किम् ? हंसम्, हंसौ । महतः साहचर्य्याद् धातोर्न स्यात्—सुहिन्, सुहिंसौ ॥

## १६ । अपश्च ॥

अप् इत्येतस्य नोपधाया अनोपधायाश्च दीर्घो भवति घुट्यसम्बुद्धौ । आपः, स्वाम्पि, तडागानि । असम्बुद्धाविति किम् ? हे सुव्यप् ॥

## १७ । अन्त्वसन्तस्य चाधातोः सौ ॥

अन्तु अस् इत्येवमन्तस्याधातोः श्रुतस्यातः सावसम्बुद्धौ दीर्घो भवति । भवान्, गोमान्, सुश्रोताः । पुंस्यपि—दीर्घाहो निदाघः ।

अधातोरिति किम् ? पिण्डग्रः, चर्मवः । असम्बुद्धाविति किम् ? हे सुश्रोतः ॥

## ९८ । इन्हन्पूषार्य्यम्णां शौ च ॥

इन् हन् पूषन् अर्य्यमन् इत्येतेषामुपधाया दीर्घो भवति शौ सौ च परे असम्बुद्धौ । सुदण्डीनि, सुवृत्रहाणि, सुपूषाणि, स्वर्यमाणि । दण्डी, वृत्रहा, पूषा, अर्य्यमा । असम्बुद्धाविति किम् ? । हे दण्डिन् । शौ सावेवेति नियमात्—दण्डिनौ, वृत्रहणौ, पूषणौ, अर्यमणौ । अस्मादेव हन उपधाया दीर्घात् क्विपि न दीर्घः ॥

## ९९ । उशनः पुरुदंशोऽनेहसां सावनन्तः ॥

उशनस् पुरुदंशस् अनेहस् इत्येषामन्तोऽन् भवति सावसम्बुद्धौ । उशना, पुरुदंशा, अनेहा । असम्बुद्धाविति किम् ? हे उशनः, हे पुरुदंशः, हे अनेहः । हे उशनन्, हे उशन नञोऽनित्यत्वात् । अकार उच्चारणार्थः ॥

## १०० । सख्युश्च ॥

सख्युरन्तोऽन् भवति सावसंबुद्धौ । सखा । असंबुद्धाविति किम् ? । हे सखे ! ॥

## १०१ । घुटि त्वै ॥

सख्युरन्त ऐर्भवति घुटि परे । सखायौ, सखायः । सखायम्, सखायौ । घुटीति किम् ? सखीन । तुशब्द उत्तरत्रासंबुद्धिनिवृत्त्यर्थः ॥

## १०२ । दिव उद् व्यञ्जने ॥

दिवो वकारस्य उद् भवति व्यञ्जने परे । द्युभ्याम्, द्युषु, द्युगतः, द्युत्वम् । ये न स्यात्—दिव्यम् ॥

## १०३ । औ सौ ॥

दिवो वकारस्य और्भवति सौ परे । द्यौः, हे द्यौः ॥

## १०४ । वाम्या ॥

दिवो वकारस्य आ भवति वा अमि परे । द्याम्, दिवम्, अतिद्याम्, अतिदिवम् ॥

## १०५ । युजेरसमासे नुर्घुटि ॥

युजिरः क्विबन्तस्यासमासे नुर्भवति घुटि परे । युङ्, युञ्जौ, युञ्जः । असमास इति किम् ? अश्वयुक् ॥

## १०६ । अभ्यस्तादन्तिरनकारः ॥

द्वयमभ्यस्तं जक्षादिश्चेति वक्ष्यति । अभ्यस्तात्परोऽन्तिरनकारको भवति घुटि परे । ददत्, दधत्, जक्षत्, जाग्रत् । अभ्यस्तादिति किम् ? लिहन् ॥

## १०७ । वा नपुंसके ॥

अभ्यस्तात्परोऽन्तिरनकारको भवति वा नपुंसके घुटि परे । ददति, ददन्ति । जाग्रति, जाग्रन्ति कुलानि ॥

## १०८ । तुदभादिभ्य ईकारे ॥

तुद इत्यदन्तोऽनुक्रियते । तुदभादिभ्यः परोऽन्तिरनकारको भवति वा ईकारे परे । तुदती, तुदन्ती स्त्री, तुदती, तुदन्ती कुले । भाती, भान्ती स्त्री । भाती, भान्ती कुले । तुदभादिभ्य इति किम् ? पचन्ती, दीव्यन्ती ॥

## १०९ । हनेर्हेर्घिरुपधालोपे ॥

हनेरुपधाया लोपे कृते हेः स्थाने घिर्भवति । वृत्रघ्नः, वृत्रघ्ना । उपधालोप इति किम् ? वृत्रहयति ॥

## ११० । गोरौ घुटि ॥

गोर्मुखस्य और्भवति घुटि परे । गौः, गावौ, गावः । गोर्घुटीति किम् ? हे चित्रगो । हे चित्रगवः ॥

## १११ । अमृशसोरा ॥

गोशब्दस्यान्त आ भवति अमृशसोः परयोः । गाम्, गाः । दीर्घः किम् ? पुंसि स्त्रियाम् आद् आ न स्यात् ॥

## ११२ । पन्थिमन्थृभुक्षीणां सौ ॥

पथ्यादीनामन्त आ भवति सौ परे । पन्थाः, हे पन्थाः । मन्थाः, हे मन्थाः । ऋभुक्षाः हे ऋभुक्षाः ॥

## ११३ । अनन्तो घुटि ॥

पथ्यादीनामन्तोऽन् भवति घुटि परे । पन्थानौ, मन्थानौ, ऋभुक्षाणौ ॥

## ११४ । अघुट्स्वरे लोपम् ॥

पथ्यादीनामन्तोऽघुट्स्वरे लोपमापद्यते । पथः, पथा । मथः, मथा । ऋभुक्षः, ऋभुक्षाः ॥

## ११५ । व्यञ्जने चैषां निः ॥

एषां पथ्यादीनाम् अघुट्स्वरे व्यञ्जने च निर्लोपमापद्यते । पथः, पथिकः, पथयति । मथः, मथिकः, मथयति । पथिभ्याम्, पथित्वम् । मथिभ्याम्, मथित्वम् । एषां ग्रहणमघुट्स्वरव्यञ्जनमात्रे निर्लोपार्थम्, तेन—पथिगतः, पथ्युत्तमः । मथिगतः, मथ्युत्तमः ॥

## ११६ । अनुषंगश्चाक्रुञ्चेत् ॥

क्रुञ्च इव क्रुञ्चेदिति लुप्तविभक्तिकं पदम् । अनुषङ्गसंज्ञको नकारो लोपमापद्यते अघुट्स्वरव्यञ्जनयोः । क्रुञ्चेरिदनुबन्धस्य च न भवति । विदुषः, विदुषा, विदुषी, वेदुष्यम् । महतः, महता, महद्भ्याम्, महत्सु, महता । अक्रुञ्चेदिति किम् ? क्रुञ्चः, क्रुञ्भ्याम्, सुकंसः, सुकन्भ्याम् ॥

## ११७ । पुंसोऽन्शब्दलोपः ॥

पुमन्स् इत्येतस्य अन्शब्दस्य लोपो भवति अघुट्स्वरव्यञ्जनयोः । पुंसः, पुंसा, पुंभ्याम्, पुंस्त्वम्, पौंस्नम । अघुट्स्वरव्यञ्जनयोरिति किम् ? पुमांसौ ॥

## ११८ । चतुरो वाशब्दस्योत्वम् ॥

चत्वार् इत्येतस्य वाशब्दस्य उत्वं भवति अघुट्स्वरव्यञ्जनयोः । चतुरः, चातुरिकः, चतुर्थः, प्रियचतयति, चतुर्भिः, चातुर्थ्यम् ॥

## ११९ । अनडुहश्च ॥

अनड्वाह् इत्येतस्य वाशब्दस्य उत्वं भवति अघुट्स्वरव्यञ्जनयोः । अनडुहः, अनडुहा, आनडुहिकः, अनडुद्भ्याम्, अनडुत्त्वम्, अनडुही, अनड्वाही । स्त्री वेत्येके ॥

## १२० । सौ नुः ॥

अनड्वाह् इत्येतस्य सौ परे नुरागमो भवति । अनड्वान् । साविति किम् ? अनड्वाहौ ॥

## १२१ । सम्बुद्धावुभयोर्ह्रस्वः ॥

उभयोश्चतुरनडुहोः संबुद्धौ ह्रस्वो भवति । हे प्रियचत्वः, हे अनड्वन् ॥

## १२२ । अदसः पदे मः ॥

अदसः पदे सति दस्य मो भवति विभक्तौ । अमुष्मात्, अमुष्मिन् । विभक्ताविति किम् ? अदस्यति, अदस्त्वम्, अदः पुत्रः । अदमुयङ्, अमुद्र्यङ्, अमुमुयङ्, अदद्र्यङ्ङिति वक्तव्यम् ॥

## १२३ । अघुट्स्वरादौ सेट् कस्यापि वन्सेर्वशब्दस्योत्वम् ॥

अघुट्स्वरादौ प्रत्यये परे सेट्कस्याप्यसेटकस्यापि वसुसेर्वशब्दस्य उत्वं भवति। पेचुषः, पेचुषा, पेचुषी, पैचुषम्। विदुषः, विदुषा, विदुषी, वैदुषम्। ये च वक्तव्यम्—पैचुष्यम्, वैदुष्यम्॥

## १२४। श्वयुवमघोनां च॥

श्वन् युवन् मघवन् इत्येतेषां वशब्दस्य उत्वं भवति अघुट्स्वरादौ प्रत्यये परे। शुनः, शुना, शुनी। यूनः, यूना, यूनी। मघोनः, मघोना, मघोनी। अप्यधिकारात्—शौवनं मांसम्, यौवनं वर्तते, माघवनः स्थालीपाकः। नह्यते लक्षतः—उपशुनम्, शुनः सङ्कोचः—शौवः॥

## १२५। वाहेर्वाशब्दस्यौ॥

वाहेर्वाशब्दस्यौर्भवति अघुट्स्वरादौ प्रत्यये परे। प्रष्ठौहः, प्रष्ठौहा, प्रष्ठौही, प्राष्ठौहम॥

## १२६। अन्चेरलोपः पूर्वस्य च दीर्घः॥

अन्चेरकारस्य लोपो भवति अघुट्स्वरादौ प्रत्यये परे पूर्वस्य च दीर्घः आन्तरतम्यात्। प्रतीचः, प्रतीचा, प्रतीची, प्रातीच्यम्। गोचः, गोचा, गोची, गौच्यम्॥

## १२७। तिर्य्यङ् तिरश्चिः॥

तिर्य्यन्च् इत्ययं तिरश्चिर्भवति अघुट्स्वरादौ। तिरश्चः, तिरश्चा, तिरश्ची, तैरश्च्यम्॥

## १२८। उदङ् उदीचिः॥

उदन्च् इत्ययम् उदीचिर्भवति अघुट्स्वरादौ। उदीचः, उदीचा, उदीची, औदीच्यम्॥

## १२९। पात्पदं समासान्तः॥

समासस्यान्तः पाच्छब्दः पदमापद्यते अघुट्स्वरादौ। व्याघ्रपदः, व्याघ्रपदा, व्याघ्रपदी, वैयाघ्रपद्यम्, एकपदः, द्विपदः, कुम्भपदी। अस-

मात्राग्न इत्यपि—पन्‌ः पन्थ । पादसमानार्थः पाद्‌शब्दस्तीति मतम् ॥

## १३० । अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ ॥

अनोऽकारस्य लोपो भवति अघुट्‌स्वरादौ स चेद्वमन्तात्संयोगात्परो न भवति स चालुप्तवद्भवति, पूर्वस्य वर्णस्य विधौ कर्त्तव्ये । राज्ञः, राज्ञा, तक्ष्णः, तक्ष्णा, प्रतिदीव्नः, प्रतिदीव्ना । अवमसंयोगादिति किम् ? पर्वणः, चर्मणः ॥

## १३१ । ईङ्योर्वा ॥

ईङी इत्येतयोः परयोरवमसंयोगात्परस्यानोऽकारस्य लोपो भवति वा, स चा लुप्तवद्भवति पूर्वस्य वर्णस्य विधौ कर्त्तव्ये । साम्नी, सामनी, राज्ञि, राजनि । ङेः साहचर्याद् राज्ञीति नित्यम् । अवमसंयोगादिति किम् ? पर्वणी, चर्मणी ॥

## १३२ । आ धातोरघुट्‌स्वरे ॥

धातोराकारस्य लोपो भवति अघुट्‌स्वरे । कीलालपः, कीलालपा । पुनरघुट्‌स्वरग्रहणं सम्बन्धाधिकारनिवृत्त्यर्थम्, तेन—शङ्खध्मः, शङ्खध्मा ॥

## १३३ । ईदूतोरियुवौ स्वरे ॥

धातोरीदूतोरियुवौ भवतः विभक्तिस्वरे यथासंख्यम् । नियौ, नियः, लुवौ, लुवः । विभक्तिस्वर इति किम् ? न्यर्थः, ल्वर्थः । स्वायम्भुवमिति वक्तव्यम् ॥

## १३४ । सुधीः ॥

सुधीशब्द इयं प्राप्नोति विभक्तिस्वरे । सुधियौ, सुधियः । सुधीरिति किम् ? प्रध्यौ, प्रध्यः ॥

## १३५ । भूरवर्षाभूरपुनर्भूः ॥

भूवच' प्राप्नोति विभक्तिस्वरे अवर्षाभूरपुनर्भूः। मित्रभुवौ, मित्रभुवः। अतिभुवौ, अतिभुवः। अवर्षाभूरपुनर्भूरिति किम्? वर्षाभ्वौ, पुनर्भ्वौ॥

## १३६। अनेकाक्षरयोस्त्वसंयोगाद्यवौ॥

अनेकाक्षरयोर्लिङ्गयोर्यावीदूतौ तयोर्धातोरसंयोगात्परयोर्यवौ भवतः विभक्तिस्वरे यथासंख्यम्। ग्रामण्यौ, ग्रामण्यः। यवल्वौ, यवल्वः। अनेकाक्षरयोरिति किम्? नियौ, लुवौ। असंयोगादिति किम्? यवक्रियौ, कटप्रुवौ। अव्ययकारकाभ्यामेवायं विधिः।

## १३७। भ्रूर्धातुवत्॥

भ्रूशब्दो धातुवद्भवति विभक्तिस्वरे। भ्रुवौ, भ्रुवः। अतिदेशोऽयम्॥

## १३८। स्त्री च॥

स्त्रीशब्दो धातुवद्भवति विभक्तिस्वरे। स्त्रियौ, स्त्रियः॥

## १३९। वाम्शसोः॥

स्त्रीशब्दोऽमशसोः परयोर्धातुवद्भवति वा। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः।

## १४०। भवतो वादेरुत्वं संबुद्धौ॥

भवतोऽवयवस्य वादेरुत्वं भवति वा सम्बुद्धौ। हे भोः, हे भवन्। सन्निपातलक्षणात् संबुद्धेर्लोपो न स्यात्।

## १४१। अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक् कः॥

अव्ययानां सर्वनाम्नां वान्त्यात् स्वरात् पूर्वोऽक्प्रत्ययो भवति वा, कप्रत्ययश्च बहुलम्। उच्चकैः, उच्चैः। नीचकैः, नीचैः। सर्वकः, सर्वः। विश्वकः, विश्वः, युष्मकाभिः युष्माभिः। अस्मकाभिः, अस्माभिः। विभक्तेश्च पूर्व इष्यते—त्वयका, मयका। प्राक्कालस्य च—पचतकि,

पचति, भिन्नकि, भिन्धि । कप्रत्ययश्च—यावकः, मणिकः । अज्ञाने कुत्सायां च—अश्वकः । दयायाम्—वत्सकः । पचकिः, पचि । इह नु ते बालकाः, गृहाद् दूरं मा गाः ॥ अल्पे—तैलकम्, ह्रस्वे—वृक्षकः । संज्ञायाम्—देवदत्तकः ॥

## १४२ । के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम् ॥

के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारमापद्यते । सर्विका, इष्टिका, पाचिका, पाठिका । क इति किम् ? चेतना । प्रत्यय इति किम् ? तका । स्त्रीति किम् ? पाचकाभ्याम् । कृत इति किम् ? पुत्रकाम्या । बहुलाधिकारात्—यका, सका, जीवका, नन्दका—आशिष्यकः ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये द्वितीयः पादः समाप्तः ॥

---

## १४३ । युष्मदस्मदोः पदं पदात् षष्ठीचतुर्थीद्वितीयासु वस्नसौ ॥

युष्मदस्मदोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु बहुत्वे निष्पन्नं यथासंख्यं वस् नसौ प्राप्नोति वा । पुत्रो युष्माकम्, पुत्रोऽस्माकम्, पुत्रो वः, पुत्रो नः, पुत्रो युष्मभ्यम्, पुत्रोऽस्मभ्यम्—पुत्रो वः, पुत्रो नः, पुत्रो युष्मान्, पुत्रोऽस्मान्—पुत्रो वः, पुत्रो नः । युष्मदस्मदोरिति किम् ? पुत्रस्तेषाम् । पदादिति किम् ? युष्माकम्, अस्माकम् ॥

## १४४ । वाम्नौ द्वित्वे ॥

युष्मदस्मदोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु द्वित्वे निष्पन्नं यथासंख्यं वाम्नावित्येतौ प्राप्नोति वा । ग्रामो युवयोः, ग्राम आवयोः—ग्रामो वाम्, ग्रामो नौ । एवं दीयते, पातु । आस्विति किम् ? भक्तौ युवाम्, भक्तावावाम् ॥

## १४५। त्वन्मदोरेकत्वे ते मे त्वा मा तु द्वितीयायाम् ॥

एकत्वे वर्तमानयोर्युष्मदस्मदोस्त्वन्मद्भूतयोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयास्वेकत्वे निष्पन्नं यथासंख्यं ते मे इत्येतौ प्राप्नोति वा। त्वा मा तु द्वितीयायाम्। पुत्रस्तव, पुत्रो मम, पुत्रस्ते, पुत्रो मे, एवं दास्यति। पुत्रस्त्वा, पुत्रो मा पातु ॥

## १४६। न पादादौ ॥

पादस्यादौ वर्त्तमानानां युष्मदस्मदादीनां पदमेतानादेशान् प्राप्नोति। रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता। स एव नाथो भगवानस्माकं पापनाशनः। पादादाविति किम्? पान्तु वो नरसिंहस्येत्यादि ॥

## १४७। चादियोगे च ॥

चादिना योगे वर्त्तमानानां युष्मदस्मदादीनां पदमेतानादेशान् प्राप्नोति। पुत्रो युष्माकं च, पुत्रोऽस्माकं च। एवमादि—च, वा, ह, अह, एव। गौणयोगे न स्यात्—ग्रामश्च ते स्वम्, नगरं च मे स्वम् ॥

## १४८। एषां विभक्तावन्तलोपः ॥

विभक्तौ परतो वर्त्तमानानामेषामन्तस्य लोपो भवति। युष्मभ्यम्, अस्मभ्यम्, अतित्वान्, अतिमान्, त्वयि, मयि। विभक्ताविति किम्? युष्मत्पुत्रः, त्वदीयः।

## १४९। युवावौ द्विवाचिषु ॥

युष्मदस्मदोर्द्विवाचिषु परतो युवावौ भवतः यथासंख्यम्। युवाभ्याम्, आवाभ्याम्, अतियुवाभिः, अत्यावाभिः। भुतयोर्द्विवाचिष्विति किम्? त्वां युष्मानतिक्रान्तौ—अतित्वाम्, अतियुष्माम्। युवयोः पुत्रः—युष्मत्पुत्रः, युवयोरयम्—युष्मदीयः। प्रत्ययलोपलक्षणेनान्तलोपात् ॥

## १५० । अमौ चाम् ॥

युष्मदस्मदादिभ्यः परोऽम् औ च आम् भवति । त्वाम्, माम्, युवाम् आवाम्, द्वित्वाऽद्यधिकाराद्वा साहचर्य्ये न स्यात् ॥

## १५१ । आन् शस् ॥

युष्मदस्मदादिभ्यः परः शस आन् भवति । युष्मान्, अस्मान्, अतित्वान्, अतिमान ॥

## १५२ । त्वमहम् सौ सविभक्त्योः ॥

त्वन्मदोर्युष्मदस्मदोश्च सौ सविभक्त्योस्त्वमहमित्येतौ भवतः यथासंख्यम् । त्वम्, अहम्, अतित्वम्, अत्यहम् । सविभक्त्योरिति किम् ? अधित्वत् । अधिमत्, लुक् ॥

## १५३ । यूयम् वयम् जसि ॥

त्वन्मदोर्युष्मदस्मदोश्च जसि सविभक्त्योर्यूयम् वयमित्येतौ भवतः यथासंख्यम् । यूयम्, वयम् , अतियूयम् , अतिवयम् ॥

## १५४ । तुभ्यम् मह्यम् ङयि ॥

त्वन्मदोर्युष्मदस्मदोश्च ङयि सविभक्त्योस्तुभ्यम् मह्यमित्येतौ भवतः यथासंख्यम् । तुभ्यम्, मह्यम्, अतितुभ्यम्, अतिमह्यम् ॥

## १५५ । तव मम ङसि ॥

त्वन्मदोर्युष्मदस्मदोश्च ङसि सविभक्त्योस्तव मम इत्येतौ भवतः यथासंख्यम् । तव, मम, अतितव, अतिमम । युवावादिषु कृतेषु पश्चादक्—युवकाभ्याम्, आवकाभ्याम् ॥

## १५६ । अत् पञ्चम्यद्वित्वे ॥

युष्मदस्मदादिभ्योऽद्वित्वे वर्त्तमाना पञ्चम्यत् भवति । त्वत्, मत्, युष्मत्, अस्मत्, अतियुवत्, अत्यावत् । अद्वित्व इति किम् ? युवाभ्याम्, आवाभ्याम् ॥

## १५७ । भ्यसभ्यम् ॥

युष्मदस्मदादिभ्यः परो भ्यस् अभ्यम् भवति । युष्मभ्यम्, अस्मभ्यम्, अतित्वभ्यम्, अत्यस्मभ्यम् । अकारोच्चारणं किम् ? युष्मेभ्यं माभूत् ॥

## १५८ । सामाकम् ॥

आभ्यां परः स्वागमयुक्त आम् आकम्भवति । युष्माकम्, अस्माकम् । सामिति किम् ? प्रियुष्मयाम्, अतित्वमाम् ॥

## १५९ । एत्वमस्थानिनि ॥

स्थानं प्रसङ्गो वा । अस्थानिन्यप्रसङ्गिन्यनादेशिनि स्यादावेषामन्तस्य एत्वं भवति । त्वया, मया, युवयोः, आवयोः, त्वयि, मयि, अतित्वयि, अतिमयि । अस्थानिनीति किम् ? युष्मान्, अस्मान् ॥

## १६० । आत्वं व्यञ्जनादौ ॥

एषामन्तस्यात्वं भवति अस्थानिनि व्यञ्जनादौ स्यादौ । युवाभ्याम्, आवाभ्याम्, अतियुवाभिः, अत्यावाभिः, अतित्वासु, अतिमासु । आदिग्रहणं साक्षात्प्रतिपत्त्यर्थम्—तेन युष्मत्पुत्रः, अस्मत्पुत्रः, अधित्वत्, अधिमत्, कुलम् ॥

## १६१ । रैः ॥

रैशब्द आत्वं प्राप्नोति व्यञ्जनादौ स्यादौ । राः, राभ्याम् । अतिराभ्यां कुलाभ्याम् । सामान्यादिति किम् ? अतिरि कुलम् ॥

## १६२ । अष्टनः सर्वासु ॥

अष्टनोऽन्तस्य आत्वं भवति सर्वासु विभक्तिषु । अष्टाभिः, अष्टाभ्यः, अष्टासु, प्रियाष्टाः, प्रियाष्टौ ॥

## १६३ । औ तस्माज्जस्शसोः ॥

तस्मादष्टनः कृताकारात्परयोः सर्वयोर्जस् शसोः स्थाने और्भवति ।

अष्टौ, अष्टौ । तस्माद्ग्रहणमात्वस्यानित्यार्थम्, तेन—अष्टभिः, अष्टसु, वा स्यात् ॥

## १६४ । अर्वन्नर्वन्तिरसावनञ् ॥

अर्वन्शब्दोऽर्वन्तिर्भवति असौ प्रत्यये परे, स चेदनञ् । अर्वन्तौ, अर्वन्तः अर्वत्सु, आर्वतम्, आर्वत्यम्, अर्वती । असाविति किम्? अर्वा । अनञिति किम्? अनर्वाणौ ॥

## १६५ । सौ च मघवान् मघवा वा ॥

विभक्तौ सौ च परतो मघवन्शब्दो मघवन्तुर्भवति वा । मघवान्, मघवन्तौ, मघवन्तः, मघवत्सु । तद्धिते स्वरे ये च स्त्रीकारे—माघवतम्, माघवत्यम्, मघवती । पक्षे मघवा, मघवानौ ॥

## १६६ । जरा जरस् स्वरे वा ॥

जराशब्दो जरस् भवति वा विभक्तिस्वरे । जरे, जरसौ । जराः, जरसः । गणपाठाच्च उपजरसमिति नित्यम् ॥

## १६७ । त्रिचतुरोः स्त्रियां तिसृ चतसृ विभक्तौ ॥

स्त्रियां वर्त्तमानयोस्त्रिचतुरोः तिसृ चतसृ इत्येतौ भवतः विभक्तौ यथासंख्यम् । तिस्रः, चतस्रः, तिसृभिः, चतसृभिः, प्रियतिसृ, प्रियचतसृ कुलं वा ॥

## १६८ । तौ रं स्वरे ॥

तौ तिसृचतस्रौ रं प्राप्नुतः विभक्तिस्वरे । तिस्रः, चतस्रः । बाधकबाधनार्थोऽयं योगः ॥

## १६९ । न नामि दीर्घम् ॥

तौ तिसृचतस्रौ दीर्घं न प्राप्नुतः समावामि परे । तिसृणाम्, चतसृणाम् ॥

## १७० । नॄ वा ॥

नृशब्दो दीर्घं प्राप्नोति वा सनामामि परे । नृणाम्, नृणाम् ॥

## १७१ । त्यदादीनाम विभक्तौ ॥

त्यदादीनामन्तस्य अकारो भवति विभक्तौ । स्यः, त्यौ, सः, तौ, यत्र, तत्र । सर्वनामान्तर्गणो द्विपर्य्यन्त इह त्यदादिः । विभक्ताविति किम् ? त्यदीयः ॥

## १७२ । किम् कः ॥

किम्शब्दः को भवति विभक्तौ । कः, कौ, कदा । विभक्ताविति किम् ? किंवान् ॥

## १७३ । दोऽद्वेर्मः ॥

त्यदादीनां दकारस्य मो भवति विभक्तावद्वेः । इमौ, इमको । अद्वेरिति किम् ? द्वौ ॥

## १७४ । सौ सः ॥

त्यदादीनां दकारस्य सो भवति सौ विभक्तौ । असौ, असकौ । साक्षात्साविति किम् ? असौ पुत्रोऽस्येति अदःपुत्रः ॥

## १७५ । तस्य च ॥

त्यदादीनां तकारस्य सो भवति सौ विभक्तौ । स्यः, स्यकः । सः, सकः । साक्षात्साविति किम् ? तत्पुत्रः ॥

## १७६ । इदमियमयम् पुंसि ॥

इदम् इयम् भवति अयम् च पुंसि सौ विभक्तौ । इयं स्त्री । अयं पुमान् । इदं कुलमिति तदुक्तप्रतिषेधात् । साक्षात्साविति किम् ? इदंपुत्रः ॥

## १७७ । अद् व्यञ्जनेऽनक् ॥

इदमोऽग्वर्जितोऽद्भवति व्यंजनादौ विभक्तौ । आभ्याम्, एभिः ।

अनगिति किम्? इमकैः । साक्षाद्विभक्ताविति किम्? अस्य पुत्रः— इदंपुत्रः ॥

## १७८ । टौसोरन ॥

इदमोऽग्वर्जितस्य टौसोर्विभक्त्योरनादेशो भवति । अनेन, अनयोः । अनगिति किम्? इमकेन, इमकयोः ॥

## १७९ । एतस्य चान्वादेशे द्वितीयायां चैन ॥

एतस्येदमश्च टौसोर्विभक्त्योर्द्वितीयायां च कथितस्यैवानुकथनविषये एनादेशो भवति । एतं व्याकरणमध्यापय, अथो एनं वेदमध्यापय । इमं घटमानय, अथो एनं परिवर्त्तय । एतेन रात्रिरधीता, अथो एनेनाहरप्यधीतम् । एतयोः शोभनं शीलम्, अथो एनयोश्च प्रभूतं स्वमित्यादि योज्यम् ॥

## १८० । तस्माद् भिस् भिर् ॥

तस्मादिदमः कृताकारात्परो भिस् भिर्भवति । एभिः, केचित्तस्मादिति किम्? इमैर्गुणैः सप्तर्षयः स्वर्गं गताः ॥

## १८१ । अदसश्च ॥

अदसोऽग्वर्जितात् परो भिस् भिर्भवति । अमीभिः । अनगिति किम्? अमुकैः । चकार उत्तरत्रानन्निवृत्त्यर्थः ॥

## १८२ । सावौ सिलोपश्च ॥

अदसोऽन्तस्य और्भवति सौ परे सिलोपश्च । असौ, असकौ ॥

## १८३ । उत्वं मात् ॥

अदसो मात्परस्य वर्णमात्रस्य उत्वं भवति । अमुम्, अमू, अमून् । मादिति किम्? अमुकाभ्याम् ॥

## १८४ । एद् बहुत्वे त्वी ॥

अदसो मात्परस्य बहुत्वे निष्पन्न एत् ईर्भवति । अमी, अमीभ्यः ।

बहुत्व इति किम् ? अमू । मादिति किम् ? अमुकेभ्यः । तुशब्द उत्तरत्र बहुत्वनिवृत्त्यर्थः ॥

## १८५ । अपां भे दः ॥

अपां विभक्तौ भे दो भवति । अद्भिः, स्वद्भ्याम् । विभक्ताविति किम् ? अब्भारः ॥

## १८६ । विरामव्यञ्जनादिष्वनडुन्नहिवनसीनां च ॥

विरामे व्यञ्जनादिषु चानडुवाहनहिवन्सीनां च लिङ्गानामन्तस्य दो भवति । स्वनडुत्, अनडुद्भ्याम्, उपानत्, उपानद्भ्याम्, सुविद्वत्, विद्वद्भ्याम्, व्यञ्जनमिह सामान्यम्, अनडुत्ता, उपानत्ता, विद्वत्ता । येनेष्यते—अनडुह्यम्, उपानह्यम् ॥

## १८७ । स्रसिध्वसोश्च ॥

स्रसिध्वसोर्लिङ्गयोरन्तस्य विरामे व्यञ्जनादिषु च दो भवति । उखास्रत्, उखास्रद्भ्याम्, उखास्रत्कल्पः । पर्णध्वत्, पर्णध्वद्भ्याम्, पर्णध्वद्भ्यः ॥

## १८८ । हशषछान्तेजादीनां डः ॥

हशषछान्तानां यजादीनां च लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च डो भवति । मधुलिट्, मधुलिड्भ्याम्, मधुलिट्पाशः । सुविट्, सुविड्भ्याम्, सुविट्तरः । षट्, षड्भ्याम्, षड्भ्यः, षट्त्वम् । शब्दप्राट्, शब्दप्राड्भ्याम्, शब्दप्राट्त्वम् । देवेट्, देवेड्भ्याम्, देवेट्त्वम्, रज्जुसृट्, रज्जुसृड्भ्याम्, रज्जुसृट्त्वम् । यज् सृज् मृज् राज् भ्राज् भ्रस्ज् भ्रस्ज् परिव्राज् एते यजादयः ॥

## १८९ । दादेर्हस्य गः ॥

लिङ्गस्य हस्य दादेर्विरामे व्यञ्जनादिषु च गो भवति । गोधुक्, गोधुग्भ्याम्, गोधुक्कमः ।

## १९० । चवर्गदृगादीनां च ॥

चवर्गान्तस्य दृश इत्येवमादीनां च लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च गो भवति । वाक्, वाग्भ्याम्, वाक्त्वम्, तृष्णक्, तृष्णग्भ्याम्, तृष्णक्त्वम्, दृक्, दृग्भ्याम्, दृक्त्वम् । दृश् स्पृश् मृश् दधृष् दिश् उष्णिह् ऋत्विज् स्रज् असृज् एते दृगादयः ॥

## १९१ । मुहादीनां वा ॥

मुहादीनां लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च गो भवति वा । मुक्, मुग्भ्याम्, मुक्त्वम्, मुट्, मुड्भ्याम्, मुट्त्वम् । मुह् दुह् स्नुह् ष्णिह् नश् एते मुहादयः ॥

## १९२ । हचतुर्थान्तस्य धातोस्तृतीयादेरादि-चतुर्थत्वमकृतवत् ॥

धातोरवयवस्य हचतुर्थान्तस्य तृतीयादेरादिचतुर्थत्वं भवति विरामे व्यञ्जनादिषु च, तच्चाकृतवत् । निघुट्, निघुड्भ्याम्, निघुट्त्वम् । ज्ञानभुत्, ज्ञानभुद्भ्याम्, ज्ञानभुत्त्वम् । गर्दभयतेः क्विप्— गर्धप्, गर्धब्भ्याम्, गर्धप्त्वम् । धातोरिति किम् ? दामलिट् । तृतीयादेरिति किम् ? चित्रकुत् । अकृतवदिति किम् ? गोधुक् ॥

## १९३ । सजुषाशिषो रः ॥

सजुषाशिषोरन्तस्य विरामे व्यञ्जनादिषु च रो भवति । सजूः, सजूर्भ्याम्, सजूःषु, सजूस्त्वा । आशीः, आशीर्भ्याम्, आशीःषु, आशीस्त्वा ॥

## १९४ । इरुरोरीरूरौ ॥

इरुरोर्धातोर्विरामे व्यञ्जनादिषु च यथासंख्यमीरूरौ भवतः । गीः, गीर्भ्याम्, गीर्षु, गीस्तरा । धूः, धूर्भ्याम्, धूर्षु, धूस्तरा ॥

## १९५ । अह्नः सः ॥

अहन् इत्येतस्य विरामे व्यञ्जनादिषु च सो भवति। अहः, अहोभ्याम्, अहस्त्वम ॥

## १९६। संयोगान्तस्य लोपः ॥

संयोगान्तस्य लोपो भवति विरामेव्यञ्जनादिषु च। विद्वान्, कटचिकीः, पुम्भ्याम्, पुंसु ॥

## १९७। संयोगादेर्धुटः ॥

संयोगादेर्धुटो लोपो भवति विरामे व्यञ्जनादिषु च। मस्जेः—साधुमक्, साधुमग्भ्याम्, साधुमक्त्वम्। तक्षेः—साधुतट् साधुतड्भ्याम्, साधुतट्त्वम्। विरामे व्यञ्जनादिष्विति किम्? गोरक्षौ। पुनः संयोगग्रहणमिह पूर्वसिद्धानित्यार्थम्। तेन—मांसपिपक्। पूर्वसिद्ध रात्सस्यैव लोपः—ऊर्क्, ऊर्ग्भ्याम् ॥

## १९८। लिङ्गान्तनकारस्य ॥

लिङ्गान्तनकारस्य लोपो भवति विरामे व्यञ्जनादिषु च। राजा, राजभ्याम्, राजभिः, राजसु, राजत्वम्। लिङ्गान्तनकारस्येति किम्? अहन्। पुनर्लिङ्गग्रहणमुत्तरत्र सामान्यार्थम् ॥

## १९९। न संबुद्धौ ॥

लिङ्गान्तनकारस्य लोपो न भवति संबुद्धौ। हे राजन्, पृथक्त्वान्नपुंसकस्य वा—हे साम, हे सामन् ॥

## २००। नसंयोगान्तावलुप्तवच्च पूर्वविधौ ॥

नकारसंयोगान्तौ लुप्तावप्यलुप्तवद्भवतः पूर्वविधौ लिङ्गान्तदीर्घादिके कर्त्तव्ये। राजभ्याम्, राजभिः, राजसु, विद्वान्, सुकन्भ्याम् ॥

## २०१। इसुसदोषां घोषवति रः ॥

इसन्तस्य उसन्तस्य दोस्शब्दस्य च घोषवति परे रो भवति। सर्पिर्भ्याम्, धनुर्भ्याम्, दोर्भ्याम्। घोषवतीति किम्? सर्पिःषु, धनुःषु दोःषु। मे र इति सिद्धे घोषवतीत्युत्तरार्थं च ॥

## २०२। धुटां तृतीयः ॥

धुटां वर्णानां तृतीयो भवति घोषवति सामान्ये। योषिद्भ्याम्, विश्वलिड्भिः, मज्जति, लज्जते, भृज्जति ॥

## २०३। अघोषे प्रथमः ॥

अघोषे परे धुटां वर्णानां प्रथमो भवति। षट्सु, ज्ञानभुत्सु, इच्छति, गच्छति ॥

## २०४। वा विरामे ॥

विरामे धुटां वर्णानां प्रथमस्तृतीयो भवति वा। विधप्, विधब्, वाक्, वाग् ॥

## २०५। रेफसोर्विसर्जनीयः ॥

रेफसकारयोर्विसर्जनीयो भवति विरामे शब्दच्छेदे घोषवत्यघोषे च। गीः, धूः, वृक्षः, पयोभ्याम्, पयःसु। वाधिकाराद्विभक्तिव्यञ्जने रेफस्य न स्यात्। गीर्षु, धूर्षु। भवति च—सजूषुः, आशीःषु ॥

## २०६। विरामव्यञ्जनादावुक्तं नपुंसकात्-स्यमोर्लोपेऽपि ॥

विरामे व्यञ्जनादौ च यदुक्तं नपुंसकलिङ्गात्परयोः स्यमोर्लोपेऽपि तद्भवति। तस्यैव श्रुतत्वात्। सुवाक्, सुवाग्, सुपथि, सुविद्युत्, सुपुम, सुचतुः, सुष। एवम् वस्त्रावृत्, देवेडित्यादयः। अपिग्रहणं व्यभिचारार्थम्, तेनेदमत्वं न स्यात् ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये तृतीयः पादः समाप्तः ॥



# कारक-प्रकरणम् ।

## २०७ । अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः ॥

अव्ययीभावसमासादकारान्ताद्विभक्तीनां स्थानेऽम् भवति अपञ्चम्याः । उपकुम्भम् । अव्ययीभावादिति किम् ? कष्टश्रितः । विभक्तीनामिति किम् ? उपकुम्भता । अपञ्चम्या इति किम ? उपकुम्भात् ॥

## २०८ । वा तृतीयासप्तम्योः ॥

अव्ययीभावसमासादकारान्तात्परयोस्तृतीयासप्तम्योः स्थानेऽम् भवति वा । उपकुम्भम्, उपकुम्भेन, उपकुम्भम्, उपकुम्भे ॥

## २०९ । अन्यस्माल्लुक् ॥

अकारान्ताद्योऽन्योऽव्ययीभावसमासस्तस्माद्विभक्तीनां लुग्भवति । उपवधु, उपकर्तृ ॥

## २१० । अव्ययाच्च ॥

अव्ययमसंख्यम् । अव्ययाच्च विभक्तीनां लुग्भवति । स्वः, प्रातः, च, वा, ह, अह । एवमन्येऽपि । पदसंज्ञार्थमिदम् ॥

## २११ । रूढानां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्य ॥

जनपदसमानशब्दानां क्षत्रियाणां रूढसंज्ञा । रूढानां बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति । पञ्चालस्यापत्यानि पञ्चालाः, एवं विदेहाः, अङ्गाः, वङ्गाः, कलिङ्गाः, मगधाः, सुरमसाः, अणो लुक् प्रत्यग्रथाः, कलकूटाः, अश्मकाः, इञो लुक् । बहुत्व इति किम ? आङ्गः, आङ्गौ । प्रियवाङ्गा इति समासोऽत्र बहुत्वे न प्रत्ययः । अस्त्रियामिति किम् ? कालिङ्ग्यः । अपत्यप्रत्ययस्येति किम् ? पञ्चालानामिमे भृत्याः—पाञ्चालाः ॥

## २१२ । गर्गयस्कविदादीनां च ॥

गर्गादीनां यस्कादीनां विदादीनां च बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति । गर्गाः, वत्साः—यञस्य लुक् । यस्काः, लह्याः—अणो लुक् । विदाः, उर्वाः—अत्रापत्यञां लुक् । यस्कादयो नानापत्यप्रत्ययान्ताः, विदादयोऽपि पौत्राद्यञन्ताः ॥ प्रियगर्गाः, प्रियवत्साः, प्रियविदाः, प्रत्ययोऽत्र बहुत्वे लुक् स्यादेव । गार्ग्यकुलम्, गर्गकुलमिति—गार्ग्यस्य हि यत्कुलं, गर्गस्य गर्गाणामपि तत्कुलमित्यभेदेनोच्यते ॥

## २१३ । भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यश्च ॥

भृग्वादिभ्यो बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति । अत्रेरेयण्, इतरेभ्य ऋषिभ्योऽण् । भृगवः, अत्रयः, अङ्गिरसः, कुत्साः, वसिष्ठाः, गोतमाः । अस्त्रियामिति किम् ? भार्गव्यः ॥

## २१४ । यतोऽपैति भयमादत्ते वा तदपादानम् ॥

यस्मादपैति यस्माद्भयं भवति यस्मादादत्ते वा तत्कारकमपादानसंज्ञं भवति । वृक्षात्पर्णं पतति, व्याघ्राद्बिभेति, चौराद्बिजते, उपाध्यायादधीते, उपाध्यायादागमयति । यत इत्यवधिमात्रार्थम्, तेन धावतोऽश्वात्पतितः । तथा अधर्माज्जुगुप्सते, अधर्माद्विरमति, धर्मात्प्रमाद्यति । अध्ययनात्पराजयते, उपाध्यायादन्तर्धत्ते, शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवति । प्रासादात्प्रेक्षते, आसनात्प्रेक्षते । कुतो भवान् ? पाटलिपुत्रात् ॥

## २१५ । ईप्सितं च रक्षार्थानाम् ॥

रक्षार्थानां धातूनां प्रयोगे यदीप्सितमनीप्सितं च तत्कारकमपादानसंज्ञं भवति । यवेभ्यो गां रक्षति, यवेभ्यो गां निषेधति, शालिभ्यः शुकान्वारयति, पापेभ्य आत्मानं रक्षति, कूपादन्धं वारयत्यपि । ईप्सिते कर्मसंज्ञां बाधते । अपादानप्रदेशाः—"अपादाने पञ्चमी" त्येवमादयः ॥

## २१६ । यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम् ॥

यस्मै दातुमिच्छा, यस्मै रोचते, धारयते, वा तत्कारकं सम्प्रदानसंज्ञं भवति । ब्राह्मणाय गां ददाति । देवदत्ताय रोचते मोदकः । यज्ञदत्ताय स्वदते दधि । विष्णुमित्राय गां धारयते । कथं देवदत्ताय श्लाघते, छात्राय ह्नुते, छात्राय तिष्ठते कुमारी, छात्राय शपते, पुष्पेभ्यः स्पृहयति, छात्राय राध्यति, छात्रायेक्षते, छात्राय प्रतिश्रृणोति, छात्राय आश्रृणोतीति ? तादर्थ्ये चतुर्थ्या सिद्धम् । छात्राय क्रुध्यति, मित्राय द्रुह्यति, मित्रायेर्ष्यति, मित्राया सूयति,—यस्मै कुप्यतीति वक्तव्यम् । दातुमिच्छेति किम् ? राज्ञो दण्डं ददाति । सम्प्रदानप्रदेशाः—"सम्प्रदाने चतुर्थी" त्येवमादयः ॥

## २१७ । य आधारस्तदधिकरणम् ॥

आध्रियन्ते क्रिया यस्मिन्नित्याधारः । आधारो यस्तदधिकरणसंज्ञं भवति । कटे आस्ते, तिलेषु तैलम्, दिवि देवाः । तथा गङ्गायां घोषः, अङ्गुल्यग्रे करिशतम् । अधिकरणप्रदेशा —"अधिकरणे सप्तमी" त्येवमादयः ॥

## २१८ । येन क्रियते तत् करणम् ॥

कर्त्रा येन क्रियते तत्कारकं करणसंज्ञं भवति । दात्रेण धान्यं लुनाति । मनसा मेरुं गच्छति । तथा पशुना रुद्रं यजते । प्रकृत्याभिरूपः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । शतेन परिक्रीतः । शताय परिक्रीतस्त्वं मासं कर्म करिष्यसीति–प्रधानक्रियापेक्षं तादर्थ्यम् । करणप्रदेशाः—"करणे तृतीये" त्येवमादयः ॥

## २१९ । यत् क्रियते तत् कर्म ॥

कर्त्रा यत्क्रियते तत्कारकं कर्मसंज्ञं भवति । कटं करोति ।

ओदनं पचति । आदित्यं पश्यति । तथा—अहिं लङ्घयति । ग्रामं गच्छन्वृक्षमूलान्युपसर्पति । तथा स्तोकं पचति । गां दोग्धि पयः । पौरवं गां याचते । गामवरुणद्धि व्रजम् । छात्रं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । शिष्यं धर्मं ब्रूते । शिष्यं धर्ममनुशास्ति । अजां नयति ग्रामम् । ग्रामं वहति भारम् । हरते कुम्भं भारम् । ग्रामं छात्रशतं जयति । गर्गाञ्शतं दण्डयति । ग्राममधिशेते । ग्राममधितिष्ठति । वृक्षमध्यास्ते । धर्ममभिनिविशते । त्रिरात्रमुपवसति । ग्राममनुवसति । पर्वतमधिवसति । आवसथमावसति । अक्षान्दीव्यति । अक्षैर्दीव्यतीति करणविवक्षा । मासं गुडधानाः । क्रोशं कुटिला नदी । भवतेर्गम्यमानत्वात् । कर्मप्रदेशाः—"कर्मणि द्वितीये" त्येवमादयः ॥

## २२० । यः करोति स कर्ता ॥

यः क्रियां करोति स कर्तृसंज्ञो भवति । छात्रेण हन्यते चैत्रेण कृतम् ॥

## २२१ । कारयति यः स हेतुश्च ॥

तमेव कर्त्तारं यः कारयति स हेतुसंज्ञो भवति । चकारात्कर्तृसंज्ञश्च । हारयति, पाचयति । हेतुकर्तृप्रदेशाः—"धातोश्च हेतौ" इत्येवमादयः । क्रियानिमित्तं कारकं लोकतः सिद्धम् ॥

## २२२ । तेषां परमुभयप्राप्तौ ॥

तेषां कारकाणामुभयप्राप्तौ सत्यं यत्परं तद्भवति । ग्रामाय धनं दत्त्वा तीर्थं गतः, सम्प्रदानमेव । कांस्यपात्र्यां भुङ्क्ते, अधिकरणमेव । मृदुना धनुषा शरान् क्षिपति, करणमेव । तरुं त्यजति खगः, कर्मैव । तथा गां दोग्धि पयः । त्यजति दण्डं दण्डीति कर्तैव । एवमन्येऽपि ॥

## २२३ । प्रथमा विभक्तिर्लिङ्गार्थवचने ॥

अव्यतिरिक्तलिङ्गार्थवचने प्रथमा विभक्तिर्भवति । उच्चैः, नीचैः, वृक्षः, कुण्डम्, कुमारी । द्रोणः, खारी, आढकः, हस्तः, वितस्तिः, दीर्घम् । काष्ठम्, घृतम्, पलम् । एकः, द्वौ, बहवः । सर्वेऽप्यमी लिङ्गार्था अव्यभिचारात् । एकमर्थं द्वौ बहून्वा वक्तीत्यन्वर्थसंज्ञया एकस्मिन्नर्थे एकवचनं द्वयोर्द्विवचनम्, बहुषु बहुवचनम् । सम्पन्नो यव इति जाता-वेकवचनम् । सम्पन्ना यवा इति व्यक्तिभेदेषु बहुवचनम् । वयमिति बाह्याभ्यान्तरिकेषु भावेषु, यथा—गुरुषु । अहमिति पुनरभेदविवक्षाया-मेकवचनम् ॥

## २२४ । आमन्त्रणे च ॥

आमन्त्रणे चार्थे प्रथमा विभक्तिर्भवति । हे पुत्र, हा पुत्र, धिक् पुत्रौ, हे पुत्राः । षष्ठ्यपवादोऽयम् ॥

## २२५ । शेषाः कर्मकरणसम्प्रदानापादानस्वा-म्याद्यधिकरणेषु ॥

शेषा द्वितीयाद्याः षड् विभक्तयः कर्मादिष्वर्थेषु षट्सु यथा संख्यं भवन्ति । कर्मणि—कटं करोति । करणे—परशुना छिनत्ति । सम्प्र-दाने—गुरवे गां ददाति । अपादाने—वृकाद्भयम् । स्वाम्यादौ—देव-दत्तस्य स्वामी, यज्ञदत्तस्य स्वम्, विष्णुमित्रस्य सम्बन्धः । अधिकरणे—कटे आस्ते, अधीती व्याकरणे । तथा साधुर्मातरि, असाधुः पितरी-त्येवमादयः । निमित्तात्कर्मसंयोगे सप्तमी वाच्या । चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥

## २२६ । पर्यपाङ्योगे पञ्चमी ॥

परि अप आङ् एभिर्योगे लिङ्गात्पञ्चमी भवति । इहापपरी वर्जने । आङ् मर्यादाभिविध्योः । परि त्रिगर्तेभ्यो वृष्टो देवः । अप पाटलि-पुत्राद्वृष्टो देवः । आ पाटलिपुत्राद्वृष्टो देवः ॥

## २२७ । दिगितरर्तेऽन्यैश्च ॥

दिश् इतर ऋते अन्य एभिर्योगे लिङ्गात्पञ्चमी भवति । पूर्वो ग्रामात्, उत्तरो ग्रामात्, पूर्वो ग्रीष्माद्वसन्तः, इयमस्याः पूर्वा दिक्, इतरो देवदत्तात्, ऋते देवदत्तात् । ऋते देवदत्तमिति द्वितीयापीष्टा । अन्यो देवदत्तात्, भिन्नो देवदत्तात् ॥

## २२८ । द्वितीयैनेन ॥

एनप्रत्ययान्तेन योगे लिङ्गाद् द्वितीया भवति । दक्षिणेन ग्रामम्, उत्तरेण हिमवन्तम्—अदूरे एनोऽपञ्चम्याः । चकाराधिकाराद् निकषासमयाहाधिगन्तरान्तरेण युक्ता द्वितीया—निकषा ग्रामम्, समया ग्रामम्, हा देवदत्तम्, धिग्देवदत्तम्, अन्तरा गार्हपत्यमाहवनीयं च वेदिः, अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते ॥

## २२९ । कर्मप्रवचनीयैश्च ॥

कर्मप्रवचनीयैर्योगे लिङ्गाद् द्वितीया भवति । वृक्षमभि विद्योतते विद्युत्, वृक्षं वृक्षमभि तिष्ठति, साधुर्देवदत्तो मातरमभि, यदत्र मां परि स्यात्, यदत्र मां प्रति स्यात्, वृक्षमनु विद्योतते विद्युत्, पर्वतमनु वसिता सेना, अन्वर्जुनं योद्धारः, उपार्जुनं योद्धारः । "लक्षणवीप्स्येत्थम्भूतेष्वभिर्भागे च परिप्रती । अनुरेषु सहार्थे च हीने उपश्च कथ्यते" ॥ आधिक्यार्थोपशब्दयोगे सप्तमी वाच्या,—उपखार्य्यां द्रोणः । स्वाम्यर्थाधियोगे च—अधि ब्रह्मदत्तेषु पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति ॥

## २३० । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥

गत्यर्थानां धातूनां चेष्टाक्रियाणां कर्मण्यध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः । ग्रामं गच्छति, ग्रामाय गच्छति । ग्रामं व्रजति, ग्रामाय व्रजति । चेष्टायामिति किम् ? मनसा मेरुं गच्छति । अनध्वनीति

किम् ? अध्वानं गच्छति, पन्थानं गच्छति, पन्थानं व्रजति । मुख्योऽ-ध्वा गृह्यते ।

## २३१ । मन्यकर्मणि चानादरेऽप्राणिनि ॥

मन्यतेः कर्मणि प्राणिवर्जिते द्वितीयाचतुर्थ्यौ भवतः अनादरे गम्य-माने । न त्वा तृणं मन्ये । न त्वा तृणाय मन्ये । न त्वा बुषं मन्ये । न त्वा बुषाय मन्ये ॥ अनादर इति किम ? अश्मानं दृशद्ं मन्ये । प्राणि-संज्ञा नावाद्येरिति—न त्वा नावं मन्ये । न त्वा काकं मन्ये । न त्वान्नं मन्ये । न त्वा शृगालं मन्ये । इह स्यादेव—न त्वा श्वानं मन्ये । न त्वा शुने मन्ये । यदि युष्मदः स्याच्चतुर्थी, तदानादरो न गम्यते ॥

## २३२ । नमःस्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी ॥

नम आदिभिर्योगे लिङ्गाच्चतुर्थी भवति । नमो देवेभ्यः । स्वस्ति प्रजाभ्यः । स्वाहाग्नये । स्वधापितृभ्यः । अलं मल्लो मल्लाय । समर्थो मल्लो मल्लाय । वषडिन्द्राय ॥

## २३२ । तादर्थ्ये ॥

सोऽर्थोऽस्येति तस्मै इदमिति वा तदर्थः । तदर्थभावे द्योत्ये लिङ्गा-च्चतुर्थी भवति । यूपाय दारु । रन्धनाय स्थाली । श्राद्धाय निगल्हते । युद्धाय सन्नह्यते । पत्ये शेते । तथा मूत्राय सम्पद्यते यवागूः । मूत्राय सङ्कल्पते । वाताय कपिलिका विद्युत् ॥

## २३४ । तुमर्थाच्च भाववाचिनः ॥

तुमा समानार्थभाववाचिनः प्रत्ययान्ताल्लिङ्गाच्चतुर्थी भवति । भाववाचिनश्चेति वक्ष्यति । पाकाय व्रजति । पक्तये व्रजति । तुमर्था-दिति किम् ? पाकस्य, त्यागस्य । पथेभ्यो व्रजति, फलेभ्यो व्रजति—तादर्थ्यविवक्षा ॥

## २३५ । तृतीया सहयोगे ॥

सहार्थेन योगे लिङ्गात्तृतीया भवति । पुत्रेण सहागतः । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । पुत्रेण साकम् । पुत्रेण सार्द्धम् । पुत्रेण समम् । तथा पुत्रेणागतः । स्थूलो गोमानिति तृतीयापि षष्ठीवदप्रधानार्थेव ॥

## २३६ । हेत्वर्थे ॥

हेत्वर्थे वर्त्तमानाल्लिङ्गात्तृतीया भवति । धनेन कुलम् । अन्नेन वसति । योग्यतामात्रविवक्षया करणेन सिध्यति ॥

## २३७ । कुत्सितेऽङ्गे ॥

कुत्सितेऽङ्गे वर्त्तमानाल्लिङ्गात्तृतीया भवति । अक्ष्णा काणः । पादेन खञ्जः । पृष्ठेन कुब्जः । अक्षि काणमस्येति प्रधानत्वात्प्रथमैव ॥

## २३८ । विशेषणे ।

विशेषणे वर्त्तमानाल्लिङ्गात्तृतीया भवति । जटाभिस्तापसमद्राक्षीत् । शिखया परिव्राजकमपश्यत् । विशेषण इति किम् ? वृक्षं प्रति विद्योतनम्—लक्षणमात्रे न स्यात् । नीलमुत्पलमिति—लिङ्गार्थमात्रे प्रथमैव ॥

## २३९ । कर्तरि च ॥

कर्त्तरि च कारके वर्त्तमानाल्लिङ्गात्तृतीया भवति । देवदत्तेन कृतम् । चैत्रेण हन्यते ॥

## २४० । कालभावयोः सप्तमी ॥

कालभावयोर्विशेषणभूतयोर्वर्त्तमानाल्लिङ्गात्सप्तमी भवति । शरदि पुष्प्यन्ति सप्तच्छदाः । गोषु दुह्यमानास्वागतः । दुग्धास्वागतः । कालभावयोरिति किम् ? यो जटाभिः स भुङ्क्ते । यो भोक्ता स देवदत्त इति साहचर्य्याद्वा प्रसिद्धा क्रियैव हि विशेषणम् । रुदतः प्राव्राजीदिति सम्बन्धविवक्षापि ॥

## २४१ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च ॥

स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत एभिर्योगे लिङ्गात् षष्ठी भवति सप्तमी च । गवां स्वामी, गोषु स्वामी । गवामीश्वरः, गोष्वीश्वरः । गवामधिपतिः, गोष्वधिपतिः । गवां दायादः, गोषु दायादः । गवां साक्षी, गोषु साक्षी । गवां प्रतिभूः, गोषु प्रतिभूः । गवां प्रसूतः, गोषु प्रसूतः । सम्बन्धोऽत्र स्फुट इति वचनम् ॥

## २४२ । निर्धारणे च ॥

निर्धारणे चार्थे वर्त्तमानाल्लिङ्गात् षष्ठी भवति सप्तमी च । पुरुषाणां क्षत्रियः शूरः, पुरुषेषु क्षत्रियः शूरः । गवां कृष्णा सम्पन्नक्षीरा, गोषु कृष्णा सम्पन्नक्षीरा । गच्छतां धावन्तः शीघ्राः, गच्छत्सु धावन्तः शीघ्राः ॥

## २४३ । षष्ठी हेतुप्रयोगे ॥

हेतोः प्रयोगे वर्त्तमानाल्लिङ्गात् षष्ठी भवति । अन्नस्य हेतोर्वसति । हेत्वर्थे तृतीया प्राप्ते वचनम् ॥

## २४४ । स्मृत्यर्थकर्मणि ॥

स्मरणार्थानां धातूनां प्रयोगे कर्मणि षष्ठी भवति । मातुः स्मरति । पितुरध्येति । उत्तरत्र नित्यग्रहणादनित्यमपि प्रकरणेऽस्मिन्—मातरं स्मरति । कथं माता स्मर्य्यते ? उक्तार्थत्वात् प्रथमैव । मातुः स्मर्य्यत इति यदि सम्बन्धोऽत्र विवक्ष्यते । तथा सर्पिषो दयते । मधुन ईष्टे । सर्पिषो जानीते । मधुनो जानीते । संभ्रान्तिज्ञाने सर्पिषोऽसतः करणस्याभावात्सम्बन्ध एव षष्ठी । एवमन्येऽपि ॥

## २४५ । करोतेः प्रतियत्ने ॥

सतो गुणान्तराधानं प्रतियत्नः । करोतेः कर्मणि प्रतियत्ने गम्यमाने षष्ठी भवति । एधोदकस्योपस्कुरुते । एधोदकमुपस्कुरुते ॥

## २४६। हिंसार्थानामज्वरेः ॥

हिंसार्थानां धातूनां ज्वरिवर्जितानां प्रयोगे कर्मणि षष्ठी भवति। चौरस्य रुजति। दास्या आमयति। चौरस्योज्जासयति। चौरस्य निहन्ति। चौरस्य प्रतिहन्ति। चौरस्य प्रणिहन्ति। चौरस्योन्नाटयति। चौरस्योत्क्राथयति। चौरस्य पिनष्टि। अनित्यमपि—चौरं रुजतीत्यादि। हिंसार्थानामिति किम्? धानाः पिनष्टि। अज्वरेरिति किम्? चौरं ज्वरयति। चौरस्य सन्तापयतीतीष्यत एव ॥

## २४७। कर्तृकर्मणोः कृति नित्यम् ॥

कर्तृकर्मणोः कृत्प्रयोगे नित्यं षष्ठी भवति। भवतः शायिका। भवत आसिका। कर्मणि च—अपां स्रष्टा, पुरां भेत्ता। कृतीति किम्? तद्धितप्रयोगे माभूत्—कृतपूर्वी कटम् ॥

## २४८। न निष्ठादिषु ॥

कर्तृकर्मणोर्निष्ठादिषु षष्ठी न भवति। देवदत्तेन कृतम्। ओदनं भुक्तवान्। ओदनं पचन्। ओदनं पचमानः। तत्र निष्ठादयः—क्त, क्तवन्तु, शन्तृङ्, आन, वन्स, कि, उकञ्, उकञ्, अव्ययखलर्थतृण्। द्विषः शत्रौ वा वक्तव्यम्—चौरं द्विषन्। चौरस्य द्विषन्।

## २४९। षडो णो ने ॥

षडो णो भवति विभक्तौ ने परे। षण्णाम्। विभक्ताविति किम्? षड्नयनम् ॥

## २५०। मनोरनुस्वारो धुटि ॥

मनोरसन्ध्ययोरनुस्वारो भवति धुटि परे। पुंसः, शान्तिः, उञ्छिता, युञ्जौ, स्वाञ्जि। असन्ध्ययोरिति किम्? प्रशान् करोति। स्यादि धुटि पदान्तवत्—पुम्भ्याम्, पुंभ्याम्, प्रशान्भ्याम्, सुकन्भ्याम्। धुटीति किम्? गम्यते, हन्यते ॥

## २५१। वर्गे वर्गान्तः ॥

अनन्त्योऽनुस्वारो वर्गे परे वर्गस्यान्तो भवति । शङ्किता, कुण्ठिता, वञ्चिता, गुञ्जौ, स्वाम्निः । वर्ग इति किम्? आक्रंस्यते ॥

## २५२। तवर्गश्चटवर्गयोगे चटवर्गौ ॥

तवर्गोऽनन्त्यश्चटवर्गयोगे चटवर्गौ प्राप्नोति आसत्तस्मात् । मज्जति, लज्जते, भृज्जति, यज्ञः, याञ्चा, राज्ञः । टवर्गयोगे च—वण्णाम्, अड्डति, अट्टति, अट्टते । चटवर्गयोग इति किम्? । विश्नः, प्रश्नः । अनन्त्य इति किम्? मधुलिट् तरति ॥

## २५३। नामिकरपरः प्रत्ययविकारागमस्थः सिः षं नुविसर्जनीयषान्तरोऽपि ॥

नामिकरेभ्यः परः प्रत्ययविकारागमस्थोऽनन्त्यः सिः षत्वमापद्यते नुविसर्जनीयषान्तरः । अपिशब्दादनन्तरोऽपि । नामिपरस्तावत्—अग्निषु, वायुषु, कपरः—दिक्षु । रपरः—गीर्षु, धूर्षु । विकारस्थः—एषः । आगमस्थः—सर्वेषाम् । नुविसर्जनीयषान्तरः—सर्पींषि, धनूंषि, सुपीःषि । सुतूःषु—रप्रकृतिरनामिपरोऽपीति रत्वे वा वक्ष्यादीकरौ । सर्पिष्षु, धनुष्षु । अपिशब्दस्य बहुलार्थत्वात् समासे अङ्गुलेः सङ्गस्य—अङ्गुलिषङ्गः । तथा भीरोः स्थानस्य—भीरुष्ठानम् । अग्नेः स्तुतः—अग्निष्टुत् । दीर्घात्सोमस्य—अग्नीषोमौ । ज्योतिरायुर्भ्यां च स्तोमस्य—ज्योतिष्टोमः, आयुष्टोमः, अग्निष्टोमः । समास इत्येव—ज्योतिः स्तोमं दर्शयतीत्येवमादयः ॥

## २५४। रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि ॥

रेफषकार ऋवर्णेभ्यः परोऽनन्त्यो नकारो णमापद्यते स्वर ह य व कवर्गपवर्गान्तरोऽपि । स्वरान्तरस्तावत्—करणम्, पुरुषेण, मातृणाम् । हान्तरः—अर्हेण । यान्तरः—आर्य्येण । वान्तरः—पर्वेणा । कवर्गान्तरः—

मूर्धन्येन, मूर्धन्येण । पवर्गान्तरः—शूर्पेण, रेफेण । अनन्तरोऽपि—शीर्णम्, तिसृणाम् । स्वरत्वादनुस्वारविसृष्टाभ्यामपि—बृंहणम्, उरःकेण, उरःपेण, विसर्जनीयोपचारात् जिह्वामूलीयोपध्मानीयाभ्यामपि—उर ≍ केण, उर ≍ पेण । अनन्त्य इति किम् ? वृक्षान् । कथम् अग्निर्नयति ? यस्यैवा नन्त्यो नकारस्तस्यैव रषृवर्णा गृह्यन्ते श्रुतत्वात् । अपिशब्दस्य बहुलार्थत्वात् पूर्वपदस्थेभ्यः संज्ञायाम्—सूर्पणखेत्यादयः ॥

## २५५ । स्त्रियामादा ॥

स्त्रियां वर्तमानाल्लिङ्गादकारान्तात् आप्रत्ययो भवति । स्त्रीपुंनपुंसकानि लोकलिङ्गानुशासनगम्यानि । अजा, एडका, चटका, मूषिका ॥

## २५६ । नदाद्यन्चिवाह्व्यन्स्यन्तृसखिनान्तेभ्य ई ॥

नदादि अन्चि वाह् उ इ अन्सि अन्त् ऋ सखि नान्तेभ्यः स्त्रियां वर्तमानेभ्य ईप्रत्ययो भवति । नदी, मही, भषी, पञ्चवी । अन्चि—प्राची, प्रतिप्राची । वाह्—प्रष्ठौही । उदन्त—पट्वी । इदन्त—दान्ती । अन्स्यन्त—विदुषी, प्रतिविदुषी । अन्तन्त—पचन्ती, अतिपचन्ती, भवती, मघवती । ऋदन्त—कर्त्री, प्रतिकर्त्री । सखि, सखी । नान्त—दण्डिनी । उतो गुणवचनादखरुसंयोगोपधाद्वा—पटुः, पट्वी । बहुरित्यपि स्यात् । खरुरियम्, पाण्डुरियमित्यतो न स्यात् । इतश्च क्तिवर्जिताद्वा—धूलिः, धूली । क्तेस्तु न स्यात्—पङ्क्तिः । स्वसा, दुहिता, ननान्दा, याता, माता, तिस्रः, चतस्र इति प्रत्ययेन विना स्त्रीत्वाभिधानात् पञ्च सप्तेति स्त्रीत्वाभावादेव न भवति । सखीति नित्यार्थम् । नदादिराकृतिगणः ॥

## २५७ । ईकारे स्त्रीकृतेऽलोप्यः ॥

ईकारे स्त्रियां कृतेऽकारो लोप्यो भवति । नदी, मही । स्त्रियामिति किम् ? कुण्डे । कृत इति किम् ? कुण्डेहा ॥

## २५८ । स्वरो ह्रस्वो नपुंसके ॥

नपुंसके वर्तमानः स्वरान्तो ह्रस्वो भवति । सोमपम्, सेनानि, यवलु, अतिरि, अतिनु, कुलम् । स्वरो ह्रस्व इति योगविभागाद् गोरप्रधानस्यान्तस्य स्त्रियामादादीनां चेति ह्रस्वः—चित्रगुः, अतिखट्वः, निष्कौशाम्बिः, अतिकरभोरुः ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये कारकपादः समाप्तः ॥

---

## समास-प्रकरणम् ।

### २५९ । नाम्नां समासो युक्तार्थः ॥

वस्तुवाचीनि नामानि, मिलितं युक्तमुच्यते । नाम्नां युक्तार्थः समाससंज्ञो भवति । ततोऽन्यद्वाक्यमिति करणम् । संज्ञयैव वा विधिरन्वाख्यातः, स पुनरभिधानात् क्वचिद्विकल्पः क्वचिन्नित्यः, क्वचिन्न स्यात् । तथा च वक्ष्यति ॥

### २६० । तत्स्था लोप्या विभक्तयः ॥

तत्स्था युक्तार्थमात्रस्था विभक्तयो लोप्या भवन्ति । नीलोत्पलम्, राजपुरुषः, राजता, पुत्रीयति । क्वचिन्न लुप्यन्तेऽभिधानात्—कण्ठेकालः, उरसिलोमा इत्येवमादयः ॥

### २६१ । प्रकृतिश्च स्वरान्तस्य ॥

स्वरान्तस्य लिङ्गस्य युक्तार्थस्थस्य लुप्तासु विभक्तिषु प्रकृतिश्च भवति । सखा प्रियोऽस्येति सखिप्रियः । सखायं प्राप्तः—सखिप्राप्तः । पितरि साधुः—पितृसाधु । गां गतः—गोगतः । चकारो लोपमपेक्ष्य देवेन्द्रः, खट्वोढः । इति सन्धिः स्यादेव ॥

### २६२ । व्यञ्जनान्तस्य यत्सुभोः ॥

व्यञ्जनान्तस्य लिङ्गस्य युक्तार्थस्थस्य लुप्तासु विभक्तिषु सुभोर्यदुक्तं तद्भवति । सुपि भुवं कार्यं नाप्नोति सुभोर्युगपदुक्तं स्यात् ।

विद्युद्गमनम्, विमानः, चन्द्राकृतिः, ज्ञानमुदायश्रयः । अतिदेशोऽयम् ॥

## २६३ । पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः ॥

यत्र समासे द्वे पदे तुल्याधिकरणे भवतः स कर्मधारयो विज्ञेयः । नीलं च तदुत्पलं चेति नीलोत्पलम् । क्वचिन्नित्यसमासः—कृष्णसर्पः, लोहितशालिः । क्वचिदसमासः—दीर्घश्चारायणः, रामो जामदग्न्यः, व्यासः पाराशर्य्यः, अर्जुनः कार्त्तवीर्य्यः । तथैकाधिकरणत्वात् कृष्टमदी-कृतः, छिन्नप्ररूढः, एकपुरुषः, सर्वान्नम्, जरद्धस्ती, पुराणधान्यम्, नवो-दकम्, केवलान्नम् । तथा—पूर्वेषुकामशमी, संज्ञेयम् । संख्यापूर्वप-देऽपि—सप्तर्षयः, पञ्चाम्राः । तथा—याज्ञिककितवः, एवं पापकुलालः, अनकनापितः । क्वचिदुपमानभूतं विशेषणम्—शस्त्रीव श्यामा, शस्त्री-श्यामा । क्वचिदुपमानभूतं । विशेषणं परं स्यात्—पुरुषो व्याघ्र इव, पुरुषव्याघ्रः, एवं पुरुषसिंहः । तथा—पूर्वपुरुषः, अपरपुरुषः, प्रथमपु-रुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः मध्यमपुरुषः, वीरपुरुषः । एवमश्रेणयः श्रेणयः कृताः—श्रेणीकृताः । तथा—कृताकृ-तम्, भुक्ताभुक्तम्, गतप्रत्यागतम्, यातानुयातम्, अशितानशितम्, क्लिष्टाक्लिशितम्, क्रयाक्रयिका, फलाफलिका, पुटापुटिका, मानोन्मा-निका । तथा—सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्तमपुरुषः ॥ पुरुषो-त्तम इति विशेषणं वा परं स्यात्, उत्कृष्टपुरुषः ॥ तथा—गोवृन्दारकः, गोनागः। अश्वकुञ्जरः, कतरकठः, कतमकठः । किं राजा । इभ्यपोटा, इभ्ययुवतिः । अग्निस्तोक इति विशेषणं वा परं स्यात् । एवं दधिकति-पयानि, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोबष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्यापकः, कठधूर्त्तः । गोमण्डकम्, अश्वमतल्लिका, युवखलतिः, युवखलती, युवपलितः, युवपलिता, युववलिनः, युवव-लिना, युवजरन्, युवजरती । भोज्योष्णम्, तुल्यश्वेतः, सदृशश्वेतः, शुक्लकृष्णः, शुक्लशुक्लः, । कुमारी च सा श्रमणा चेति कुमारश्रमणा, कुमारप्रव्रजितः, कुमारप्रव्रजिता, कुमारपण्डितः, कुमारपण्डिता ।

गोमर्भिणी, भुजगर्भिणी। मयूर इव व्यंसकः—मयूरव्यंसकः, मयूरस्येव विगतांवसावस्येति वा विग्रहः। एवं छात्रव्यंसकः, कम्बोज इव मुण्डः, कम्बोजमुण्डः। उर्ध्वं च तद्वचं चेत्युर्ध्ववचम्। एवमुच्चनीचम्। न किञ्चन—अकिञ्चनम्। नास्य वा किञ्चनास्तीत्यकिञ्चनम्। पूर्वश्चासौ कायश्चेति पूर्वकायः। कायैकदेशो कायः। एवम् अपरकायः, अधरकायः, उत्तरकायः, मध्यकायः, मध्यमकायः, मध्याह्नः। अर्धं च तत्पिप्पली चेत्यर्धपिप्पली। पिप्पल्यर्धमिति षष्ठीसमासोऽपि दृश्यते हि। चेदर्धं दक्षिणं मेरोः। शरार्धम्, चापार्धम्, कुलिकार्धमिति। असमप्रविभागेऽपि—न हीदमर्धजरतीयं लभ्यमिति। एवं द्वितीयभिक्षा, भिक्षाद्वितीयम्। तृतीयभिक्षा, भिक्षातृतीयम्। चतुर्थभिक्षा, भिक्षाचतुर्थम्। तुरीयभिक्षा, भिक्षातुरीयम्। तुर्य्यभिक्षा, भिक्षातुर्य्यम्। मासजातः, संवत्सरजातः, इति बहुव्रीहिणा सिद्धम्। न ब्राह्मणः, अब्राह्मणः। कर्मधारयप्रदेशः—"कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते" इत्येवमादयः॥ इति कर्मधारयः॥

## २६४। संख्यापूर्वो द्विगुरिति ज्ञेयः॥

कर्मधारय इति सम्बन्धः। पञ्चसु कपालेषु संस्कृत ओदनः पञ्चकपाल ओदनः, पञ्च गावो धनमस्येति पञ्चगवधनम्। पञ्चानां पूलानां समाहारः पञ्चपूली। तद्धितार्थोत्तरपदसमाहारेषु संज्ञेम्॥

## २६५। तत्पुरुषावुभौ॥

उभौ द्विगुकर्मधारयौ तत्पुरुषसंज्ञौ ज्ञेयौ। तत्पुरुषप्रदेशाः—"नस्य तत्पुरुषे लोप्यः" इत्यधिकारे कृष्ण इति कद्भावो बहुव्रीहौ न स्यात्॥

## २६६। विभक्तयो द्वितियाद्या नाम्ना परपदेन तु समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च॥

यत्समास इति सम्बन्धः। द्वितीया—कष्टं श्रितः, कष्टश्रितः। एवं कान्तारातीतः, नरकपतितः, ग्रामगतः, तरङ्गात्यस्तः, सुखप्राप्तः,

दुःखापन्नः । ग्रामगमी, ग्रामागामी, ओदनबुभुक्षुः । खट्वारूढो जाल्मः । अहरतिसृता मुहूर्त्ताः, अहःसंक्रान्ताः, रात्र्यारूढाः । मास-प्रमितश्चन्द्रमाः, मुहूर्त्तसुखम्, सर्वरात्रकल्याणी । क्वचिद्वाक्यमेव—ओदनं भुक्तवान् ।

तृतीया—गिरिणा काणः, गिरिकाणः । एवं धान्यार्थः, मासपूर्वः, पितृसदृशः, पितृसमः, मासोनः, माषविकलः, असिकलहः, वाङ्निपुणः । गुडमिश्रः, वाक्श्लक्ष्णः । तथा राजहतः, नखनिर्भिन्नः, काकपेया नदी, बाष्पच्छेद्यानि तृणानि । क्वचिन्न स्यात्-काकेन पातव्या ॥ क्वचित् स्यात्—बुसोपेन्ध्यम् । घनघात्यम् । दध्नोपसिक्त ओदनः—दध्योदनः । गुडेन मिश्रा धानाः—गुडधानाः ।

चतुर्थी—गोभ्यो हितम्, गोहितम् । एवं गोसुखम्, कुबेरबलिः, गोरक्षितः, यूपाय दारु, यूपदारु । देवदेयं पुष्पम्, ब्राह्मणदेयं धनम्, वरप्रदेया कन्या । क्वचिन्न स्यात्—ब्राह्मणाय दातव्यम्, ब्राह्मणार्थः सूपः, ब्राह्मणार्था प्रपा, ब्राह्मणार्थं पयः—नित्यसमास एव सर्वलिङ्गता च ॥

पञ्चमी—वृकाद्भयम्—वृकभयम्, वृकभीतः, वृकभीतिः, वृकभीः, ग्रामनिर्गतः, सुखापेतः, कल्पनापोढः, चक्रमुक्तः, मञ्चपतितः, तरङ्गापत्रस्तः ॥

षष्ठी—राज्ञः पुरुषः-राजपुरुषः । एवम् आत्मषष्ठः, भिक्षाद्वितीयः । वर्त्तमानसामीप्यम्, चन्दनगन्धः, नदीघोषः, कन्यारूपम्, स्तनस्पर्शः फलरसः । ब्राह्मणस्य कर्त्तव्यम् । वृत्तिरपीष्यते ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणः, वाक्यमेव । तथा फलानां तृप्तः, छात्रस्योच्चैर्गृहमिति सापेक्षत्वात् । पलाशशातनम्, मातृस्मरणम्, सुरेश्वरः, राजपूजित इत्यादिषु सम्बन्धषष्ठ्या समास एव ॥

एवम् सप्तमी—अक्षेषु शौण्डः—अक्षशौण्डः, अक्षधूर्त्तः, अक्षकितवः । वनेऽन्तर्वसति-वनान्तरवसति । तथा—काम्पिल्यसिद्धः, छायाशुष्कः, कुम्भीपक्वः, चारकबन्धः, तीर्थध्वाङ्क्षः, तीर्थकाकः । तथा पूर्वाह्णमेयं

साम, मासदेयमृणम्, पूर्वाह्णकृतम्, अपराह्णकृतम्, पूर्वरात्रकृतम्, अपर-रात्रकृतम्, एवमन्येऽपि ।

परपदेनेति किम् ? गतो ग्रामम् । कथंप्राप्तो जीविकाम्—प्राप्तजीविकः। एवम् आपन्नजीविकः । अत्यादयः क्रान्ताद्यर्थे द्वितीयया—अतिक्रान्तः खट्वाम्—अतिखट्वः । अवादयः क्रुष्टाद्यर्थे तृतीयया—अवकुष्टं कोकिलया—अवकोकिलं वनम् । एवम् अवमयूरम् । पर्यादयो ग्लाना-द्यर्थे चतुर्थ्या—परिग्लानोऽध्ययनाय—पर्यध्ययनः । निरादयो गता-द्यर्थे पञ्चम्या—निर्गतः कौशाम्ब्याः—निष्कौशाम्बिः ? सत्यम् कृते समासे पूर्वनिपातोऽभिधानात् । यथा—दन्तानां राजा राजदन्त इति। कुब्राह्मण इत्यादीनां कर्मधारयः ॥

## २६७ । स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि । तान्यन्यस्य पदस्यार्थे बहुव्रीहिः ॥

यत्र समास इति सम्बन्धः । आरूढो वानरोऽयं—स आरूढवानरो वृक्षः । कृतः प्रणामो येन स कृतप्रणामो जनः । एवं दत्तभोजनोऽतिथिः, उच्छन्नजनपदो देशः, चित्रगुर्देवदत्तः । बहूदका नदी । बहुपदेऽपि—मत्तबहुमातङ्गं वनम् । तथा उपगता दश एषाम्—उपदशाः । एवम् आपन्नदशाः, आसन्नदशाः, अदूरदशाः, अधिकदशाः । ते पुनर्नवैकादश वा । त्रिर्दश परिमाणमेषाम्—त्रिदशाः । दशशब्दः संख्याने वर्तते परिमाणशब्दसान्निध्यात् । यथा पञ्च परिमाणमेषाम्—पञ्चकाः शकुनयः । द्वौ वा त्रयो वा परिमाणमेषाम्—द्वित्राः । भिन्नाधिकरणेऽपि उरसिलोमा, कण्ठे कालः । उष्ट्रमुखः । अन्यपदार्थे प्रथमान्तेऽपि—सह पुत्रेणागतः सपुत्रकः । सह लोम्ना वर्तते—सलोमकः, विद्यमानलोमक इत्यर्थः । एवं सपक्षकः, सकण्टकः । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी इत्यनभिधानात् । केशेषु च केशेषु च गृहीत्वा युद्धं वृत्तम्—केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्य युद्धं वृत्तम्—दण्डादण्डि । बहुव्रीहिप्रदेशाः—"बहुव्रीहौ" इत्येवमादयः ॥

## २६८ । विदिक् तथा ॥

तथा विदिगभिधेयो बहुव्रीहिर्ज्ञेयः । अर्थाद्दिग्वाचकयोः शब्दयोः समासे सति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं, सा दक्षिणपूर्वादिक् ॥

## २६९ । द्वन्द्वः समुच्चयो नाम्नोर्बहूनां वापि यो भवेत् ॥

यत्र समासे द्वयोर्नाम्नोर्बहूनां वापि नाम्नां यः समुच्चयः स द्वन्द्वो भवेत् । देवदत्तयज्ञदत्तौ । धवखदिरपलाशाः । वाग्दृशदम् । पीठच्छत्रोपानहम् । इतरेतरयोगः समाहारश्च समुच्चयस्यैव भेद इति ॥

## २७० । अल्पस्वरतरं तत्र पूर्वम् ॥

तत्र द्वन्द्वे समासे यदल्पस्वरतरं तत्पूर्वं निपतति । प्लक्षन्यग्रोधम्, धवाश्वकर्णम् । तरग्रहणं द्विपदनियमार्थम्, तेन—शङ्खदुन्दुभिवीणाः । व्यभिचरति च—उदूखलमुषले । तण्डुलकिण्वे । चित्ररथवाह्लीकौ इत्येवमादयः ॥

## २७१ । यच्चार्चितं द्वयोः ॥

तत्र द्वन्द्वे समासे द्वयोर्यदर्चितं तत्पूर्वं निपतति । देवदैत्यौ, वासुदेवार्जुनौ । व्यभिचरति च—नरनारायणौ, उमामहेश्वरौ, काकमयूरौ ॥

## २७२ । पूर्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते ॥

समासस्येति सम्बन्धः । कारके स्त्रीष्वधिकृत्य कथा प्रवृत्ता—अधिस्त्रि । समीपे—उपकुम्भम् । ऋद्धौ—सुमद्रम् । अभावे—निर्मक्षिकम्, । तथा गवादिकानामृद्धेर्विगमः—दुर्गवादिकम् । शीतामामतिक्रमः—अतिशीतम्, अतितैसृकम्, तैसृकाणामाच्छादनानां न सम्प्रत्युपभोगकालः । शब्दप्रादुर्भावेऽपि—इतिपाणिनि, तत्पाणिनि ।

पश्चादर्थे—अनुरथम् । यथार्थे—अनुरूपम्, रूपस्य योग्यत्वम् । अर्थमर्थं प्रति—प्रत्यर्थम् । यथाशक्ति, अनुज्येष्ठम्, शक्त्यनतिक्रमेण, ज्येष्ठानुक्रमेणेत्यर्थः । सादृश्ये—किख्याः सदृशम् सकिखि । साकल्ये—सतृणमभ्यवहरति, साग्न्यधीते । एवमन्येऽपि । अव्ययीभावप्रदेशाः—"अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः" इत्येवमादयः ॥

## २७३ । स नपुंसकलिङ्गं स्यात् ॥

सोऽव्ययीभावसमासो नपुंसकलिङ्गं स्यात् । तथा नोदाहृतमुदाह्रियते च । समत्वं भूमेः—समभूमि, समपदाति । तथा—सुषमम्, विषमम्, निःषमम्, दुःषमम्, अपरसमम् । शोभनत्वं समस्येत्यादि वाक्यम् । तथा प्रमृगम्, प्ररथम्, प्रदक्षिणम् । अव्ययपूर्वपदत्वादलिङ्गतेव प्राप्तेति वचनम् ॥

## २७४ । द्वन्द्वैकत्वम् ॥

द्वन्द्वस्यैकत्वं नपुंसकलिङ्गं स्यात् । प्रत्यष्ठात्कठकालापम्, उदगात्कठकौथुमम्, अर्काश्वमेधम् । पदकक्रमकम् । आराशस्त्रि । गङ्गाशोणम् । कुरुकुरुक्षेत्रम् । मथुरापाटलिपुत्रम् । अहिनकुलम्, तन्तायस्कारम् । पाणिपादम् । मार्दङ्गिकपाणविकम् । हस्त्यश्वम् । यूकालिक्षम् । बदरामलकम् । प्लक्षन्यग्रोधम्, धवाश्वकर्णम्, कुशकाशम् । तिलमाषम् । रुरुपृषतम् । हंसचक्रवाकम् । दधिघृतम् । सुखदुःखम् ।

अनुवादे चरणानां, स्थेणुद्यतनीप्रयोगविषयाणाम् ।
अनपुंसकलिङ्गानां, यजुःक्रतूनां च निकटपाठानाम् ।
अप्राणिजातिविसदृश,—लिङ्गनदीदेशनगराणाम् ।
शाश्वतिकवैरिणाम् अथ, कारूणां प्राणितूर्य्यकाङ्गानाम् ॥ १ ॥
सेनाङ्गानां च बहुत्वे भवति क्षुद्रजन्तुकफलानाम् ।
वृक्षतृणधान्यमृगशकु, निविशेषाणां विभाषैव ।
व्यञ्जनविशेषकाणां अद्रव्याणां विरोधिनां च समता ।
तेषां च समाहारो, दधिपयसां खलु भवेदन्यः ॥ २ ॥
एकत्वमिति किम् ? हस्त्यश्वौ, दधिघृताः ॥

## २७५। तथा द्विगोः ॥

तथा द्विगोरप्येकत्वं नपुंसकलिङ्गं स्यात्। पञ्चगवम्, चतुष्पथम्—शोभनमिति विशेषणात्। एकत्वमिति किम्? पञ्चकपाल ओदनः। "अपात्रादिरदन्तोऽयं स्यादन्तो वा द्विगुस्तथा। अनन्तश्च समाहारो बह्वादिषु निगद्यते॥"

## २७६। पुंवद्भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे ॥

स्त्रियां वर्त्तमानो भाषितपुंस्कानूङ् पुंवद्भवति स्त्रियां वर्त्तमाने तुल्याधिकरणे पूरण्यादिवर्जिते पदे परतः। शोभनभार्यः? दीर्घजङ्घः। अर्थात्पूर्वस्य परस्य च स्त्रियामिति विशेषणात्—ग्रामणि कुलं दृष्टिरस्येति—ग्रामणिदृष्टिः। कल्याणी प्रधानमेषाम्—कल्याणीप्रधानाः। भाषितपुंस्कोऽयं इति किम्? द्रोणीभार्यः। अनूङिति किम्? ब्रह्मबन्धूभार्यः। अपूरण्यादिष्विति किम्? कल्याणीपञ्चमा रात्रयः। मुख्यपूरणीग्रहणात् कल्याणपञ्चमीकः पक्षः। आदिग्रहणात्—कल्याणीप्रियः। प्रिया, मनोज्ञा, सुभगा, दुर्भगा, भक्तिः, सचिवा, स्वा, कान्ता, समा, बाल्या, दुहिता, वामना॥

## २७७। संज्ञापूरणीकोपधास्तु न ॥

इह पुंवद्भावो वर्त्तते। संज्ञापूरणीकोपधास्तु पुंवद्रूपा न भवति। दत्ताभार्यः, गुप्ताभार्यः, पञ्चमीभार्यः। पञ्चमीयते, पञ्चमीमानिनी। पाचिकाभार्यः। मद्रिकाभार्यः। कथं पाकभार्यः, भेकभार्यः, शुष्कभार्यः? स्त्र्यभिधानात्। वृद्धिनिमित्तस्यारक्तविकारस्य न च तद्धितस्यापीवन्तस्यस्वाङ्गस्य न त्वमानिनि, तथा जातेः॥

## २७८। कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥

भाषितपुंस्कानूङ्प्रतिषेधबाधकोऽयम्। कठी च सा भार्येति कठभार्या। एवं दत्तभार्या, पञ्चमभार्या, पाचकभार्या। भाषित-

पुंस्क इति किम् ? खट्वावृन्दारिका । अनूङिति किम् ? ब्रह्मबन्धूदारिका ॥

## २७९ । आकारो महतः कार्य्यस्तुल्याधिकरणे पदे ॥

महादेवः । महावक्त्रः । अन्तरङ्गत्वाल्लोपे सत्याकारः । व्यवस्थया न भवति—महद्भूतश्चन्द्रमाः । योगविभागात्, महत्याघासः—महाघासः । एवं महाकरः, महाविशिष्टः ॥

## २८० । नस्य तत्पुरुषे लोप्यः ॥

नस्य सम्बन्धिनि तत्पुरुषे नस्य सम्बन्धी नकारो लोप्यो भवति । छिनकारो वा पाठः । न सवर्णाः—असवर्णाः न विद्यते घोषो ध्वनिर्येषां तेऽघोषाः । ब्राह्मणस्याभावः—अब्राह्मणम् । तत्पुरुष इहोपलक्षणम् ॥

## २८१ । स्वरेऽक्षरविपर्य्ययः ॥

नस्य तत्पुरुषे स्वरेऽक्षरविपर्य्ययो भवति । अनश्वः, अनजम्, अनजकः ॥

## २८२ । कोः कत् ॥

कुशब्दस्य तत्पुरुषे स्वरे कद्भवति । कुत्सितोऽश्वः—कदश्वः । एवं कदुष्ट्रः । तत्पुरुष इति किम् ? कूष्ट्रो देशः ॥

## २८३ । का त्वीषदर्थेऽक्षे ॥

कुशब्दस्य तत्पुरुषे ईषदर्थे वर्त्तमानस्य कादेशो भवति, अक्षशब्दे च परतः । ईषल्लवणम्, कालवणम्, काम्लम्, काक्षेण वीक्षते । ईषदर्थे स्वरे तु परत्वात् कादेश एव ॥

## २८४ । पुरुषे तु विभाषया ॥

कुशब्दस्य तत्पुरुषे पुरुषशब्दे च परे विभाषया कादेशो भवति । कापुरुषः, कुपुरुषः । इयमप्राप्ते विभाषैव । ईषदुष्णम्, कोष्णं कवोष्णं, कदुष्णमिति वक्तव्यम् ।

## २८५ । याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् ॥

ईश्च आकारश्च याकारौ, याकारौ स्त्रीकृतौ ह्रस्वौ भवतः समासे क्वचिल्लक्ष्यानुरोधात् । रेवतिमित्रः, रोहिणिमित्रः, भरणिमित्रः । ईषत्-चितम्, इषिकतूलम्, मालभारिणी कन्या, एवमन्येऽपि ॥

## २८६ । ह्रस्वस्य दीर्घता ॥

ह्रस्वस्य दीर्घता भवति समासे क्वचिल्लक्ष्यानुरोधात् । दात्राकर्णः, द्विविधाकर्णः, द्विगुणाकर्णः, छ्याङ्गुलाकर्णः—चिह्नस्यैव कर्णो दीर्घः । क्वचिन्न स्यात्—अष्टकर्णः, पिष्टकर्णः । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्विबन्तेषु प्राक्कारकाणामेव दीर्घः—उपानत्, उपावृत्, प्रावृट्, मर्मा-वित्, नीरुक्, ऋतीषट्, परीतत्, एवमन्येऽपि ॥

## २८७ । अनव्ययविसृष्टस्तु सकारं कपवर्गयोः ॥

अनव्ययविसृष्टस्तु कपवर्गयोः परयोः सकारमापद्यते, समासे क्वचिल्ल-क्ष्यानुरोधात् । अयस्पाशम्, पयस्कल्पम्, अयस्काम्यति, अयस्कम्—पाशकल्पकाम्यकेषु दृश्यते । रप्रकृतेः काम्ये न भवति—गीःकाम्यति । धूःकाम्यति । अयस्कारः, अयस्कामः, अयस्कंसः, अयस्कुम्भः ॥

"कृञ्कमिकंसकुम्भेषु समासेऽयमतःपरः ।
अनुत्तरे कुशाकर्योर्भास्करादिषु लक्ष्यतः ॥
नञा निर्दिष्टमनित्यम् । नमस्कर्तुम् पुरस्कर्तुमित्यादयः ।

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये समासपादः समाप्तः ॥

---

## तद्धित-प्रकरणम् ।

## २८८ । वाणपत्ये ॥

षष्ठ्यन्तान्नाम्नोऽपत्येऽभिधेयेऽण् प्रत्ययो भवति वा । उपगोरपत्यम्—औपगवः । एवं पाण्डवः, आश्वपतः, शैवः, प्रौष्ठः । अपत्यसामान्य-विवक्षायामाद्यप्रकृतेरेव । प्रौष्ठादेस्तु प्रशस्ये एवापत्ये स्त्रीवर्जितेऽणाद्-

योऽभिधीयन्ते । बाग्रहणाद् उपगोरपत्यम्—उपगवपत्यं च स्यात् ॥

## २८९ । ण्य गर्गादेः ॥

गर्गादेर्गणादपत्येऽभिधेये णयप्रत्ययो भवति । गर्गस्यापत्यम्—गार्ग्यः । एवं वात्स्यः । गोत्रादिभूतादेव पौत्रादावेवापत्येऽभिधानात् । अन्यत्र—गार्गिः । अनन्तरोऽपि । रामो जामदग्न्यः, व्यासः, पाराशर्यः, अर्जुनः, कार्त्तवीर्य्यः इत्यपिदृश्यते । जामदग्नः, पाराशर इति च । गर्गादिराकृतिगणोऽयम् ॥

## २९० । कुञ्जादेरायनण् स्मृतः ॥

कुञ्जादेर्गणाद्गोत्रादिभूतात्पौत्रादावेवापत्येऽभिधेयआयनण्प्रत्ययो भवति । णयश्च स्मृतस्तदन्तात्प्राङ् नडादेरबहुत्वेऽस्त्रियाम् । तदेतत् कथं स्मृतग्रहणस्येष्टविषयत्वात् । कौञ्जायन्यः, कौञ्जायन्यौ, ब्राध्नायन्यः, ब्राध्नायन्यौ । स्त्रियां तु—कौञ्जायनी । बहुत्वे तु कौञ्जायनाः । नडादेस्तु—नाडायनः, चारायणः, मौञ्जायनः । कुञ्जो नाम कश्चित्, तस्यापत्यं कौञ्जिः । प्रथमापत्य च कौञ्जिः । कुञ्जादिराकृतिगणोऽयम् ॥

## २९१ । स्त्र्यादेरेयण् ॥

स्त्रियां विहितत्वात् स्त्री । स्त्रियामादादिभ्योऽत्र्यादेश्चापत्येऽभिधेये एयण् भवति । वैनतेयः, सौपर्णेयः, कामण्डलेयः, यौवतेयः । आत्रेयः, शौचेयः । आदिग्रहणात्—शौभ्रेयः, वैष्टपुरेयः । अत्रिरयमप्रत्ययेऽवन्तद्विस्वरोपलक्षणम् । तेन—मरीचेरपत्यं मारीचः, दाक्षेरपत्यं दाक्षायणः । अत्र्यादिराकृतिगणः ॥

## २९२ । इणतः ॥

अकारान्तान्नाम्नोऽपत्येऽभिधेये इण् भवति । दक्षस्यापत्यं दाक्षिः, एवं प्लाक्षिः, अस्यापत्यमिः । अत इति किम् ? कैलालपः । शतसर्वकाकशुक्लिकुबरानपुरमगुरकारकेभ्यः संख्यादिभ्यो न भवत्यनभिधानात् । कथं "प्रदीयतां दाशरथाय मैथिली" ति ? तदेव भिन्नम् ॥

## २९३ । बाह्वादेश्च विधीयते ॥

बाह्वादेर्गणादपत्येऽभिधेय इण् भवति । बाहविः, औपबाहविः, बैन्दविः, औपबिन्दविः । गोत्राविभूतादेवेष्यते—बाहुर्नाम कश्चित्, तस्यापत्यं बाहवः । बाह्वादिराकृतिगणोऽयम्

## २९४ । रागान्नक्षत्रयोगाच्च समूहात्सास्य देवता तद् वेत्त्यधीतेवा तस्येदमेवमादेरण् इष्यते ॥

रागयोगाद्रागः । कौसुम्भम्, हारिद्रम्, कुसुम्भेन हरिद्रया वा रक्तमित्यर्थः । कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति ? तद्गुणाध्यारोपात् । नक्षत्रस्य योग इन्दुनैव, तत्सम्बन्धात्कालोऽभिधीयते । अण् विधिस्तु श्रुतादेव नक्षत्रशब्दात् । पौषमहः, पौषी रात्रिः । पुष्येण चन्द्रयुक्तेन युक्ता रात्रिरित्यर्थः । "कृत्तिकासु विशाखासु मघासु भरणीषु चे"ति नक्षत्रशब्दैरेवाभेदोपचारात् । यद्यपि कालाभिधानं तथाप्यण् नास्ति विकल्पनात् । धर्मिणो ह्यभिन्नः समूहः वायसम्, काकम्, भैक्षम्, यौवतम् । शिवो देवताऽस्येति—शैवः । एवमैन्द्रं हविः, ऐन्द्रो मन्त्रः । छन्दो वेत्त्यधीते वा छान्दसः । एवं वैयाकरणः । मृगस्येदम्—मार्गं मांसम् । एवं शौकरम् । एवमादिर्यस्येति शब्दार्थयोः सम्बन्धेन गणो गृह्यते । चक्षुषा गृह्यते—चाक्षुषं रूपम्, एवं श्रावणः शब्दः । दृशदि पिष्टाः—दार्षदाः सक्तवः । उलूखले क्षुण्णाः—औलूखला मुद्गाः । अश्वैरुह्यते—आश्वो रथः । चतुर्भिरुह्यते—चातुरं शकटम् । चतुर्दश्यां दृश्यते—चातुर्दशम् रक्षः । तत्र भवस्तत्र जातस्ततो आगत इत्यादिविग्रहः कार्यः । आकृतिगणोऽयम् ॥

## २९५ । तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि ॥

तेन दीव्यति, तेन संसृष्टम्, तेन तरति, तेन चरत्यपि, अभेदोपचारात् पण्याच्छिल्पान्नियोगाच्च यथासम्बन्धं क्रीतादेरायुधादप्यभे-

दोपचा' वृत्तेरिकण्प्रत्ययो भवति । अक्षैर्दीव्यति—आक्षिकः । दध्ना संसृष्टम्—दाधिकम् । एवं मारीचिकम् । गोपुच्छेन तरति गौपुच्छिकः, एवं काण्डप्लविको नद्याः । आश्वमेधिको ब्रह्महत्यायाः । शकटेन चरति—शाकटिकः, एवं घाण्टिकः, शृङ्गवेरेण चरति—शार्ङ्गवेरिकः । ताम्बूलपण्ययोगात्—ताम्बूलिकः । मदङ्गशिल्पयोगाद्—मार्दङ्गिकः, एवं पाणविकः । द्वारनियोगाद् दौवारिकः, एवं शौल्कशालिकः । द्विशूर्पेण क्रीतः—द्विशौर्पिकः, एवं साहस्रिकः । कार्षापणमर्हति—कार्षापणिकः । तोमरायुधयोगात्—तौमरिकः, एवं चाक्रिकः । क्रीतादेरप्यर्थभेदमपेक्ष्य पञ्चमी, क्रियाविर्भावश्च स्पष्टार्थः । कुद्दालेन खनति—कौद्दालिकः । ओजःसहोऽम्भसा वर्त्तते—औजसिकः शूरः, साहसिकश्चौरः, आम्भसिको मत्स्य इत्यादि ॥

## २९६ । नावस्तार्य्ये विषाद्वध्ये तुलया सम्मितेऽपि च, तत्र साधौ यः ॥

नावस्तृतीयान्तात् तार्येऽर्थे विषात्तृतीयान्ताद् वध्येऽर्थे तुलयेति तृतीयान्तात् सम्मितेऽर्थे तत्रेति सप्तम्यन्तात् साधावर्थे यप्रत्ययो भवति । नावा तार्य्यं—नाव्यम् । विषेण वध्यो—विष्यः । तुलया सम्मितं—तुल्यम् । कर्मणि साधुः—कर्मण्यः । अपि चेति वचनाद्—गिरिणा तुल्यो हस्ती—गिरितुल्यः, तुल्यः सदृश इत्यन्ये । कुशलो योग्यो हितश्च साधुरुच्यते ॥

## २९७ । ईयस्तु हिते ॥

हितेऽर्थे ईयप्रत्ययो भवति । वत्सेभ्यो हितो वत्सीयो गोधुक् । एवम् अश्वीयः । योगविभागात् स्वराणामादावाद्वृद्धिमतः शेषेऽर्थे ईयः स्यात् । शालायां भवो जातो वा शालीयः । पैतिकायनस्येमे छात्राः पैतिकायनीयाः । एवम् औपगवीयाः । एवमन्येऽपि ॥

## २९८ । यदुगवादितः ॥

उवर्णान्ताद्गवादिभ्यश्च हितेऽर्थे यप्रत्ययो भवति । ऊकवाकुभ्यो

हितं पयः—कृकवाकव्यम् । वधूभ्यो हितो देशो—वधव्यः । गोभ्यो हितं वनं—गव्यम् । एवं हविष्यास्तण्डुलाः । सुगव्यम् अतिगव्यमिति तदन्तविधिरिष्टः । गो हविस् अष्टका बर्हिस् मेधा स्रुच इत्यादयोऽप्यनुसर्तव्याः । विकृतिवाचिनः शब्दात्प्रकृतावभिधेयायां यथोक्तं हितेऽर्थे प्रत्ययो मन्तव्यः । अङ्गारीयाणि काष्ठानि, पिचव्यः कार्पासः ॥

## २९९ । उपमाने वतिः ॥

उपमितिरुपमानम् । उपमानेऽर्थे वतिप्रत्ययो भवति । राजेव वर्तते—राजवत् । ब्राह्मणस्येव वृत्तिरस्येति—ब्राह्मणवत् । मथुरायामिव पाटलिपुत्रे प्रासादः—मथुरावत् । राज्ञेव व्यवहृतमनेन—राजवत् । देवमिव भवन्तं पश्यामि—देववत् । पर्वतादिवासनादवरोहति—पर्वतवत् । ब्राह्मणायेव देवदत्ताय धनं ददाति—ब्राह्मणवत् । अत्रापि तदर्हमिति परैरेष्टव्यमेव । गुणसाम्येऽपि देवदत्त इव स्थूलो—देवदत्तवत् । गुणहीनादपि—अन्धवत्, जडवत् । द्रव्यसाम्येऽपि देवदत्त इव गोमान्—देवदत्तवत् । सद्भावात् क्रियासाम्यमस्तीति सर्वत्र भवितव्यमेव ॥

## ३०० । तत्वौ भावे ॥

शब्दस्य प्रवृत्तिनिमित्तं भावः । भावेऽभिधेये तत्वौ भवतः । शुक्लस्य पटस्य भावः—शुक्लता, शुक्लत्वमिति शुक्लगुणस्य भावः । शुक्लस्य गुणस्य भावः—शुक्लता, शुक्लत्वमिति शुक्लगुणजातिः । गोता, गोत्वमिति गोजातिः । एवं पाचकत्वम्, दण्डित्वम्, विषाणित्वम्, राजपुरुषत्वमिति क्रियादिसम्बन्धित्वम् । देवदत्तत्वम्, चन्द्रत्वम्, सूर्यत्वमित्यवस्थाभेदात् । आकाशत्वमिति प्रदेशभेदात् । अभावत्वमिति सम्बन्धिभेदात् । नानेत्यस्य भावो नानात्वम् ॥

## ३०१ । यण् च प्रकीर्तितः ॥

भावेऽभिधेये यण् च प्रकीर्तितः, चकारात् तत्वौ च । शुक्लस्य

भावो—आढ्यम्, अड्डता, अड्डत्वम्। ब्राह्मणस्य भावो—ब्राह्मण्यम्, ब्राह्मणता, ब्राह्मणत्वम्। एवं मानव्यम्, वाडव्यम्। प्रकीर्तितमर्थं लक्ष्यानुरोधार्थम्। तेन गुणवचनब्राह्मणादिभ्योऽन्येभ्योऽपि क्रियाणामपि दृश्यते। अड्डस्य कर्म आढ्यम्। ब्राह्मणस्य कर्म ब्राह्मण्यम्॥

## ३०२। वदस्यास्तीति मन्त्वन्त्वीन्॥

तदिति प्रथमान्तात् अस्यास्तीत्यस्मिन्नर्थे मन्तु, वन्तु, विन्, इन्, इत्येते प्रत्यया भवन्ति। गावो विद्यन्तेऽस्येति गोमान्। एवम् आयुष्मान्, लक्ष्मीवान्, किंवान्, विद्युत्वान्, पयस्वान्। भास्वान्। कर्मवान्, वृक्षवान्, मालावान्, तेजस्वी, पयस्वी, दण्डी, मायी, मायावी। इति शब्दो विवक्षार्थः॥

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्ति विवक्षायां मन्त्वादयो भवन्त्यमी॥ १॥
तथा मोपधमान्ताच्च धुडन्तादशिडन्ततः।
अवर्णोपधतश्चापि वन्तुरवर्णतस्तथा॥ २॥
मायाशीर्षात्स्वरूपाच्च व्रीह्यर्थात्स्वरूपतः।
यथा व्रीहीति शालीति ह्यनेकस्वरादतः॥ ३॥
मायास्मेधास्रजो विन् स्यात्बाधिकाराद्विभाषया।
विहिताः सर्व एवैते शेषेभ्यो मन्तुरिष्यते॥ ४॥
कुष्ठनिन्दितरागेभ्यः प्राणिस्थेभ्य इनेव हि।
कटकवलयौ कुष्ठी स्यात्काकतालुकी यथा॥ ५॥
स्यात्स्वाङ्गात्तु यथाप्राप्तं स्तनकेशवती यथा।
कः स्वार्थे नित्यमेवैषां वातोऽस्यास्तीति वातकी॥ ६॥
अतीसारक्षयपीडक् स्यात् पिशाचकी तथा स्मृतः।
कश्मलसोन्मत्तत्वे पिशाचशब्दोऽभिधीयते॥ ७॥
वयसि गम्यमाने च पूरणान्तादिनेव हि।
पञ्च दिनानि मासा वा पञ्चमी बालको यथा॥ ८॥

सुखादिभ्य इन्नेव स्याद् बाहुरूभ्यां बलाद् अपि ।
सुखी दुःखी अलीकी च करुणी कृपणी हली ॥ ९ ॥
तृपी कृच्छ्री प्रतीपी च सोढ्या सस्त्रीत्युदाहृतम् ।
बाहुबल्यूरुबली च सर्वादेर्नित्यमिस्तथा ॥ १० ॥
विज्ञेयं सर्वबीजीति सर्वकेशीत्युदाहृतम् ॥
स्याद्धर्मशीलवर्णान्तादिन्नेवेति विवक्षया ॥ ११ ॥
ब्रह्मधर्मी सुशीली च ब्रह्मवर्णीत्युदाहृतम् । .
जातौ तु हस्तदन्ताभ्यां कराच्चैव इनेव हि ॥ १२ ॥
हस्ती दन्ती करी ज्ञेयो वर्णादिन् ब्रह्मचारिणि ।
स्युर्ब्रह्मचरणाद्धेतोर्वर्णिनो ब्राह्मणादयः ॥ १३ ॥
ब्रह्मचर्यं विनापि स्युः सम्भवाद्ब्राह्मणा इति ।
पुष्करोत्पलपद्मेभ्यो नडबिसतमालतः ॥ १४ ॥
कपित्थकुमुदाभ्यां च मृणालात्कर्दमादयः ॥
शालूककरीषेभ्यश्च हिरण्याद्गूढदंशके ॥ १५ ॥
विवक्षायामिन्नेवेति यथा पुष्करिणीति च ।
मवन्तमान्तशब्देभ्यः संज्ञायामिन्नेवेष्यते ॥ १६ ॥
अप्राप्ति नियमार्थं च दामिनी सोमिनी यथा ।
इन्विषय इको वाच्यः प्रागुक्तान्नियमार्थतः ॥ १७ ॥
स्वार्थे कः स्यान्न वाच्योऽयं दण्डेष्वव दण्डिको यथा ।
संज्ञामालेऽष्टकावीणामेखलापड्वाशिखा ॥ १८ ॥
बलाकाभ्यः पताकाया इन्विभाषा विधीयते ।
वा कर्मचर्मवर्मभ्यस्तु लोत्साहबलोद्दाम ॥ १९ ॥
मूलवल्कलकुलायामारोह प्रयाम उपयाम ॥
व्यायामावरोहाणाम् ॥
इन्नन्तानां सर्वेषां स्वार्थे को नेष्यते बुधैः ॥ २० ॥
एवमन्येऽपि ॥

## ३०३ । संख्यायाः पूरणे डमौ ॥

संख्यायाः पूरणेऽर्थे डमौ भवतः । व्यवस्थितवाधिकारात् संख्यादेर्नान्तायाश्च मो भवति, शेषाच्च डः । एकादशानां पूरणः—एकादशः एकादशी । एवं पञ्चमः, पञ्चमी । संख्यायाः पूरण इति किम् ? एकादशाना पञ्चानां वोष्ट्रिकाणां पूरणो घटः ॥

## ३०४ । द्वेस्तीयः ॥

द्वेः पूरणेऽर्थे तीयो भवति । द्वयोः पूरणः—द्वितीयः ॥

## ३०५ । त्रेस्तृ च ॥

त्रेः पूरणेऽर्थे तीयो भवति, त्रादेशश्च । त्रयाणां पूरणः—तृतीयः ॥

## ३०६ । अन्तस्थो डे थों: ॥

रथोरन्तस्य थो भवति डे परे । चतुर्णां पूरणः चतुर्थः, एवं षष्ठः । आगमत्वाद्विसर्गो डत्वं च न स्यात् ॥

## ३०७ । कतिपयात्कतेः ॥

कतिपयात्कतेश्च पूरणेऽर्थे थो भवति । कतिपयथः, कतिथः ॥

## ३०८ । विंशत्यादेस्तमट् ॥

विंशत्यादेः पूरणेऽर्थे तमट् भवति । विंशतेः पूरणः—विंशतितमः, विंशतितमी, त्रिंशत्तमः, त्रिंशत्तमी । उत्तरत्र नित्यग्रहणाद्विकल्पो लभ्यते—विंशः, त्रिंशः ।

## ३०९ । नित्यं शतादेः ॥

शतादेः पूरणेऽर्थे नित्यं तमट् भवति । एकशततमः, एकसहस्रतमः, एककोटितमः ॥

## ३१० । षष्ट्याद्यतत्परात् ॥

तस्याः परस्तत्परः, संख्यायाः पर इत्यर्थः । षष्ट्यादेरसंख्यापरान्नित्यं तमट् भवति पूरणेऽर्थे । षष्टितमः, सप्ततितमः, अशीतितमः, नवतितमः । अतत्परादिति किम् ? एकषष्टः, एकसप्ततः ॥

## ३११ । विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतःपरं तु ये, अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराःस्मृताः ॥

श्रुतत्वात्सर्वनामकार्य्यं प्रत्येव विभक्तिसंज्ञा । तेन—यदा, कदेति नोपवति न दीर्घः । बहुशब्दोऽत्र संख्यावचनः सर्वनाम साहचर्य्यात् ॥

## ३१२ । तत्रेदमिः ॥

तेषु विभक्तिसंज्ञकेष्विदमिकारो भवति । इतः, इह, इदानीम्, अधुना ॥

## ३१३ । रथोरेतेत् ॥

रथोः परत इदम् एत इत् इत्येतौ प्राप्नोति यथासंख्यम् । एतर्हि, इत्थम् ॥

## ३१४ । तेषु त्वेतदकारताम् ॥

तेषु तकारादिष्वेतदकारतां प्राप्नोति । अतः, अत्र । तकारादिष्विति किम् ? एतथा ॥

## ३१५ । पञ्चम्यास्तस् ॥

सर्वनाम्नोऽद्व्यादेर्बहोश्चैव पञ्चम्यन्तात् तस् प्रत्ययो भवति वा । सर्वस्मात् सर्वतः । तस्मात् ततः । बहुभ्यो बहुतः । अद्व्यादेरिति किम् ? द्वाभ्यां भवतः । उगवादितः प्रयोगतश्चेति ज्ञापकादसर्वनाम्नोऽप्यवधिमात्रे तस् वक्तव्यः । ग्रामात् ग्रामतः । हागूद्वहोरवधौ न भवति—युष्मद्धीयते, सार्थाद्धीनः, पर्वतादवरोहति ॥

## ३१६ । त्र सप्तम्याः ॥

सर्वनाम्नोऽद्व्यादेर् बहोश्चैव सप्तम्यन्तात् त्रप्रत्ययो भवति वा । सर्वस्मिन् सर्वत्र । बहुषु बहुत्र । अद्व्यादेरिति किम् ? द्वयोः, त्वयि, मयि । आद्यादिभ्यस् तस् वक्तव्यः—आदौ, आदितः । मध्ये, मध्यतः

अन्ते, अन्ततः । पृष्ठे, पृष्ठतः । मुखे, मुखतः । पार्श्वे, पार्श्वतः । आकृतिगणोऽयम् ॥

## ३१७ । इदमो हः ॥

इदमः सप्तम्यन्ताद् हो भवति वा । अस्मिन्, इह ॥

## ३१८ । किमः ॥

किमः सप्तम्यन्ताद् हो भवति वा । कस्मिन्, कुह । कुशब्दस्यैवेत्यन्ये ॥

## ३१९ । अत् क च ॥

किमः सप्तम्यन्तादद् भवति, कादेशश्च । कस्मिन् क ॥

## ३२० । तहोः कुः ॥

तकारहकारयोः परयोः किं कुर्भवति । कुतः, कुह ॥

## ३२१ । काले किंसर्वयदेकान्येभ्य एव दा ॥

एभ्यः काले वर्तमानेभ्यः सप्तम्यन्तेभ्यो दाप्रत्ययो भवति । कस्मिन् काले कदा । एवं सर्वदा, यदा, एकदा, अन्यदा । काल इति किम् ? सर्वत्र देशे ॥

## ३२२ । इदमो र्ह्यधुनादानीम् ॥

काले वर्तमानादिदमः सप्तम्यन्ताद् र्हि, अधुना, दानीम्, इत्येते प्रत्यया भवन्ति । अस्मिन् काले एतर्हि, अधुना, इदानीम् ॥

## ३२३ । दादानीमौ तदः स्मृतौ ॥

काले वर्तमानात्तदः सप्तम्यन्ताद् दादानीमौ प्रत्ययौ स्मृतौ । तस्मिन् काले तदा, तदानीम् ॥

## ३२४ । सद्यआद्या निपात्यन्ते ॥

समानेऽहनि सद्यः । समानस्य सभावो द्यश्च परविधिः । परस्मिन्नहनि—परेद्यवि, परादेरेद्यवि । अस्मिन्नहनि—अद्य, इदमोऽशभावो च

च परविधिः । परुत् , परारि,—पूर्वपूर्वतरयोः पर उदारी च । अस्मिन् संवत्सरे -ऐषमः,—इदमः—समसिण् । पूर्वस्मिन्नहनि,—पूर्वेद्युः,—पूर्वापरेद्युस् , एवमपरेद्युः । अधरेद्युः, उत्तरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः, उभयेद्युः, उभयाद्युश्च । किमन्ययत्तद्भ्योऽनद्यतनवृत्तिभ्यो र्हिर्वा । कस्मिन् काले कर्हि, कदा । अन्यर्हि, अन्यदा । यर्हि, यदा । तर्हि, तदा, अद्यतनेऽपि । एवं पुरस्तादादयोऽप्यनुसर्त्तव्याः ॥

## ३२५ । प्रकारवचने तु था ॥

सर्वनाम्नोऽद्व्यादेः प्रकारवचने तु था प्रत्ययो भवति । सामान्यस्य भेदकः प्रकारः । सर्वेण प्रकारेण—सर्वथा । एवं यथा, तथा अन्यथा । वाक्यार्थवशेन सर्वविभक्तिभ्यो ज्ञेयः । था इति बहुवचनं वा । तेन—संख्यायाः प्रकारे धा—एकधा, द्विधा, त्रिधा, चतुर्धा, पञ्चधा, सप्तधा । द्वित्रिभ्यां धमुण् एधा च—द्वैधम् , द्वेधा, त्रैधम्, त्रेधा । एकाद्ध्यमुण् वा—ऐकध्यम् । एकधा ॥

## ३२६ । इदम्किम्भ्यां थमुः कार्य्यः ॥

इदम् किम्भ्यां प्रकारवचने थमुः कार्य्यः । अनेन प्रकारेण—इत्थम् । केन प्रकारेण—कथम् ॥

## ३२७ । आख्याताच्च तमादयः ॥

माम्न आख्याताच्च तमादयः प्रत्यया निपात्यन्ते । आख्यातं क्रियाप्रधानम् । आढ्यतरः, आढ्यतमः, प्रकृष्ट आढ्य उच्यते निपातनस्येष्टविषयत्वात् । तथा पचतितराम्, पचतितमाम्, किन्तराम्, किन्तमाम्, पूर्वाह्णेतराम् पूर्वाह्णेतमाम् , उच्चैस्तराम् , उच्चैस्तमाम् ॥

३२८ । आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तराम् तमाम् ॥

३२९ । तथा गुणादिष्ठयनसू वा ॥ पटिष्ठः, पटीयान् । पटुतरः, पटुतमः ॥

३३० । प्रकर्षे रूपः ॥ प्रकृष्टं पचति पचतिरूपम् । प्रकृष्टो वैयाकरणः वैयाकरणरूपः ॥

३३१ । ईषदसमाप्तौ कल्पदेश्यदेशीयः ॥ पटुकल्पः, पटुदेश्यः, पटुदेशीयः, पचतिकल्पम्, पचतिदेश्यम्, पचतिदेशीयम् ॥

३३२ । कुत्सितवृत्तेर्नाम्न एव पाशः ॥ कुत्सितो वैयाकरणः वैयाकरणपाशः ॥

३३३ । भूतपूर्ववृत्तेश्चरट् ॥ भूतपूर्व आढ्यः आढ्यचरः, आढ्यचरी ॥

३३४ । षष्ठ्यन्ताद्भूतपूर्वेऽभिधेये रूप्यश्च ॥ देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः, देवदत्तचरः ॥

३३५ । बह्वल्पार्थात्कारकाच्छस् वा मङ्गले गम्यमाने ॥ बहु देहि, बहुशो देहि । एवं प्रभूतं देहि, प्रभूतशो देहि । अल्पशो देहि, स्तोकशो देहि ॥

३३६ । संख्यैकार्थाभ्यां वीप्सायाम् ॥ द्वौ द्वौ देहि, द्विशो देहि । एवं कार्षापणशो देहि । कुडवशः, पादशः ॥

३३७ । कतिगणशन्तूनां संख्यावत् ॥ कतिशः, गणशः, तावच्छः ॥

३३८ । वारस्य संख्यायाः कृत्वस् ॥ पञ्च वारान् भुङ्क्ते, पञ्चकृत्वः, कतिकृत्वः, गणकृत्वः, तावत्कृत्वः, शतंवारान् भुङ्क्ते, वाराणां वा शतं भुङ्क्ते, शतकृत्वः ॥

३३९ । बहोरविप्रकर्षे धा च ॥ बहून् वारान् भुङ्क्ते दिवसस्य,—बहुधा, बहुकृत्वः ॥

३४० । द्वित्रिचतुर्भ्यः सुच् ॥ द्वौ वारौ भुङ्क्ते—द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ॥

३४१ । प्रस्तुतवृत्तेर्मयट् ॥ अन्नं प्रस्तुतम्—अन्नमयम् । एवं यवागूमयी ॥

३४२ । प्रकृतेर्विकारेऽवयवे वाभक्ष्याच्छादनयोः ॥ अश्ममयम्, भस्ममयम्, सुवर्णमयम् ॥ भक्ष्याच्छादनयोस्तु—मौद्गः सूपः । कार्पासमाच्छादनम्, मयटाऽण् न बाध्यते ॥

३४३ । एकस्वरान्नित्यम् ॥ वाङ्मयम्, त्वङ्मयम्, मृण्मयम् ॥ ॥

३४४ । अभूततद्भावे कृभ्वस्तिषु विकाराच्चिः ॥ अशुक्लं शुक्लं करोति—शुक्लीकरोति । अशुक्लः शुक्लो भवति—शुक्लीभवति । शुक्लीस्यात् ॥

३४५ । अरुर्मनश्चक्षुश्चेतोरहोरजोभ्यः कृतसलोपेभ्य एवायं विधिः । निपातनस्येष्टविषयत्वात् । अनरुरः करोति—अरूकरोतीत्यादि ॥

३४६ । अभिव्याप्तौ सम्पद्यतौ च सातिर्वा ॥ वर्षासु लवणमुदकं सम्पद्यते—उदकसात्सम्पद्यते । उदकसात्करोति । उदकसाद्भवति । उदकसात्स्यात् ॥

३४७ । सामर्थ्यादायत्ते ॥ राजायत्तं करोति—राजसात्करोति । राजसाद्भवति । राजसात्स्यात्, राजसात्सम्पद्यते ॥

३४८ । देये त्रा च ॥ देवाय देयं करोति—देवत्रा करोति । देवत्रा भवति । देवत्रा स्यात् । देवत्रा सम्पद्यते । एवमन्येऽपि ॥

३४९ । अव्यक्तानुकरणादनेकस्वरादनितौ डाच् ॥ पटपटत् करोति—पटपटाकरोति । पटपटाभवति । पटपटासम्पद्यते । पटपटास्यात् ॥

३५० । द्वितीयतृतीयशम्बबीजेभ्यः कृषिविषये करोतौ ॥ द्वितीयाकरोति । तृतीयाकरोति । शम्बाकरोति । बीजाकरोति ॥

३५१ । संख्यायाश्च गुणात् ॥ द्विगुणा करोति । त्रिगुणा करोति क्षेत्रम् ॥

३५२ । समयाद् यापनायाम् ॥ समयाकरोति ॥ ॥

३५३ । सपत्रनिष्पत्राभ्यामतिव्यथने ॥ सपत्राकरोति । निष्पत्राकरोति मृगम् ॥

३५४ । निष्कुलान्निष्कोषणे ॥ निष्कुलाकरोति दाडिमम् ॥ ॥

३५५ । प्रियसुखाभ्यामानुकूल्ये ॥ प्रियाकरोति । सुखाकरोति ॥ ॥

३५६ । दुःखात्प्रातिकूल्ये ॥ दुःखाकरोति ॥ ॥

३५७ । शूलात्पाके ॥ शूले पचति मांसम्—शूलाकरोति ॥ ॥

३५८ । सत्यादशपथे ॥ सत्याकरोति वणिग्भाण्डम् ॥ ॥

३५९ । मद्रभद्राभ्यां वपने ॥ मद्राकरोति, भद्राकरोति ॥ ॥

# ३६० । समासान्तगतानां वा राजादीनामदन्तता ॥

समासान्तगतानां वा राजादीनामदन्तता निपात्यते । अत्प्रत्ययो वाऽदन्तो वा येषामिति विग्रहः । अवयवावयवोऽपि समासस्यावयवः, तेनोपराजम्, अध्यात्मम्-अव्ययीभावाद् विभक्तीनामम् । द्विपुरी, त्रिपुरी—द्विगोर्नदादित्वादी । अक्त्वचिनी,—इन्द्वनिन्दितरोगेभ्य इतीन् । एवमन्येऽपि ॥

प्रणम्य रुद्रस्य हरेर्भवान्या वाग्या गणेशस्य च पादपद्मम् । तनोति रत्नेश्वरचक्रवर्ती राजादिवृत्तिं पठतां हिताय ॥

३६१ । राजन् अहन् सखि ॥ १ ॥ प्रागुक्तो विधिस्तत्पुरुष एव वक्ष्यति । एते तत्पुरुषे राजादयो भवन्ति । राजादित्वाददन्तता स्यादित्यर्थः । महाराजः । परमाहः । द्व्यहः । विबुधसखः । तत्पुरुष इति किम् ? शोभनराजा मगधः । दीर्घाहो निदाघः । वायुसखा राजा ॥

३६२ । गोरतद्धिताभिधेये ॥ २ ॥ तद्धिताभिधेयं वर्जयित्वा तत्पुरुषे गौ राजादिर्भवति । राजगवः । परमगवः ॥ अतद्धिताभिधेय इति किम् ? पञ्चगुः । अन्यत्र चित्रगुः ॥

३६३ । उरःप्रधानार्थम् ॥ ३ ॥ प्रधानार्थ उरःशब्दो राजादिर्भवति । अश्वोरसम् । हस्त्युरसम् । अश्वानां हस्तिनां च प्रधानमित्यर्थः । प्रधानार्थमिति किम् ? अश्वोरः, अश्वानां वक्ष इत्यर्थः ॥

३६४ । अनस् अश्मन् अयस् सरस् जातिसंज्ञयोः ॥ ४ ॥ जातौ संज्ञायां च एते चत्वारो राजादयो भवन्ति । उपगतमनः—उपानसम् जातिः । महानसम् संज्ञा । अमृताश्मः जातिः । कृष्णाश्मः संज्ञा । पिण्डायसम् जातिः । लोहितायसम् संज्ञा । मण्डूकसरसम् जातिः । जलसरसम् संज्ञा । अनयोरिति किम् ? बृहदन इत्यादि ॥

३६५ । ग्रामकौटाभ्यां तक्ष्णः ॥ ५ ॥ आभ्यां तक्ष्णा राजादिर्भवति । ग्रामतक्षः, कौटतक्षः । आभ्यामिति किम् ? राजतक्षा ॥

३६६ । अतेः श्वनः ॥ ६ ॥ अतिपूर्वः श्वा राजादिर्भवति । अतिश्वो वराहः, वेगवानित्यर्थः । अतिश्वः सेवकः, सुस्वामिभक्त इत्यर्थः । अतिश्वी सेवा, निकृष्टेत्यर्थः ॥

३६७ । उपमानादप्राणिनि ॥ ७ ॥ अप्राणिविषय उपमानं यः, स राजादिर्भवति । आकर्षः श्वेव—आकर्षश्वः । फलकः श्वेव, फलकश्वः । अप्राणिनीति किम् ? व्याघ्रः श्वेव, व्याघ्रश्वा ॥

३६८ । मृगपूर्वोत्तरेभ्यश्च सक्थि ॥ ८ ॥ एभ्य उपमानाच्च सक्थि राजादिर्भवति । मृगसक्थम् । पूर्वसक्थम् । उत्तरसक्थम् । फलकसक्थम् ॥

३६९ । अतद्धितार्थे द्विगोर्नौः ॥ ९ ॥ तद्धितार्थं वर्जयित्वोत्तरपदे समाहारे च द्विगोः सम्बन्धिनी नौ राजादिर्भवति । द्विनाव धनम् । पञ्चनावं धनम् । अतद्धितार्थ इति किम् ? पञ्चनौः । द्विगोरिति किम् ? परमनौः ॥

३७० । अर्धाच्च ॥ १० ॥ अर्धशब्दाच्च परा नौ राजादिर्भवति । अर्धनावम् । लिङ्गस्य लोकाश्रयत्वान्नपुंसकत्वमेव ॥

३७१ । वा खारी ॥ ११ ॥ अर्धात्परा अतद्धितार्थे द्विगोःखारी राजादिर्भवति वा । अर्धखारम्, अर्धखारी । अभिधानबलाच्च स्त्रीत्वम् । द्विखारधनम्, द्विखारी । अतद्धितार्थे द्विगोः स्त्रीप्रत्ययस्य निवृत्तेर्नास्ति व्यावृत्तिः । पञ्चभिः खारीभिः क्रीतः—पञ्चखारः ॥

३७२ । द्वित्रिभ्यामञ्जलिः ॥ १२ ॥ आभ्यां परोऽञ्जलिशब्दो राजादिर्भवति वा । द्व्यञ्जलम्, द्व्यञ्जलि, त्र्यञ्जलम्, त्र्यञ्जलि, द्व्यञ्जलप्रियः, द्व्यञ्जलिप्रियः । त्र्यञ्जलप्रियः, त्र्यञ्जलिप्रियः । उत्तरपदेऽतद्धितार्थे नेच्छन्त्यन्ये । अतद्धितार्थे द्विगोरिति किम् ? द्व्यञ्जलिः, त्र्यञ्जलिः ॥

३७३ । जनपदाद् ब्रह्मन् ॥ १३ ॥ जनपदवाचकाच्छब्दात्परो ब्रह्मन्

राजादिर्भवति । प्रवन्तिषु ब्रह्मा—अवन्तिब्रह्मः । वा न वर्त्तते पत्र वाग्रहणात् ॥

३७४ । कुमहद्भ्यां वा ॥ १४ ॥ आभ्यां ब्रह्मन् राजादिर्भवति वा । कुत्सितो ब्रह्मा—कुब्रह्मः, कुब्रह्मा । महाब्रह्मः महाब्रह्मा । आभ्यामिति किम् ? । परमब्रह्मा ॥

३७५ । एकतेषु स्त्रीत्वसम्भवे नदादौ द्रष्टव्याः ॥ १५ ॥ एतेऽप्रत्ययान्ताः स्त्रियां वर्त्तन्ते चेत्तदा नदादौ द्रष्टव्याः, ईप्रत्ययान्ता भवन्तीत्यर्थः । यथा राजानमतिक्रान्ता—अतिराजी । इत्यादि । सम्भव इति किम् ? अर्धनावम्, अर्धखारम् ॥

३७६ । संख्याव्ययाद्यङ्गुलिः ॥ १६ ॥ संख्याव्ययावादी यस्येति विग्रहः । संख्याव्ययाङ्गुलिशब्दो राजादिर्भवति ॥ द्वयोरङ्गुलयोः समाहारः—द्व्यङ्गुलम् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । तद्धितामिधेये द्विगुरयम् । तेन तमाद्विविहिताः प्रमाणे द्वयसट्दघ्नट्मात्रट् प्रत्यया न भवन्त्युक्तार्थत्वात् । यथा अङ्गुलिः प्रमाणमस्य अङ्गुलिद्वयसम् । अङ्गुलिदघ्नम् । अङ्गुलिमात्रम् । अव्ययादि—निरङ्गुलम् ॥

३७७ । अहः सर्वैकदेशसंख्यातपुण्यवर्षादीर्घादिभ्य रात्रिः ॥ १७ ॥ एतेभ्यः संख्याव्ययादिभ्यश्च रात्रिशब्दो राजादिर्भवति । अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । अपररात्रः । एकदेशो वर्त्तमानस्य पूर्वादिशब्दस्यैकदेशत्वात्कर्मधारयः । अन्यत्र पूर्वरात्रिः—अतिक्रान्ता रात्रिरित्यर्थः । संख्यातरात्रः । पुण्यरात्रः । वर्षारात्रः । दीर्घरात्रः । संख्याव्ययादिश्च, द्विरात्रम्, त्रिरात्रम् । एभ्योऽहोऽहोऽति नलोपो न दृश्यते । पूर्वाह्ण इत्यादि । संख्याताह्ना—संख्याताहः । संख्याताहः । समाहारद्विगौ न लोपः—द्व्यहः, त्र्यहः ॥

३७८ । प्रागुक्तो विधिस्तत्पुरुष एव ॥ १८ ॥ राजाहन् सखीत्यादियों विधिः स तत्पुरुष एव राजादिर्भवतीति वेदितव्यः । तेन बहुव्रीह्यादौ न भवतीत्यर्थः । इन्द्रः सखा यस्य—इन्द्रसखा । इत्यादि । उपसखि । रामसखायः । इत्यादि ॥

३७९ । पथ्यप्पुरः ॥ १९ ॥ एते समासमात्रे राजादयो भवन्ति । स्थूलश्चासौ पन्थाश्चेति—स्थूलपथः । विमला आपो यत्र—विमलाप सरः । ललाटं पूरिव—ललाटपुरम् ॥

३८० । धुरमक्षस्य ॥ २० ॥ अक्ष सम्बन्धिनीं धुरं वर्जयित्वा धुर् शब्दो राजादिर्भवति । राजधुरा । महाधुरा । अनक्षस्येति किम् ? अक्षधूः, दृढधूरक्षः ॥

३८१ । ऋचः ॥ २१ ॥ समासमात्र ऋक्शब्दो राजादिर्भवति । अर्धर्चः, सत्तर्चः ॥

३८२ । नञ्बह्वादिश्च माणवकचरणयोः ॥२२॥ चकारः समुच्चयमात्रे । नञ्बह्वादिश्च ऋक्शब्दो राजादिर्भवति । माणवकचरणयोः । अनृचो माणवकः । बह्वृचश्चरणः । अनयोरिति किम् ? अनृकं साम, बह्वृकं सूक्तम् । शेषाद्वेति कप्रत्ययः ॥

३८३ । प्रत्यन्ववेभ्यः सामलोमनी ॥ २३ ॥ प्रति अनु अव एभ्यः सामलोमनी राजादी भवतः । प्रतिसामम्, प्रतिलोमम्, । अनुसामम्, अनुलोमम् । अवसामम्, अवलोमम् । प्रतिगतं साम इत्यादि वाक्यम् ॥

३८४ । अचक्षुरक्षि ॥ २४ ॥ अचक्षुर्विषये वर्तमानम् अक्षि राजादिर्भवति । लवणमक्षीव—लवणाक्षः । गवाक्षः । अचक्षुरिति किम् ? ब्राह्मणाक्षि ॥

३८५ । ब्रह्महस्तिराजपल्येभ्यो वर्चस् ॥ २५ ॥ एभ्यो वर्चो राजादिर्भवति । वर्चो दीप्तिः—ब्रह्मणो वर्चः—ब्रह्मवर्चसम्, हस्तिवर्चसम्, राजवर्चसम्, पल्यवर्चसम् । एभ्य इति किम् ? देववर्चः ॥

३८६ । अन्धसमवेभ्यस्तमस् ॥ २६ ॥ एभ्यस्तमो राजादिर्भवति । अन्धं करोतीति—अन्धम् । अन्धं च तमश्चेति—अन्धतमसम् । सन्ततं तमः—सन्तमसम् । अवहीनं तमः—अवतमसम् । एभ्य इति किम् ? महातमः ॥

३८७ । अतोऽवसीयस् ॥ २७ ॥ अस इत्यस्मात्परम् अवसीयो

राजादिर्भवति । शोभनमवसीयः, श्वोऽवसीयसं कल्याणमिति ॥

३८८ । निशश्च श्रेयस् ॥ २८ ॥ चकारः श्वसोऽनुकर्षणार्थः । निसः श्वसश्च परं श्रेयो राजादिर्भवति । निःश्रेयसम् । श्वःश्रेयसम् । कल्याणमित्यर्थः ॥

३८९ । अन्ववतप्तेभ्यो रहस् ॥ २९ ॥ एभ्यो रहो राजादिर्भवति । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥

३९० । प्रतेरुरस् आधारश्चेत् ॥ ३० ॥ यद्याधारः स्यात् तदा प्रतेः पर उरस् शब्दो राजादिर्भवति । उरसि वर्त्तते—प्रत्युरसम् । उरसी-त्यर्थः । आधार इति किम् ? प्रत्युरः ॥

३९१ । अनुगवमायामवति ॥ ३१ ॥ आयामो दैर्घ्यम् । अनुगवम् अत्प्रत्ययान्तं निपात्यते दैर्घ्यं चेत् । गवामनुयातं शकटम्—अनुगवम् । आयामवतीति किम् ? गवां पश्चात्—अनुगु । पश्चादर्थेऽव्ययीभावः ॥

३९२ । उपसर्गादध्वन् ॥ ३२ ॥ प्रादेः परोऽध्वन्शब्दो राजादि-र्भवति । प्रगतोऽध्वानम्—प्राध्वो रथः । अत्यध्वं शकटम् । उपसर्ग-ग्रहणं सुखार्थं प्रादेरिति सिद्धत्वात् ॥

३९३ । उदक्पाण्डुकृष्णेभ्यो भूमिः ॥ ३३ ॥ एभ्यो भूमी राजादि-र्भवति । उदीची भूमिर्यस्य—उदग्भूमः, एवं पाण्डुभूमः, कृष्णभूमो देशः ॥

३९४ । संख्याया नदी गोदावर्यौ च ॥ ३४ ॥ एकादयः संख्या । अस्याः परा नदी गोदावरी भूमिश्च राजादयो भवन्ति । पञ्चनदम्—पञ्चगोदावरम् । नदीवाचकानां समाहारे अव्ययीभावो दृश्यते । द्वे भूमी यस्य—द्विभूमः प्रासादः ॥

३९५ । उक्तेषु स्त्रीत्वसम्भवे स्त्रियामादा । ३५ ॥ उक्तेषु ऋक्पूरप् पुर इत्यादिष्वत्प्रत्ययान्ते स्त्रीत्वसम्भवे सति स्त्रियामादा भवतीत्यर्थः । स्थूलः पन्था यस्याः सा स्थूलपथा नगरी । स्त्रीत्वसम्भव इति किम् ? ललाटे पुरम् ॥

३९६ । समाहारद्वन्द्वअवर्णद्वयान्तः ॥ ३६ ॥ समाहारद्वन्द्वसमास-

व्याप्रवर्गान्तदान्तषान्तहान्ता राजादयो भवन्ति । वाक्त्वचम्, श्रीस्रजम् । दर्कारान्त—समिद्दृशदम् । षान्त—वागद्विषम् । हान्त—पीठच्छत्त्रोपानहम् । समाहारद्वन्द्वस्यादिति किम् ? रक्तत्वचौ ॥

३९७। इतोऽव्ययीभावः ॥ ३७ ॥ इतः परो बहुव्रीहेः प्राग् यो विधिः स राजादयो वक्ष्यन्ते । तेऽव्ययीभावसमासे भवन्तीत्यधिक्रियते ॥

३९८। शरद्विपाश् अयस् चेतस् मनस् उपानह् दिव: संज्ञायाम् ॥ ३८ ॥ एतेऽव्ययीभावसमासान्ताः संज्ञायां राजादयो भवन्ति । शरदः समीपम्—उपशरदम् । उपविपाशम्, उपायसम्, उपचेतसम्, उपमनसम्, उपोपानहम्, उपदिवम् ॥

३९९। हिमवन्त् द्विषा ॥ ३९ ॥ एतौ राजादी भवतः, उपहिमवतम्, उपद्विषम् ॥

४००। अनड्वाह् विश् चत्वार् यद् तद् ॥ ४० ॥ अव्ययीभावसमास एते राजादयो भवन्ति । उपानडुहम्, उपविशम्, उपचतुरम्, उपयदम्, उपतदम् ॥

४०१। जरा जरस् ॥ ४१ ॥ जराशब्दो राजादिर्भवति निर्दिष्टस्य जराशब्दस्य जरसादेशश्च । उपजरसम् ॥

४०२। प्रतिसमनुभ्योऽक्षि ॥ ४२ ॥ एभ्योऽक्षिशब्दो राजादिर्भवति । प्रत्यक्षम्, समक्षम्, अन्वक्षम् ॥

४०३। उपश्चन ॥ ४३ ॥ उपादेव श्वन्शब्दो राजादिर्भवति, नान्यस्मादिति । उपशुनम् । नियमः किम् ? अधिश्व ॥

४०४। सहरजस् ॥ ४४ ॥ सहात्परो रजस् शब्दो राजादिर्भवति । सरजसमभ्यवहरति । साकल्येऽव्ययीभावः ॥

४०५। अजन्तः ॥ ४५ ॥ अजन्तशब्दो राजादिर्भवति । अध्यात्मम् । उपराजम् ॥

४०६। नपुंसकं वा ॥ ४६ ॥ नपुंसकलिङ्गमजन्तं राजादिर्भवति वा । उपचर्मम्, उपचर्म ॥

४०७। धुड्न्तः ॥ ४७ ॥ नपुंसकमिति न वर्त्तते। अधिकारस्येह विषयत्वात्। धुडन्तशब्दो राजादिर्भवति वा। उपसमिधम्, उपसमित्, उपदृशदम्, उपदृशत् ॥

४०८। गिरि नदी पौर्णमासी आग्रहायणी ॥ ४८ ॥ एते चत्वारो राजाद्यो भवन्ति वा। उपगिरम्, उपगिरि, उपनदम, उपनदि, उपपौर्णमासम्, उपपौर्णमासि, उपाग्रहायणम्, उपाग्रहायणि ॥

४०९। इतो बहुव्रीहिः ॥ ४९ ॥ इतः परं य आदन्ता वक्ष्यन्ते ते बहुव्रीहौ समासे भवन्तीत्यर्थः ॥

४१०। सक्थ्यक्षिणी स्वाङ्गे ॥ ५० ॥ एतौ स्वाङ्गे वर्त्तमानौ राजादी भवतः। दीर्घे सक्थ्यस्य—दीर्घसक्थः। एवं विशालाक्षः॥ स्वाङ्ग इति किम्? दीर्घसक्थिः। स्थूलाक्षिरिक्षुः। अप्राणिस्थत्वादस्वाङ्गता॥

४११। दारुण्यङ्गुलिः ॥ ५१ ॥ दारुणि वर्त्तमानोऽङ्गुल्यन्तो बहुव्रीहौ राजादिर्भवति। द्वे अङ्गुली यस्य—द्व्यङ्गुलं दारु॥

४१२। द्वित्रिभ्यां मूर्द्धन् ॥ ५२ ॥ आभ्यां मूर्द्धन्शब्दो बहुव्रीहौ राजादिर्भवति। द्वौ मूर्द्धानौ यस्य स द्विमूर्द्धः। एवं त्रिमूर्द्धः॥

४१३। उक्तेषु स्त्रीत्वसम्भवे नद्यादित्वादी ॥ ५३ ॥ उक्तेषु सक्थ्यक्षिणी स्वाङ्गे इत्यादिषु य अदन्तास्तेभ्यो नद्यादित्वाद् ईप्रत्ययो भवतीत्यर्थः। दीर्घसक्थी, विशालाक्षीत्यादि ॥

४१४। पूरणीप्रमाण्योः ॥ ५४ ॥ पूरणप्रत्ययान्ता स्त्री पूरणी। पूरणीप्रमाणीशब्दौ राजादी भवतः। सा चेद्बहुव्रीहिस्तस्यामेव पूरणग्रमण्यपदार्थत्वे न वर्त्तते। तदेतन्मुख्यपूरणीग्रहणात्। कल्याणीपञ्चमा, रात्रयः। मुख्यपूरणीति किम्? कल्याणपञ्चमीकः पक्षः। स्त्रीप्रमाणाः कुटुम्बिनः। प्रमाणशब्देनैव सिद्धे कप्रत्ययबाधनार्थोऽयम्। यथा कल्याणपञ्चमीकः पक्षः॥

४१५। अन्तर्बहिर्भ्यां लोमन् ॥ ५५ ॥ आभ्यां लोमन्शब्दो राजादिर्भवति। अन्तर्लोमः, बहिर्लोमः ॥

४१६। नञ्सुभ्यां सक्थ्यादि ॥ ५६ ॥ नञ्सुभ्यां सक्थ्यादि। नञ्सुभ्यामक्षका

नञ्पूर्वात्परो नेत्रशब्दो राजादिर्भवति । मृगनेत्रा, रात्रिः । पुष्यनेत्रा । नक्षत्रादिति किम् ? देवदत्तनेत्रकः ॥

४१७ । नञ्सुव्युपत्रिभ्यश्चत्वारः ॥ ५७ ॥ एभ्यश्चत्वारशब्दो राजादिर्भवति । अचतुरः, सुचतुरः, विचतुरः, उपचतुरः, त्रिचतुरः । एभ्य इति किम् ? पञ्चचत्वारः ॥

४१८ । संज्ञायां नाभिः ॥ ५८ ॥ बहुव्रीहौ नाभी राजादिर्भवति संज्ञायां गम्यमानायाम् । पद्मनाभः, वज्रनाभः । संज्ञायामिति किम् ? पद्मनाभिः ॥

४१९ । नञ्सुदुर्भ्यः सक्थि वा ॥ ५९ ॥ एभ्यः सक्थि राजादिर्भवति वा । असक्थः, असक्थिः, सुसक्थः, सुसक्थिः, दुःसक्थः, दुःसक्थिः ॥

४२० । संख्याया अबहोरन्त्यस्वरादिलोपश्च ॥ पञ्चयाः, उपदशाः ॥

४२१ । न किमः क्षेपे ॥ किंराजा ॥

४२२ । स्वस्तिभ्यां पूजायां प्राग्बहुव्रीहेः ॥ सुराजा, अतिराजा ॥

४२३ । नञस्तत्पुरुषे ॥ अराजा, असखा ॥

४२४ । पथे वा ॥ अपथम्, अपथाः ॥

४२५ । धेन्वनडुहादयश्च ॥ धेन्वनडुहौ, ऋग्यजुषम् ॥

इति रत्नेश्वरचक्रवर्त्तिविरचित राजादिवृत्तिः समाप्ता ॥

राजादिराकृतिगणोऽयम् ॥

---

## ४२६ । डानुबन्धेऽन्त्यस्वरादेर्लोपः ॥

डानुबन्धे प्रत्यये परेऽन्त्यस्वरादेरवयवस्य लोपो भवति । चत्वारिंशतः पूरणः—चत्वारिंशः । एवं पञ्चाशः । सरसिजम् जलजम् । सप्तमीपञ्चम्यन्ते जनेर्डः ॥

## ४२७ । तोर्विंशतेरपि ॥

डानुबन्धे प्रत्यये परे विंशतेरपि तेर्लोपो भवति । विंशतेः पूरणः—विंशः ॥

## ४२८ । इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥

इवर्णावर्णयोर्लोपो भवति तद्धिते स्वरे ये च प्रत्यये परतः । आत्रेयः, द्रौणेयः, दाक्षिः, प्लाक्षिः, गाङ्गेयः, गार्ग्यः, तुल्यः । पुनर्लोपग्रहणादव्ययानामन्त्यस्वरादेर्लोपो लक्ष्यतः । सायंप्रातर्भवः—सायंप्रातिकः । पौनः—पुनिकः, बाह्यमित्यादयः ॥

## ४२९ । नस्तु क्वचित् ॥

नकारस्य लोपो भवति क्वचिल्लत्त्यानुरोधात् तद्धिते स्वरे परे । औडुलोमिः, आग्निशर्मिः । द्वे अहनी समाहृते—द्व्यहः, त्र्यहः ॥

## ४३० । उवर्णस्त्वोत्वमापाद्यः ॥

उवर्णस्त्वोत्वमापादनीयः तद्धिते स्वरे ये च प्रत्यये परतः । औपगवः, बाभ्रव्यः ॥

## ४३१ । एयेऽकद्रवास्तु लुप्यते ॥

उवर्णस्तु लुप्यते एये प्रत्यये परे, न तु कद्रूशब्दस्य । कामण्डलेयः, माद्रबाहेयः । अकद्र्वा इति किम् ? काद्रवेया नागाः ॥

## ४३२ । कार्य्यावेवावावादेशावोकारौकारयोरपि ॥

ओकारौकारयोः स्थानेऽवावावादेशौ कार्य्यौ तद्धिते स्वरे ये च प्रत्यये परे । औपगवः, गव्यम्, नाव्यम् ॥

## ४३३ । वृद्धिरादौ सणे ॥

स्वराणां मध्ये आदौ स्वरस्य वृद्धिर्भवति सणकारानुबन्धे तद्धिते प्रत्यये परे । शैवः, औपगवः, कार्पटयम् । कथं बालिशः ? आशाबित्याकारप्रश्लेषात् । क्वचिदधिकारादुत्तरपदस्यापि लक्ष्यतः । अवयवादृतूनाम्—पूर्ववार्षिकम्, अपरहैमनम् । वर्षैकदेशो हेमन्तैकदेशो वर्षाहेमन्तौ

वृत्तवार्थेभ्यो जनपदस्य च । सुपाञ्चालिकः, सर्वपाञ्चालिकः, अर्धपाञ्चालिकः । क्वचिदुभयपदस्यापि—सौभाग्यम्, सौहार्दम् । सक्तुप्रधानाः सिन्धवः, तत्रभवः—साक्तुसैन्धवः । एवमन्येऽप्यनुसर्तव्याः ॥

## ४३४ । न य्वोः पदाद्योर्वृद्धिरागमः ॥

इह प्रतिषेधो विधिश्च गम्यते । आदिशब्दः समीपवचनः । पदस्याद्योर्यकारवकारयोः समीपे वृद्धिर्न भवति, तयोश्चादौ वृद्धिरागमो भवति, सणकारानुबन्धे तद्धिते । स्थानेऽन्तरतम इति न्यायाद् यकारस्यैकारो वकारस्यौकारः । व्यसने भवः—वैयसनः । व्युदयस्यापत्यम्—वैयुदयः । स्वश्वस्यापत्यम्—सौवश्विः । व्याकरणं वेत्त्यधीते वा वैयाकरणः । य्वोः समीप इति किम् ? दाध्यश्विः, माध्वश्विः । तन्निमित्तो वृद्धिरागमो न स्यात् । पुनर्वृद्धिग्रहणं वर्धनाद्वृद्धिरिति ज्ञापनार्थम् । क्वचिदधिकाराद् द्वारादीनां चापदाद्योरपि वृद्धिप्रतिषेधो वृद्धिरागमश्च । द्वारे नियुक्तो दौवारिकः । द्वार, द्वारपाल, स्वर, व्यल्कस, स्वस्ति, स्वर्, स्वर्गमन, स्फ्यकृत, स्वादुमृदु, श्वन्, स्व एवमन्येऽप्यनुसर्तव्याः ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये तद्धितपादः समाप्तः ॥

---

## अथाख्यातप्रकरणम् ।

## १ । अथ परस्मैपदानि ॥

अथानन्तराणि त्यादीनि स्यामहि पर्य्यन्तानि परस्मैपदसंज्ञकानि भवन्ति । "नव पराण्यात्मने" इत्युक्तिबाधया पूर्वाणि नवैव वचनानि सर्वासां विभक्तीनामिति । अर्थस्य विभजनाद्विभक्तय इति । ति, तस्, अन्ति । सि, थस्, थ । मि, वस्, मस् । एवं सर्वत्र । परस्मैपदप्रदेशाः—"शेषात् कर्तरि परस्मैपदम्" इत्येवमादयः ॥

## २ । नव पराण्यात्मने ॥

अथ पराणि नव नव वचनान्यात्मनेपदसंज्ञकानि भवन्ति । पराणीति

गम्यते । ते, आते, अन्ते । से, आथे, ध्वे । ए, वहे, महे । एवं सर्वत्र। आत्मनेपदप्रदेशाः—"आत्मनेपदानि भावकर्मणोः" इत्येवमादयः ॥

## ३ । त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥

परस्मैपदानामात्मनेपदानां च त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमसंज्ञकानि भवन्ति यथासंख्यम् । ति, तस्, अन्ति इति प्रथमः। सि, थस्, थ इति मध्यमः । मि, वस्, मस् इत्युत्तमः । ते, आते, अन्ते इति प्रथमः । से, आथे ध्वे इति मध्यमः । ए, वहे, महे इत्युत्तमः। एवं सर्वत्र । संज्ञाप्रदेशाः—"नाम्नि प्रयुज्यमानेऽपि प्रथमः' 'युष्मदि मध्यमः" 'अस्मद्युत्तमः' इत्येवमादयः ॥

## ४ । युगपद्वचने परः पुरुषाणाम् ॥

युगपदेककालार्थः । युगपद्वचनमेकक्रियाकालाभिधाने पुरुषाणां मध्ये यः परः स भवति । स च त्वं चाहं च पचामः । स च त्वं चाहं चापाक्ष्म । स च त्वं चाहं च पक्ष्यामः । वचनमतन्त्रम्। स च त्वं च पचथः । त्वं चाहं च पचावः । युगपद्वचन इति किम्? स पचति, त्वं पक्ष्यसि, अहमपाक्षमिति भिन्नकालोक्तौ वयमपाक्ष्मेति माभूत् । वचनग्रहणं युगपद्विषये माभूत् । स पचति, त्वं पचसि, अहं पचामि पचामीत्येवं प्राप्नोति । अप्रवृत्तौ पर्याये वा प्राप्ते परिभाषेयम् ॥

## ५ । नाम्नि प्रयुज्यमानेऽपि प्रथमः ॥

नाम्नि प्रयुज्यमानेऽप्रयुज्यमानेऽपि प्रथमः पुरुषो भवति । स पचति, तौ पचतः, ते पचन्ति, स पचते, तौ पचेते, ते पचन्ते । एवं पच्यते घटः, पच्येते घटौ, पच्यन्ते घटाः । अप्रयुज्यमानेऽपि—पचति, पचतः, पचन्ति । एवं सर्वत्र । प्रयुज्यमानग्रहणं किम् ? धातुना युक्ते यथा स्यात् । तेन—देवदत्तेन हन्यसे त्वम्, मध्यम एव युष्मद्योगात् ॥

## ६ । युष्मदि मध्यमः ॥

युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमः पुरुषो भवति । त्वं पचसि, युवां पचथः, यूयं पचथ । अप्रयुज्यमानेऽपि—पचसि, पचथः, पचथ । एवं सर्वत्र । प्रयुज्यमानग्रहणं किम् ? त्वया पच्यते ओदनः ॥

## ७ । अस्मद्युत्तमः ॥

अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः पुरुषो भवति । अहं पचामि, आवां पचावः, वयं पचामः । अप्रयुज्यमानेऽपि—पचामि, पचावः, पचामः । एवं सर्वत्र ।

अत्वं त्वं सम्पद्यते, अनहमहं सम्पद्यते, त्वद्भवति, मद्भवतीति भवितव्यमेव—युष्मदस्मदोर्गौणत्वात् । त्वन्मदो तु शब्दमात्राश्रयत्वात् । एहि मन्ये रथेन यास्यसि यातस्ते पितेति स्वविषय एव मध्यमोत्तमौ ॥

## ८ । अदाब् दाधौ दा ॥

दाप् दैपौ वर्जयित्वा दाधावित्येतौ दासंज्ञकौ भवतः । दीयते, धीयते । अदाबिति किम् ? दायन्ते व्रीहयः, निदायन्ते भाजनानि । बकारोऽयं गणे प्रतिषेधार्थं एव निर्दिश्यते ॥

## ९ । क्रियाभावो धातुः ॥

यः शब्दः क्रियां भावयति प्रतिपादयति स धातुसंज्ञो भवति । भवति । अस्ति, जुहोति, दीव्यति, सुनोति, तुदति, रुणद्धि, तनोति, क्रीणाति, चोरयति । क्रियत इति क्रिया साध्यमुच्यते, सा च पूर्वापरीभूतावयवैव । कथं तर्हि अस्ति, नश्यति, श्वेतते प्रासादः, संयुज्यते, समवैति, सत्ता नित्यता, अभावो नाशः । श्वेतसंयोगावपि गुणौ, समवायोऽप्यर्थान्तरम् ? । सत्यमिह हि साधनायत्तोदयं सर्वम् अतस्तदधीनतया सिद्धमपि क्रियात्वेनावभासते क्रियाकारकव्यवहृतेर्बुद्ध्यवस्थानिबन्धनात् । तथा गतिचदनेकदेशे, निरवयवेऽपि । अङ्कुरो जायत इति जन्म चाभूत् प्रादुर्भाव एव अथवा जाते—विशेषेणोपलभ्यते, अतोऽङ्कुरस्य कर्तृत्वम् । तथा चोक्तम्—

"यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥"

धातुप्रदेशाः—"धातोश्च हेतौ" इत्येवमादयः ॥

## १० । काले ॥

'काल' इति सप्तम्यन्तमनुकृतम् । 'काल' इत्यधिकृतं वेदितव्यम् । तेन साधने वर्त्तमानेऽतीते भविष्यति च न स्यात् । ग्रामं गतो गमिष्यति चायं देवदत्तः, रामो वनमगच्छत्, बलिरिन्द्रो भवष्यति । वर्त्तमानादिभिः किम् ? धातोर्विशेषणं द्रव्यस्य वेति सन्देहेऽयमधिकारः । नित्यो व्यापी सम्प्रतिभूतभविष्यत्क्रिया योगादाकाशवदेको द्रव्यस्यो भिद्यते कालः ॥

## ११ । सम्प्रति वर्तमाना ॥

सम्प्रतिकाले वर्त्तमाना विभक्तिर्भवति । पचति, यजते । स्वसंज्ञैव कालो विशिष्यते । सम्प्रतीति किम् ? तस्थु, स्थास्यन्ति गिरियः ॥

## १२ । स्मेनानीते ॥

स्मशब्देन योगेऽतीते काले वर्त्तमाना विभक्तिर्भवति । दहति स्म त्रिपुरं हरः, इति स्म जनः कथयति । अतीतविषयाणां बाधकोऽयम् ॥

## १३ । परोक्षा ॥

अतीते काले परोक्षा विभक्तिर्भवति । जघान कंसं किल वासुदेवः । कटं चक्रे देवदत्तः ॥

## १४ । भूतकरणवत्यश्च ॥

भूतकालः करणं तद्विद्यते यासामिति पारिशेष्याद् ह्यस्तन्यद्यतनी क्रियातिपत्तय एव रूढाः । एता भूतकरणवत्यस्तिस्रो विभक्तयोऽतीते काले भवन्ति । अकरोत्, अकार्षीत्, अकरिष्यत् ॥

## १५ । भविष्यति भविष्यन्त्याशीःश्वस्तन्यः ॥

भविष्यति काले भविष्यन्त्याशीःश्वस्तन्यस्तिस्रो विभक्तयो भवन्ति । कटं करिष्यति, शत्रुं वध्यात्, ओदनं भोक्ता ॥

## १६ । तासां स्वसंज्ञाभिः कालविशेषः ॥

तासां वर्त्तमानादीनां स्वसंज्ञाभिः कालस्य विशेषो ज्ञेयः । तेन वर्त्तमाने काले वर्त्तमानेति, वर्त्तत इति वर्त्तमानः प्रारम्भोऽपरिसमाप्तिः, मांसं न खादति, इह कुमाराः क्रीड़न्ति, तिष्ठन्ति पर्वताः, कदागतोऽसि, एष आगच्छामि । कदागमिष्यसि, एष गच्छामि । परोक्षेऽतीते काले परोक्षेति, अक्ष्णां परं परोक्षम्, इन्द्रियाणामविषय इत्यर्थः कथं सुप्तोऽहं किं विललाप मत्तोऽहं किं विचचार, चित्तस्य विक्षेपात् । नाहं कलिङ्गं जगाम इति गमनदोषभयात्प्रत्यक्षमप्यपह्नुते । परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनयोग्यत्वात्परोक्षस्याविवक्षायां ह्यस्तन्यपि—अयजत्, इयाज । सतोऽपि चाविवक्षा, यथानुदरा कन्येति ।

ह्यस्तनेऽतीते काले ह्यस्तनी, ह्योभवः कालो ह्यस्तनः । अद्य ह्यो वाभुङ्महीति व्यामिश्रे सन्निधानादद्यतनी । अद्यतनेऽतीते मात्रेऽद्यतनी । अद्यभावोऽद्यतनः—आन्याय्यादुत्थानादा न्याय्याच्च संवेशनादहः । उभयतोऽर्द्धरात्रं वा लोकतः सिद्धम् । कथम् अमुत्रावात्सं सकलां रात्रिं जागरितः रात्रेरप्रभातत्वादद्यतनमिव कालं मन्यते ? यो मुहूर्त्तमपि सुप्तः, सोऽनद्यतनं जानन् अमुत्रावसमित्याह । अगमाम घोषान्, अगाम पय इति ह्यस्तनस्याविवक्षैव ह्योऽगमाम घोषानिति पदार्थह्यस्तने ह्यस्तनी, न वाक्यार्थे इति मतम् ।

क्रियातिपत्तावतीते काले क्रियातिपत्तिरिति । यद्यग्निमलप्स्यत, ओदनमपक्ष्यत् । भविष्यति क्रियातिपतने भविष्यन्त्येव, ॥

भविष्यति काले भविष्यन्ती भविष्यत्कालस्य भविष्यद्विशेषणात् । अद्य श्वो वा गमिष्यतीति श्वस्तनीमपि बाधते । आशीर्युक्ते भविष्यति काले आशीः । अनागतस्येष्टार्थस्य लाभेनाविष्करणमाशीः । अर्थाद्भविष्यद्विषयेव, यदस्या भविष्यद्विधानं तत् सुखप्रतिपत्त्यर्थम् ॥

शोभवः कालः श्वस्तनः, स चार्थाद्भविष्यन् यद्‌स्या भविष्यद्विधानं तत्सामान्यभविष्यत् प्रतिपत्त्यर्थम्। श्वो गमिष्यति मासेन गमिष्यतीति पदसंस्कारात्। अन्वर्थसंज्ञायाः प्रायोऽनुसिद्धत्वात् शङ्करः स्यादिति परिभाषेयम् ॥

## १७। प्रयोगतश्च ॥

प्रयुज्यत इति प्रयोगः। प्रयोगवशात् कालस्य विशेषो ज्ञेयः, अर्थात्पदान्तरसम्बन्धे। यावद्‌भुङ्क्ते ततो व्रजति, भविष्यत्त्वात् गम्यते। भविष्यन्ती विवक्षायां तु यावच्छब्दस्या प्रयोग एव। अधीष्व माणवक, पुरा विद्योतते विद्युत्। क्षिप्रं कुरु कटं, पुरा गच्छसि ग्रामम्। वर्त्तमानसामीप्यस्य तद्ग्रहणेन ग्रहणम्, पुराशब्दाद्भविष्यद्वगमे सति तदा तस्य वर्त्तमानता वा। कदाकर्हियोगे वर्त्तमानाभविष्यन्तीश्वस्तन्यः—कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता, कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता। भविष्यति परोक्षादयोऽपि—कदा बुभुजे, कदा भुक्तः, कदा भुक्तवान्। तथा किमो विभक्तिडतरडतमन्तस्य प्रयोगे लिप्सायां गम्यमानायाम् भविष्यति सामान्ये—को भवतां भिक्षां ददाति, दास्यति, दाता वा। कतरो भवतां, कतमो भवतां भिक्षां ददाति, दास्यति, दाता वा। भूतविहिता अपि दृश्यन्ते—को भवतां पाटलिपुत्रमगच्छत्, अगमदिति वा। तथा लिप्स्यमानात् सिद्धावपि—यो भवतां भिक्षां ददाति दास्यति दाता वा, स स्वर्गलोकं याति, यास्यति, याता वा। यो भवतां भिक्षामदात् स स्वर्गलोकमगमदिति। एवमन्येऽप्यनुसर्त्तव्याः ॥

## १८। पञ्चम्यनुमतौ ॥

कर्त्तुमिच्छतोऽनुज्ञानुमतिः, सा च वर्त्तमानभविष्यद्विषयैव। अनुमतौ वर्त्तमानाद्धातोः पञ्चमी भवति। एवं कुरु, कटं कुरु, तूष्णीं तिष्ठ, भज कमलम्, कुरु दयाम् ॥

## १९। समर्थनाशिषोश्च ॥

परैरशक्यस्य वस्तुनोऽध्यवसायः समर्थनता, इष्टार्थस्याशंसनमाशीः। समर्थनाशिषोश्च वर्त्तमानाद्धातोः पञ्चमी भवति। पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणि। कश्चिदाह—समुद्रः शोषयितुमशक्यः, स आह—समुद्रमपि शोषयाणीति समर्थयति मतमस्य। आशिषि च—जीवतु भवान्, नन्दतु भवान्, अपि शिरसा पर्वतं भिन्द्यात्, अपि सिञ्चेन्मूत्रसहस्रमिति विधौ सप्तमी, अपिशब्दोऽत्र सम्भावने प्रयोगतश्चेति सिद्धम्। नन्विष्टाशंसनमपि प्रार्थनमेव ? सत्यम्, अशीर्विभक्त्या बाधिता पञ्चमी यथा स्यादिति वचनम् ॥

## २०। विध्यादिषु सप्तमी च ॥

विध्यादिषु वर्त्तमानाद्धातोः सप्तमी भवति पञ्चमी च। विधिरज्ञातज्ञापनमेव। कटं कुर्य्यात्, कटं करोतु भवान्। यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्। इह भुञ्जीत, इह भुङ्क्तां भवान्। यत्र प्रत्याख्याने कामचारस्तदामन्त्रणम्। इहासीत, इहास्तां भवान्। सत्कारपूर्वको व्यापारोऽध्येषणम्। माणवकमध्यापयेद्, अध्यापयतु भवान्। निरुपधा सम्प्रश्नः। किं नु खलु भो व्याकरणमधीयीय, उत छन्दोऽधीयीय, किं नु खलु भो व्याकरणमध्ययै, उत छन्दोऽध्ययै। याञ्चा प्रार्थना। लभेय भिक्षाम्, देहि मे भिक्षाम्। प्रैषप्राप्तकालयोरपि सप्तमी पञ्चमी च स्यादेवेति मतम्। प्रेषितस्त्वं ग्रामं गच्छेः, ग्रामं गच्छ। प्राप्तस्ते कालः कटकरणे—कटं कुर्य्यात् कटं करोतु भवान्। कथं विदध्यात्, निमन्त्रयेत्, आमन्त्रयेत्, अधीच्छेत्, संपृच्छेत्, प्रार्थयेत् ? कृत्यरूपेषु विध्यादिषु तयोर्विधानात्। यदा तु प्रकृत्यर्थस्य न कर्त्तव्यता तदा विदधातीत्यादयः सिद्धाः ॥

## २१। क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः ॥

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा । क्रियासमभिहारे वर्त्तमानाद्धातोः सर्वक्रियाकालेषु मध्यमैकवचनं भवति पञ्चम्याः । लुनीहि लुनीहि इत्येवायं लुनाति, लुनीतः, लुनन्ति । लुनासि, लुनीथः, लुनीथ । लुनामि, लुनीवः, । लुनीमः । अलुनात् , लविष्यति । अधी- ष्वाधीष्व इत्येवायमधीते, अध्यैत, अध्येष्यते । सर्वक्रियाकालेष्विति वचनात्संख्याविशेषो न गम्यत इत्यनुप्रयोगः । प्रत्यासत्तेरतेनैव धातुना कारकेणेति सुखार्थमेवेदम्, अन्यथा एवमसौ त्वरावान् यदन्यानपि प्रेरयन् क्रियां करोतीति विवक्षया सिध्यति । तथा लुनीत लुनीत इत्येवायं यूयं लुनीथ । अधीध्वमधीध्वमित्येवायं यूयमधीध्वे । तथा भ्राष्ट्रमट, मठमट, खट्टूरमट, स्थाल्यपिधानमट इत्येवायमटतीत्यादयो विषयाः ॥

## २२ । मायोगेऽद्यतनी ॥

माशब्देन योगे धातोरद्यतनी भवति । मा कार्षीत्, मा भवान् पाक्षीत् । कथं मा भवतु तस्य पापं, मा करिष्यतीति ? निरनुबन्धग्रह- णात् सानुबन्धमायोगे न स्यादिति केचित् । वर्त्तमानभविष्यद्विषयाणां बाधकोऽयम् ॥

## २३ । मास्मयोगे ह्यस्तनी च ॥

मास्मशब्देन योगे धातोर्ह्यस्तनी भवति, चकारादद्यतनी च । मा स्म करोत्, मा स्म कार्षीत् । अस्तीऽपीच्छन्ति केचित्—स्म करोम्या । पृथग् योगात् केवलमायोगे न स्यात् ॥

## २४ । वर्त्तमाना ॥

ति, तस् , अन्ति; सि, थस् , थ; मि, वस् , मस् । ते, आते, अन्ते; से, आथे, ध्वे; ए, वहे, महे । इमानि वचनानि वर्त्तमानसंज्ञ- कानि भवन्ति । वर्त्तमानप्रदेशाः—"सम्प्रति वर्त्तमाना" इत्येवमादयः ॥

## २५ । सप्तमी ॥

यात्, याताम्, युस्; यास्, यातम्, यात; याम्, याव, याम। ईत, ईयाताम्, ईरन्; ईथास्, ईयाथाम्, ईध्वम्; ईय, ईवहि, ईमहि। इमानि वचनानि सप्तमीसंज्ञकानि भवन्ति। सप्तमीप्रदेशाः—"विध्यादिषु सप्तमी च" इत्येवमादयः॥

## २६। पञ्चमी॥

तु, ताम्, अन्तु; हि, तम्, त; आनि, आव, आम। ताम्, आताम्, अन्ताम्; स्व, आथाम्, ध्वम्; ऐ, आवहै, आमहै। इमानि वचनानि पञ्चमीसंज्ञकानि भवन्ति। पञ्चमीप्रदेशाः—"पञ्चम्यनुमतौ" इत्येवमादयः॥

## २७। ह्यस्तनी॥

दि, ताम्, अन्; सि, तम्, त; अम्, व, म। त, आताम्, अन्त; थास्, आथाम्, ध्वम्; इ, वहि, महि। इमानि वचनानि ह्यस्तनीसंज्ञकानि भवन्ति। ह्यस्तनीप्रदेशाः—"मास्मयोगे ह्यस्तनी च" इत्येवमादयः॥

## २८। एवमेवाद्यतनी॥

एवमेवाद्यतनी भवति। अद्यतनीप्रदेशाः—"मायोगेऽद्यतनी" इत्येवमादयः॥

## २९। परोक्षा॥

अट्, अतुस्, उस्; थल्, अथुस्, अ; अट्, व, म। ए, आते, इरे; से, आथे, ध्वे; ए, वहे, महे। इमानि वचनानि परोक्षासंज्ञकानि भवन्ति। परोक्षाप्रदेशाः—"परोक्षा" इत्येवमादयः॥

## ३०। श्वस्तनी॥

ता, तारौ, तारस्; तासि, तास्थस्, तास्थ; तास्मि, तास्वस्, तास्मस्। ता, तारौ, तारस्; तासे, तासाथे, ताध्वे; ताहे, तास्वहे, तास्महे। इमानि वचनानि श्वस्तनीसंज्ञकानि भवन्ति। श्वस्तनीप्रदेशाः—"भविष्यति भविष्यन्त्याशीः श्वस्तन्यः" इत्येवमादयः॥

## ३१ । आशीः ॥

यात्, यास्ताम्, यासुस्; यास्, यास्तम्, यास्त; यासम्, यास्व, यास्म । सीष्ट, सीयास्ताम्, सीरन्; सीष्ठास्, सीयास्थाम्, सीध्वम्; सीय, सीवहि, सीमहि । इमानि वचनान्याशीः संज्ञकानि भवन्ति । आशीःप्रदेशाः—"आशिषि च परस्मै" इत्येवमादयः ॥

## ३२ । स्यसंहितानि त्यादीनि भविष्यन्ती ॥

धातोः पराणि स्येन संहितानि त्यादीनि भविष्यन्तीसंज्ञकानि भवन्ति । स्यति, स्यतस्, स्यन्ति; स्यसि, स्यथस्, स्यथ; स्यामि, स्यावस्, स्यामस् । स्यते, स्येते, स्यन्ते; स्यसे, स्येथे, स्यध्वे; स्ये, स्यावहे, स्यामहे । भविष्यन्तीप्रदेशाः—"भविष्यतिभविष्यन्त्याशीःश्वस्तन्यः" इत्येवमादयः ॥

## ३३ । स्यादीनि क्रियातिपत्तिः ॥

धातोः पराणि स्येन संहितानि स्यादीनि क्रियातिपत्तिसंज्ञकानि भवन्ति । स्यत्, स्यताम्, स्यन्; स्यस्, स्यतम्, स्यत; स्यम्, स्याव, स्याम । स्यत, स्येताम्, स्यन्त; स्यथास्, स्येथाम्, स्यध्वम्; स्ये, स्यावहि, स्यामहि । क्रियातिपत्तिप्रदेशाः—"अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" इत्येवमादयः ॥

एताः पूर्वाचार्य्यप्रसिद्धाः संज्ञा अन्वर्था इह ज्ञाप्यन्ते ॥

## ३४ । षडाद्याः सार्वधातुकम् ॥

षण्णां विभक्तीनामाद्या वर्त्तमानासप्तमीपञ्चमीह्यस्तन्यः सार्वधातुकसंज्ञा भवन्ति । सार्वधातुकप्रदेशाः—"जुहोत्यादीनां सार्वधातुके" इत्येवमादयः ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते प्रथमः पादः समाप्तः ॥

## ३५ । प्रत्ययः परः ॥

प्रतीयते येनार्थः स प्रत्यय इति रूढिः । यथाप्रत्ययात्प्रथमं क्रियत इति प्रकृतिः । प्रकृतेः परः प्रत्ययो वेदितव्यः । वृक्षः, प्रश्नकः, याचकः, स्रष्टा, औपगवः, जुगुप्सते, गोपायति, कर्त्ता, कर्त्तव्यः । अनियमे प्राप्ते परिभाषेयं विध्यङ्गशेषभूता वा ॥

## ३६ । गुप्तिज्किद्भ्यः सन् ॥

गुप्तिज्किद्भ्यः सन् परो भवति स्वार्थे । जुगुप्सते माम् । तितिक्षते तपस्तापसः । विचिकित्सति मे मनः । चिकित्सत्यातुरं वैद्यः । रिपुं चिकित्सति । चिकित्स्यानि क्षेत्रे तृणानि ॥

"गुपो बधेश्च निन्दायां क्षमायां च तथा तिजः ।
संशये च प्रतीकारे कितः सन्नभिधीयते ॥"

अकारोच्चारणं किम् ? "स्वरादेर्द्वितीयस्य" इति द्विर्वचनार्थम्, तेनार्थान् प्रतीषिषति ॥

## ३७ । मान्बध्दान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥

मानादिभ्यः सन् परो भवति स्वार्थे, दीर्घश्चैषामभ्यास स्येतो भवति । मीमांसते, बीभत्सते, दीदांसते, शीशांसते । अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते । कथम् अवदानम्, निशानमिति ? दातेः श्यतेश्च युटा सिद्धम् । चौरादिकेन—मानः, मानयति । दान् शान् उभयम्, कित्परस्मै ॥

## ३८ । धातोर्वा तुमन्तादिच्छतिनैककर्तृकात् ॥

वा तुमन्तो यस्येति विग्रहः । वा तुमन्ताद्धातोरिच्छतिनैककर्तृकात् सन् परो भवति । कर्तुमिच्छति—चिकीर्षति, भोक्तुमिच्छति—बुभुक्षते । सना द्योतितत्वादिषेरप्रयोगः । केचित् "सनि चानिटि" इति ज्ञापकात् तुमविषयादित्याहुः । धातोरिति किम् ? प्राचिकीर्षत् । तुमन्तादिति किम् ? भोजनमिच्छति । इच्छायामिति सिद्धे एककर्तृका-

दिति स्पष्टार्थम् । इच्छासमत्वात्सन्न भवति स्वात्मनि क्रियाविरोधात् । कथं नदीकूलं पिपतिषति, श्वा मुमूर्षति ? यथा वाक्यं तथेदं विवक्षयेति मतम् ॥

## ३९ । नाम्न आत्मेच्छायां यिन् ॥

नाम्न आत्मेच्छायामर्थे यिन् परो भवति । पुत्रमिच्छति—पुत्रीयति । एवं घटीयति । आत्मशब्दोऽत्राध्यात्मवचन एव, मन्दधियां सुखार्थः । भ्रातुः पुत्रमिच्छति, महान्तं पुत्रमिच्छति, आत्मनः पुत्रमिच्छतीति सापेक्षत्वात् । भ्रातृपुत्रीयतीति युक्तार्थत्वात् । इच्छया नाम्नः संबन्धाद् राज्ञेच्छतीत्यकर्मणो न स्यात् सापेक्षत्वात् । व्यवस्थितवास्मरणात् मान्ताव्ययाभ्यां न स्यात्—किमिच्छति, स्वरिच्छति ॥

## ४० । काम्य च ॥

नाम्न आत्मेच्छायामर्थे काम्यः परो भवति । चकारार्थश्च । एतच्चोत्तरार्थमेवानन्तरः काम्यो माभूदिति । पुत्रमिच्छति—पुत्रकाम्यति । इदं काम्यति । स्वः काम्यति ॥

## ४१ । उपमानादाचारे ॥

उपमानान्नाम्न आचारेऽभिधेये यिन् परो भवति । पुत्रमिवाचरति—पुत्रीयति माणवकम् । माणवकाद्विशेषे द्वितीया नोक्तार्थेति । आधारादपि स्याद् निरपेक्षत्वात् । कुट्यामिवाचरति—कुटीयति प्रासादे ॥

## ४२ । कर्त्तुरायिः सलोपश्च ॥ ८ ॥

कर्त्तुरुपमानान्नाम्न आचारेऽभिधेये आयिः परो भवति, सलोपश्च यथा सम्भवम् । श्येन इवाचरति—श्येनायते । एवं सारसायते । ओजायते, अप्सरायते, पयायते, पयस्यते, वाशब्दस्येष्टार्थत्वात् । आयेश्च लोपः—गर्दभ इवाचरति—गर्दभति, अश्वतीति मतम् । कथं गल्भते, क्लीबते, होडते ? एते आत्मनेपदिनः, प्रत्ययान्तत्वाद् धातव एव ॥

"ओजसोऽप्सरसो नित्यं पयसो तु विभाषया ।
आयिलोपश्च विज्ञेयो न चाश्वो गर्दभस्यपि ॥

तथा च्व्यर्थे भृशादेस्तसोर्लोपश्चेति । अभृशो भृशो भवति भृशायते, एवम् उन्मनायते, दुर्मनायते । वेहत्—वेहायते, शश्वत्—शश्वायते । वावचनाच्चिवरपि—भृशी भवति । अभृशो यो भृशो भवति स भृश इवाचरति । सादृश्यादभेदो वस्तुन इति मतम् । तन्नोपेक्षितमिति । तथा डाजन्तलोहितादिभ्यश् च्व्यर्थे पटपटायति, पटपटायते । लोहितायति, लोहितायते । यजादिषु पाठ इष्यते । कष्टाय कर्म्मणे क्रामति—कष्टायते । एवं पापायते, कक्षायते, सत्रायते, गहनायते । पापवृत्तिभ्योऽन्यत्र न भवति—कष्टाय तपसे क्रामति । रोमन्थं वर्त्तयति,—रोमन्थायते गौः हनुचलनएवेह न स्यात्—कीटो रोमन्थं वर्त्तयति । बाष्प मुद्वमति—बाष्पायते, एवमुष्मायते, फेनायते । सुखादीनि वेदयते—सुखं वेदयते—सुखायते: एवं दुःखायते । शब्दादीनि करोति—शब्दं करोति—शब्दायते, एवं वैरायते, कलहायते । नमस्तपोवरिवसस्तु यिन्—नमस्करोति—नमस्यति देवान्, एवं तपस्यति शत्रून्, वरिवस्यति गुरून् । चित्रङ् आश्चर्य्ये । आश्चर्य्यं चित्रं करोति—चित्रीयते । कण्ड्वादिभ्यो यण्—कण्डूञ्—कण्डूं करोति—कण्डूयति, कण्डूयते । महीङ्—महीयते, इत्यादयोऽप्यनुसर्त्तव्याः । एतत्सर्वं वाशब्देन बहुलार्थेन वा सिद्धम् ॥

## ४३ । इन् कारितं धात्वर्थे ॥

धात्वर्थः क्रिया नाम इन परो भवति धात्वर्थे, स च कारितसंज्ञकः । हलिं कलिं गृह्णाति—हलयति, कलयति । एवं कृतयति, वर्णयति, त्वचयति । तूस्तानि विहन्ति—वितूस्तयति । वस्त्रं समाच्छादयति—संवस्त्रयति । वर्म्मणा सन्नह्यति—संवर्म्मयति । चूर्णैरवध्वंसते—अवचूर्णयति । तत्करोति, तदाचष्टे—मुण्डं करोति—मुण्डयति । एवं मिश्रयति, श्लक्ष्णयति, लवणयति, सूत्रयति । पयो व्रतयति, पयो

भुङ्क्ते इति गम्यते। वृषलान्नं व्रतयति, न भुङ्क्ते इत्यर्थः। सत्यमाचष्टे-सत्यापयति। एवम् अर्थापयति, वेदापयति। प्रियमाचष्टे—प्रापयति, आबागमश्च। तेनातिक्रामति—हस्तिनातिक्रामति—अतिहस्तयति। कर्तृकरणार्थे—वीणयोपगायति—उपवीणयति। तूलैरवकुष्णाति—अवतूलयति। श्लोकैरुपस्तौति—उपश्लोकयति। सेनयाभियाति—अभिषेणयति। कदाचिद् दर्शने—रूपं पश्यति—निरूपयति। बहुलमेतन्निदर्शनम्॥ तथा, इनङ् अङ्गनिरसनेऽपि—हस्तौ निरस्यति—हस्तयते, पादौ निरस्यति—पादयते। एवं पुच्छमुत्क्षिपति—उत्पुच्छयते गौः। पुच्छं परिक्षिपति—परिपुच्छयते। एवं भाण्डानि समाचिनोति-सम्भाण्डयते वणिक्। चीवरं सम्मार्जयति परिदधाति वा—सञ्चीवरयते भिक्षुः। दिङ्मात्रमिदं, गणकारवचनादभ्यूह्यम्॥

## ४४। धातोश्च हेतौ॥

हेतुशब्देन हेतुकर्तृव्यापारोऽर्थाद्गम्यते। धात्वर्थं वर्तयन्नन्यो हेतुः। हेतुकर्तृव्यापारे वर्तमानाद्धातोरिन् परो भवति, स च कारितसंज्ञकः। कुर्वन्तं प्रयुङ्क्ते—कारयति। पचन्तं प्रयुङ्क्ते—पाचयति। तथा भिक्षां वासयति, कारीषोऽध्यापयति॥

तथा कथकः कंसं घातयति, सीतां हारयति, राजानमागमयति। तथा च किं गतेन हतः कंसं इति लोकविवक्षा। तथा रात्रिं विवासयति, विपूर्वो वसिरतिक्रमे। उज्जयन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति। तथा पुष्येण चन्द्रं योजयति॥

## ४५। चुरादेश्च॥

चुर् इत्येवमादिभ्य इन् परो भवति स्वार्थे स च कारितसंज्ञकः। चोरयति, चिन्तयति। कारितप्रदेशाः—"कारितस्यानामिड्विकरणे" इत्येवमादयः॥

## ४६। इनिलिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः॥

स्वराणां मध्ये योऽन्त्यस्वरादिस्तस्यावयवस्येति विग्रहः। न स्वरति न चलतीति प्रधानत्वादक्षरं स्वर उच्यते। इनि परे लिङ्गस्यानेकाक्षरस्य योऽवयवोऽन्त्यस्वरादिस्तस्य लोपो भवति। अतिहस्तयति, उपवीणयति। अनेकाक्षरस्येति किम्? वाचयति॥ "श्वेताश्वाश्वतरगालोडितह्वरकाणामश्वतरेतकलोपश्चेति" गणकारवचनादेव—श्वेताश्वमाचष्टे—श्वेतयति। अश्वतरमाचष्टे—अश्वयति। गालोडितमाचष्टे गालोडयति। ह्वरकमाचष्टे-ह्वरयति। "तद्वदिष्ठेमेयःसु बहुलम्"-पटिष्ठः, पटिमा, पटीयान्। "मन्तुवन्तुवीणां लुक्" चेतिगणे, ईशमन्तमाचष्टे—ईशयति। स्रुग्वन्तमाचष्टे—स्रुचयति। स्रग्विणमाचष्टे—स्रजयति॥

## ४७। रशब्द ऋतो लघोर्व्यञ्जनादेः॥

व्यञ्जनादेर्लिङ्गस्यानेकाक्षरस्य ऋतो लघो रशब्दादेशो भवति इनि परे। पृथु-प्रथयति, मृदु—म्रदयति, दृढ—द्रढयति, कृश—क्रशयति, भृश—भ्रशयति, परिवृढ—परिव्रढयति। एषामेवाभिधानम्॥

## ४८। धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे॥

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा। क्रियासमभिहारे वर्तमानाद्धातोर्व्यञ्जनादेर्यशब्दः परो भवति, स च चेक्रीयितसंज्ञकः। पुनःपुनः पचति—पापच्यते, भृशं ज्वलयति—जाज्वल्यते। पाकादीनां प्रधानक्रियायां पौनःपुन्यं, प्रधानक्रियोपकारकाणामधिश्रयणादीनां च भृशता, फलातिरेको वा। व्यवस्थितवाधिकारादेकस्वरात्, तेन पुनः पुनर्जागर्ति। ऋप्रभृतिभ्यश्च—अराय्र्यते, अटाट्यते। अश भोजने—अशाश्यते, प्रोर्णोनूयते, सोसूच्यते, मोमूत्र्यते। शुभिरुचिभ्यां न स्यात्—भृशं शोभते, भृशं रोचते। गत्यर्थात् कौटिल्य एव—भृशं पुनःपुनर्वा कुटिलं क्रामति—चंक्रम्यते। लुपादेर्गर्ह्यात्—भृशं पुनःपुनर्वा गर्हितं लुम्पति—लोलुप्यते, एवं सासद्यते, चञ्चूर्य्यते, जञ्जप्यते, जञ्जभ्यते, दन्दह्यते, दन्दश्यते, निजेगिल्यते॥

## ४९। गुपूधूपविच्छिपणिपनेराय:॥

गुपूप्रभृतिभ्य आयः परो भवति स्वार्थे । गोपायति । धूपायति, विच्छायति, पणायति, पनायते, पनिसहचरित इह पणिः स्तुत्यर्थ इत्यन्ये । ऋतेर्नीयङ् वक्तव्यः । ऋतीयते । ङकार आत्मनेपदार्थः, नकारोऽगुणार्थः । कमेरिनङ् कारितं च कामयते । व्यवस्थितवाधिकारादायादयोऽसार्वधातुके वा भवन्ति । गोपायिता, गोप्ता, गोपिता, गुप्तिः । ऋतीयिता, अर्त्तिता, कामयिता, कमिता ॥

## ५० । ते धातवः ॥

ते सनाद्यन्ता धातुसंज्ञा भवन्ति । जुगुप्सते, मीमांसते, चिकीर्षति, पुत्रीयति, पुत्रकाम्यति, श्येनायते, उपवीणयति, पापच्यते, गोपायति, ऋतीयते, कामयते । धातुत्वाद्धातुकार्य्यम्, अशुद्धक्रियत्वादुवचनम् । इतरेषां गणेऽप्रसिद्धत्वात्सुखार्थम् ॥

## ५१ । चकास्कास्प्रत्ययान्तेभ्य आम् परोक्षायाम् ॥

चकास् कास् प्रत्ययान्तेभ्य आम परो भवति परोक्षायाम् । चकासाञ्चकार, कासाञ्चक्रे, लोलूयाञ्चक्रे, चिकीर्षाञ्चकार । चकास् ग्रहणमनेकस्वरोपलक्षणम् । तेन—दरिद्राञ्चकार, चुलुम्पाञ्चकार । प्रत्ययान्तग्रहणमेकस्वरार्थमपीति मतम् । तेन—स्वमिवाचचार—स्वाञ्चकार ॥

## ५२ । दयायासश्च ॥

दय्, अय्, आस्, एभ्य आम् परो भवति परोक्षायां परभूतायाम् । दयाञ्चक्रे, पलायाञ्चक्रे, आसाञ्चक्रे ॥

## ५३ । नाम्यादेर्गुरुमतोऽनृच्छः ॥

नाम्यादेर्गुरुमतो धातोर्ऋच्छवर्जितादाम् परो भवति परोक्षायां परतः । ईहाञ्चक्रे, उञ्छाञ्चकार, उच्छाञ्चकार । कथमियेष, उवोष ? नायं धातुसंज्ञातो नित्यं गरुमान् । अनृच्छ इति किम् ? आनर्च्छ । व्यवस्थितवाधिकारात् प्रोर्णुनाव ॥

## ५४ । उषविदजागृभ्यो वा ॥

उषादिभ्य आम् परो भवति वा परोक्षायां परतः । जागर्त्तिना सहचरितो विदिरदादिः । उषाञ्चकार, उवोष, विदाञ्चकार, विवेद, जागराञ्चकार, जजागार ॥

## ५५ । भीह्रीभृहुवां तिवच्च ॥

एषां परोक्षायाम् आम् परो भवति वा, स च तिरिव, तेन द्वित्वमित्वं चेति । बिभयाञ्चकार, बिभाय, जिह्रयाञ्चकार, जिह्राय, बिभराञ्चकार, बभार, जुहवाञ्चकार, जुहाव ॥

## ५६ । आमः कृञनुप्रयुज्यते ॥

आमन्तस्य धातोः कृञ् अनुप्रयुज्यते परोक्षायाम् । ईहाञ्चक्रे, चकासाञ्चकार, प्रयुज्यत इति स्पष्टार्थम् । आमो मकारस्यानुस्वारो भवत्यन्तत्वात्, तद्वर्गपञ्चमो वा स्यात् ॥

## ५७ । अस्भुवौ च परस्मै ॥

आमन्तस्य धातोरस् भुवावनुप्रयुज्येते परोक्षायाम् । परस्मैपदे चातिदिश्यते । ईहामास, ईहाम्बभूव । चकासामास, चकासाम्बभूव । अन्वाचयशिष्टोऽयमादेशोऽर्थस्यान्तरतम्यात्, तेन—ईहामासे, ईहाम्बभूवे । कर्म्याऽऽत्मनेपदं, ईहां व्यतिबभूवे आत्मः । अस्तेर्भू न स्याद्विधानबलात् । प्रकृतेश्च श्रुतश्चकार आदेशेन सह सम्बध्यते । विद आम् कृञ् पञ्चम्यां वा—विदाङ्कुरोतु, विदाङ्करवाणि, वेत्तु, वेदानि ॥

## ५८ । सिज् अद्यतन्याम् ॥

अद्यतन्यां परभूतायां धातोः सिच् परो भवति । अनैषीत्, अचैषीत्, अपासीत् । व्यवस्थितवाधिकारात् स्पृशिमृशिकृषितृपिदृपिभ्यो वा—अस्प्राक्षीत्, अस्पृक्षत् । अम्राक्षीत्, अमृक्षत् । अकार्क्षीत्, अकृक्षत् । अताप्सीत्, अतृपत् । अद्राप्सीत्, अदृपत् । पक्षे शिडन्तात् सण् । पुष्यादित्वात् तृपिदृप्योरण् ॥

## ५९। सण् अनिटः शिडन्तान्नाम्युपधाददृशः॥

शिडन्तान्नाम्युपधादनिटो धातोर्दृशवर्जितात् सण् परो भवति, अद्यतन्यां परतः। अलिक्षत्, अक्रुक्षत्। अनिट इति किम्? अकोषीत्। कथम् अधुक्षत? गुहूरनिडेकपक्षे। शिडन्तादिति किम्? अभुक। नाम्युपधादिति किम्? अधाक्षीत्। अदृश इति किम्? अद्राक्षीत्॥

## ६०। श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् कर्त्तरि॥

श्रिद्रुस्रुकमिकारितान्तेभ्यश्चण् परो भवति कर्त्तर्यद्यतन्यां परतः। अशिश्रियत्, अदुद्रुवत्, असुस्रुवत्, अचकमत्, अचीकरत्, अपीपचत्, कर्त्तरीति किम्? समाश्रयिषातां राजानौ गृहे देवदत्तेन। श्विधेटोर्वा वक्तव्यः—अशिश्वियत्, अश्वयीत्, अदधत्, अधासीत्॥

## ६१। अण् असुवचिख्यातिलिपिसिचिह्वः॥

एभ्यो धातुभ्योऽण् भवति कर्त्तर्यद्यतन्यां परतः। अपास्थत्, अवोचत्, अख्यत्, अलिपत्, असिचत्, अह्वत्। व्यवस्थितवाधिकाराल्लिपादीनामात्मनेपदे वा—अलिपत, अलिप्त, असिचत, असिक्त, अह्वत, अह्वास्त। कर्त्तरीति किम्? अलिप्सातां कुड्ये देवदत्तेन। असुरित्युकारः अस् भुवि अस् दीप्तौ आभ्यां माभूदिति॥

## ६२ पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै॥

पुषादिद्युताद्यॢकारानुबन्धार्त्तिसर्त्तिशास्तिभ्योऽण् भवति अद्यतन्यां परस्मै पदे परतः। पुषादि गृधुअभिकाङ्क्षायां यावत्। अपुषत्, अगृधत्। द्युतादि—अद्युतत, अश्वितत्। ॡकारानुबन्धः—अगमत्, अघसत्। ऋ सृ गतौ—आरत्, असरत्। शासु अनुशिष्टौ—अशिषत्। परस्मा इति किम्? व्यद्योतिष्ट। द्युतादीनामात्मनेपदमप्यस्तीति।

इरनुबन्धाद्वा वक्तव्यम् । अरुधत्, अरौत्सीत् ।
जृस्तम्भुम्रुचुम्लुचुग्लुचां वा वक्तव्यम् । जृ—अजरत्, अजारीत् ।

श्वि—अश्वत्, अश्वयीत् । स्तन्भु सौत्रोऽयं धातुः—अस्तभत्, अस्तम्भीत्, अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । अग्लुचत्, अग्लोचीत् । एतेये गतावपि वर्त्तते ॥

## ६३ । इजात्मने पदेः प्रथमैकवचने ॥

पदेर्धातोरिच् परो भवति, कर्त्तर्यद्यतन्यामात्मनेपदे प्रथमैकवचने परतः । उदपादि, समपादि । इच् ते पदेरिति सिद्धे गुरुकरणं योगविभागार्थम् । तेन—दीपजनबुधपूरितायिप्यायिभ्यो वा—अदीपि, अदीपिष्ट । अजनि, अजनिष्ट । अबोधि, अबुद्ध । अपूरि, अपूरिष्ट । अतायि, अतायिष्ट । अप्यायि, अप्यायिष्ट ॥

## ६४ । भावकर्मणोश्च ॥

सर्वस्माद्धातोरिच् परो भवति भावकर्मणोर्विहिते अद्यतन्यामात्मनेपदे प्रथमैकवचने परतः । अस्थायि भवता । अकारि कटो भवता । व्यवस्थितवाधिकाराद् नानोस्तपः—अन्वतप्त ॥

## ६५ । सार्वधातुके यण् ॥

सर्वस्माद्धातोर्यण् परो भवति भावकर्मणोर्विहिते सार्वधातुके परे । शय्यते भवता । ग्रामो गम्यते भवता । "कृञः श च"—क्रिया । चकारात् तपेस्तपःकर्मकात् कर्त्तरि भवति—तप्यते तपस्तापसः, तपोऽर्जयतीत्यर्थः । इचादिरन्वार्थेऽनोस्तु न स्यात्—अनुतपते तपस्तापसः ॥

## ६६ । अन् विकरणः कर्त्तरि ॥

धातोरन् परो भवति स च विकरणसंज्ञकः कर्त्तरि विहिते सार्वधातुके परे । भवति, भवन् । विकरणप्रदेशाः—"अनि च विकरणे" इत्येवमादयः ॥

## ६७ । दिवादेर्यन् ॥

दिवादेर्गणाद् यन् विकरणसंज्ञकः परो भवति कर्त्तरि विहिते सार्वधातुके परे । दीव्यति, सीव्यति । भ्राशभ्लाशभ्रमुक्रमुत्रसित्रुटिलषियसिसंयसिभ्यश्च वा—भ्राश्यते, भ्राशते । भ्लाश्यते, भ्लाशते । भ्राम्यति, भ्रम्यति, भ्रमति । भौवादिकोऽपि भ्रमिरस्तीति । क्राम्यति, क्रामति, त्रस्यति, त्रसति । त्रुट्यति, त्रुटति । लष्यति, लषति । यस्यति, यसति । संयस्यति, संयसति ॥

## ६८ । नुः स्वादेः ॥

स्वादेर्गणाद् नु विकरणसंज्ञकः परो भवति कर्त्तरि विहिते सार्वधातुके परे । सुनोति, सुन्वन् । चिनोति, चिन्वन् । योगविभागादक्षेर्वा—अक्ष्णोति, अक्षति । तनूकरणे तक्षतेश्च—तक्ष्णोति, तक्षति । तनूकरण इति किम् ? सन्तक्षति—वाग्भिः शिष्यम्, निर्भर्त्सयतीत्यर्थः ।

## ६९ । श्रुवः शृ च ॥

श्रुवो धातोर्नु विकरणसंज्ञकः परो भवति आदेशश्च कर्त्तरि विहिते सार्वधातुके परे । शृणोति, शृण्वन् । उभयं विधेयं भौवादिकत्वात् । धिन्विकृण्व्योर्धि कृ चेति वक्तव्यम्—धिनोति, कृणोति ॥

## ७० स्वराद्रुधादेः परो नशब्दः ॥

रुधादेर्गणस्य स्वरात्परो नशब्दो भवति, स च विकरणसंज्ञकः कर्त्तरि विहिते सार्वधातुके परे । रुणद्धि, भिनत्ति । प्रकृतिप्रत्ययपरार्थाभिधानेनैव साहाय्यं कृतमित्यत्र स्यात् ॥

## ७१ । तनादेरुः ॥

तनादेर्गणाद् उ विकरणसंज्ञकः परो भवति कर्त्तरि विहिते सार्वधातुके परे । तनोति, सनोति ॥

## ७२ । ना क्र्यादेः ॥

क्र्यादेर्गणात् ना विकरणसंज्ञकः परो भवति कर्त्तरि विहिते सार्वधातुके परे । क्रीणाति, प्रीणाति ॥

स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्भ्यो नुश्चेति वा वक्तव्यम्—स्कुञ् क्र्या-
दिकः, शेषाः सौत्रा धातवः । स्तभ्नाति, स्तभ्नोति, स्तुभ्नाति, स्तुभ्नोति;
स्कभ्नाति, स्कभ्नोति, स्कुभ्नाति, स्कुभ्नोति; स्कुनाति, स्कुनोति ॥

## ७३ । आन व्यञ्जनान्ताद्धौ ॥

क्र्यादेर्गणाद्व्यञ्जनान्तादानो विकरणसंज्ञकः परो भवति हौ परे ।
पुषाण, बधान । व्यञ्जनादिति क्रीणीहि ॥

## ७४ । आत्मनेपदानि भावकर्मणोः ॥

धातोरात्मनेपदानि भवन्ति भावकर्म्मणोरर्थयोः । आस्यते भवता ।
शय्यते भवता । भावः—सत्ता, औत्सर्गिकमेकवचनमेवासंख्यत्वात् ।
कर्म्मणि च—क्रियते कटो देवदत्तेन । कथं मास आस्यते, क्रोशो गुड-
धानभिभूयते, ओदनपाकः शय्यते, नदी सुप्यते ? कालाध्वभावदेशानां
कर्म्मसंज्ञा सिद्धेति ॥

## ७५ । कर्मवत् कर्मकर्ता ॥

कर्म्मचासौ कर्त्ता चेति कर्म्मकर्त्ता कर्म्मवद्भवति ।

"क्रियमाणं तु यत्कर्म्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैः कर्त्तुः कर्म्मकर्त्तेति तद्विदुः ॥"

लूयते केदारः स्वयमेव, अभेदि कुशूलः स्वयमेव, कर्म्मवद्भावादात्मने-
पदम् । वत्करणं स्वाश्रयार्थम् । तेन—भावेऽपि पच्यते ओदनेन स्वय-
मेव । स्यादिस्वाच्च तव्यादिषु कर्म्मवद्भावः । कर्त्तव्यं कटेन स्वयमेव,
ईषत्करः कटेन स्वयमेव । कर्म्मकर्त्रोरत्यभेदाद् भेदे तु न स्यात्—भिद्य-
मानः कुशूलः पात्राणि भिनत्ति, तथा—अन्योऽन्यमाश्लिष्यतः ।
आत्मानं हन्त्यात्मेति, द्विविधो ह्यात्मा । तथा—पचत्योदनं, राध्यति
स्वयमेव धातुभेदात् । गच्छति ग्रामं असौ, स्वयमेव गम्यत इति न
स्यात्, क्रियाश्रयः कर्त्तैव केवलं कर्म्मेति भेदात् । उक्तार्थतापि कर्म्म-
कार्य्यम्, तेन न—द्वितीया, धात्वधिकाराच्च । कर्म्मकर्त्तेति किम् ?

साध्वसिश्छिनत्ति, साधु स्थाली पचति। कथम् ब्रूते कथा स्वयमेव, अचीकरत कटमसौ स्वयमेव? वचनं प्रेषणादि च कर्तृस्थमेव, आत्मनेपदं तु फलवद्विवक्षयेति मतम्। कार्य्यातिदेशोऽयम्॥

## ७६। कर्तरि रुचादिङनुबन्धेभ्यः॥

रुचादिभ्यो ङानुबन्धेभ्यश्च कर्तर्य्यभिधेये आत्मनेपदानि भवन्ति। रोचते, वर्धते शीङ्—शेते। चक्षिङ्—आचष्टे। रुच इत्यनुदात्तानुबन्धोपलक्षणम्। ऊर्द्ध्वमादत्त इत्युदात्तः, तद्विपरीतश्चानुदात्तः, उदात्तानुदात्तयोर्मिश्रश्च समाहारो लोकोपचारात्। तेन रुचप्रकारेभ्यो भवन्ति। आदिग्रहणाच्च—निविशते, परिक्रीणीते॥

७६। १। नेर्विश॥ ७६। २। परिव्यवेभ्यः क्रीञ्॥ ७६। ३। विपराभ्यां जिः॥ ७६। ४। आङो दाञ् अनात्मप्रसारणे॥ ७६। ५। गमिम् क्षान्तौ॥ ७६। ६। नु प्रच्छौ॥ ७६। ७। अनुपरिभ्यां च क्रीड्॥ ७६। ८। समोऽकूजने॥ ७६। ९। अपस्किर॥ ७६। १०। गत्युक्तयो हञ्॥ ७६। ११। आशिषि नाथ॥ ७६। १२। शपथे शप॥ ७६। १३। प्रतिज्ञानिर्णयप्रकाशनेषु स्थः॥ ७६। १४। समवप्रतिभ्यः॥ ७६। १५। उदोऽनूर्द्ध्वचेष्टायाम्॥ ७६। १६। उपान्मन्त्रेण॥ ७६। १७। पथ्याराधनयोश्च॥ ७६। १८। वा लिप्सायाम्॥ ७६। १९। अकर्मकश्च॥ ७६। २०। समो गमृच्छिप्रच्छिस्वृश्रुवेत्त्यर्त्तिदृशः॥ ७६। २१। उपसर्गादस्यत्यूहो वा॥ ७६। २२। आङो यमहनौ स्वाङ्गकर्मकौ च॥ ७६। २३। व्युद्भ्यां तपः॥ ७६। २४। तपः कर्मकः॥ ७६। २५। निसंव्युपेभ्यो ह्वः॥ ७६। २६। स्पर्द्धायामाङः॥ ७६। २७। सूचनावक्षेपणसेवनसाहसयत्नकथोपयोगेषु कृञ्॥ ७६। २८। अधेः शक्तौ॥ ७६। २९। वेः शब्दकर्मकः॥ ७६। ३०। अकर्मकश्च॥ ७६। ३१। पूजाचार्य्यभृत्युत्क्षेपणोपनयनज्ञानभृतिविगणनव्ययेषु नीञ्॥ ७६। ३२। कर्तृस्थामूर्त्तकर्मकश्च॥ ७६। ३३॥ वृत्तिसर्गतायनेषु क्रमः॥ ७६। ३४। परोपाभ्याम्॥ ७६। ३५। आङो ज्योतिरुद्गमे॥ ७६। ३६। वेः पादा·

ख्याम् ॥ ७६ । ३७ । प्रोपाभ्यामारम्भे ॥ ७६ । ३८ । अनुपसर्गो वा ॥ ७६ । ३९ । निह्नवे ज्ञः ॥ ७६ । ४० । अकर्म्मकश्च ॥ ७६ । ४१ । सम्प्रतिभ्यामस्मृतौ ॥ ७६ । ४२ । ज्ञानयत्नोपच्छन्दनेषु वदः ॥ ७६ । ४३ । अनोरकर्म्मकः ॥ ७६ । ४४ । विमतौ ॥ ७६ । ४५ । व्यक्तं सहोक्तौ ॥ ७६ । ४६ । तयोर्वा ॥ ७६ । ४७ । अवाद्गिरः ॥ ७६ । ४८ । समः प्रतिज्ञायाम् ॥ ७६ । ४९ । क्रियादिश्रन्थिसनन्ताः कर्म्मकर्त्तृस्थाः ॥ ७६ । ५० । दुहः ॥ ७६ । ५१ । अद्यतन्यां स्वरान्तश्च वा ॥ ७६ । ५२ । स्नु नमौ स्वयम् ॥ ७६ । ५३ । उदः सकर्म्मकश्चरः ॥ ७६ । ५४ । समस्तृतीयायुक्तः ॥ ७६ । ५५ । दाण् सा चेच्चतुर्थ्यर्थे ॥ ७६ । ५६ । उद्वाहे उपयम ॥ ७६ । ५७ । शदिरनि ॥ ७६ । ५८ । आशीरद्यतन्योश्च मृङ् ॥ ७६।५९। अशने भुजिः ॥ ७६ । ६० । समः क्ष्णुः ॥ ७६ । ६१ । स्वराद्यन्तादुपसर्गाद्यज्ञपात्रेषु युजिर् ॥ ७६ । ६२ । हेतुकर्त्तृभीस्म्योरिन् ॥ ७६ । ६३ । प्रलम्भने गृधिवञ्च्योः ॥ ७६ । ६४ । पूजाभिभवयोश्च लातेः ॥ ७६।६५। मिथ्यायोगेऽभ्यासे कृञ् ॥ ७६ । ६६ । अनियमे चागतिहिंसाशब्दार्थहसः ॥

## ७७ । चेक्रीयितान्तात् ॥

चेक्रीयितान्ताद्धातोः कर्त्तर्य्यात्मनेपदानि भवन्ति । पापच्यते, लोलूयते ॥

## ७८ । आय्यन्ताच्च ॥

आयिप्रत्ययान्ताच्च धातोः कर्त्तर्य्यात्मनेपदानि भवन्ति । हंसायते, पयायते, पयस्यते । अन्तग्रहणादायिलोपे न स्यादिति मतम् । तेन दरिद्रति, घटति ॥

## ७९ । इनूञ्यजादेरुभयम् ॥

इनन्ताद् ञनुबन्धाद्यजादेश्चोभयपदं भवति कर्त्तरि । कारयति, कारयते । सुनोति, सुनुते । यजति, यजते । पचति, पचते । समाहारानुबन्धा ये ते यजादयः । अफलवति कर्त्तर्य्यात्मनेपदं न दृश्यते ।

यथा—वृक्षं परिवारयन्ते कण्टकाः, शोषयते व्रीहीनातपः, तव दर्शनं किं न धत्ते, कमलवनोद्घाटनं कुर्व्वते ये, मायावक ब्रूते, मरीचीन्नित-नुते। फलवति कर्त्तरि परस्मैपदं च दृश्यते,—स्वं कटं कारयति, स्वमङ्गं कण्डूयति, स्वं यज्ञं यजति, स्वं पुत्रमपवदति, स्वमश्वं जानाति। अपशब्दान्तरयोत्येऽपि दृश्यते,—तनोति शुभ्रं गुणसम्पदा यश इति यजेरपि विवक्षया भवितव्यमेवेति मतम्। गणकारवचनप्रमाणार्थ-मिदम्॥

## ८० । पूर्ववत् सनन्तात् ॥

सनः पूर्व्वो यो धातुस्तद्वत् सनन्तादपि तत्पदं भवति। शरोचि-षते, अधिजिगांसते, पापचिषते, शिश्येनायिषते, पिपक्षति, षिपक्षते॥

"स्मृदृशी च सनन्तौ तु दचादौ श्रुरनाङ्प्रतिः।
अननुज्ञाश्च विज्ञेयो यथा सुस्मूर्षत इति॥"

## ८१ । शेषात् कर्त्तरि परस्मैपदम् ॥

येभ्य आत्मनेपदमुक्तं ततोऽन्यः शेषः। शेषाद्धातोः कर्त्तरि परस्मै-पदं भवति। भवति, अत्ति, जुहोति, दीव्यति, तुदति, रुणद्धि, विशति पुत्रीयति, पुत्रकाम्यति, गोपायति। पुनः कर्त्तरीति किम्? भिद्यते कुशूलः स्वयमेव, नायं शुद्धः कर्म्मेति। कथम् अनुकरोति, पराकरोतीति नित्यं वक्तव्यम्? प्रतिक्षिपति, अभिक्षिपति, अतिक्षिपति, परस्मैपदमेव। तथा च प्रवहति, परिमृष्यति, विरमति, आरमति, परिरमति, देव-दत्तमुपरमति, नात्मनेपदम्, यजादे दचादेश्च गणकृतस्यानित्यत्वात्॥

इति दौर्गसिंह्यां वृत्तावाख्याते द्वितीयः पादः समाप्तः॥

---

## ८२ । द्विर्वचनमनभ्यासस्यैकस्वरस्याद्यस्य ॥

धातोरवयवस्यानभ्यासस्यैकस्वरस्याद्यस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम्। पपाच, जुहोति। वचनग्रहणं द्वे रूपे भवत इति स्थानि-

त्वाशङ्कानिरासार्थम्, तेन—जिघांसति, आटिटत् दिति घत्वकारित-लोपप्रतिपत्तिगौरवं स्यात् । अनभ्यासस्येति किम्? जुगुप्सिषते, बोभू-यिषते,—प्रतिनिमित्तं द्विरुक्तिः स्यात् । एकस्वरस्येति बहुव्रीहिः किम्? व्यञ्जनेन सह द्विर्वचनार्थम्, तेन—दिद्रिद्रासति । कथम् इयाय, आर? एकस्यापि स्वरस्याद्यन्तवदुपचारात् । तथा आट, अनेनिजुः,—समुदायस्यापि द्विर्वचनमभ्यस्तकार्यं चेति । कथं वृक्षं वृक्षं परिषिञ्चति, ग्रामो ग्रामो रमणीयः, गृहे गृहेऽश्वाः? वीप्-सायां वर्त्तमानस्य पदस्य लोकत एव द्विरुक्तिः सिद्धा । तथा—परि परि त्रिगर्त्तेभ्यो वृष्टो देवः—परेर्वर्जने द्योत्ये विभाषैव । तथा—उपर्यु-परि ग्रामम्, अधोऽधो नगरम्, अध्यधि स्थापयति—उपर्य्यधोऽधीनां सामीप्य एव । तथा—एकैकं जुहोति,—आदेरेकस्य विभक्तेर्लुक् । तथा, हा प्रिया मे मतगना, नष्टनष्टा—सति सम्भवे पुंवद्भावोऽपि पीडायां गम्यमानायाम् । तथा—पटुपटुः, पटुपटौ, पण्डितपण्डितः, पण्डितपण्डिता, सादृश्ये गुणवचनस्यागुणवचनस्यापि । भीतभीतः, चकितचकितः । तथा प्रियप्रियेण ददाति, सुखसुखेन पश्यति, अप्राप्ति-विषय एव । तथान्येऽप्यनुसर्त्तव्याः । तथा—भीक्ष्ण्ये—पचति पचति-तराम्, पचति पचतितमाम्, गच्छति गच्छतितराम्, गच्छति गच्छति-तमाम्, तमादयः पश्चात् । तथा डाज्यव्यक्तानुकरणस्य च—पटपटा-करोति, पटपटायते ॥

## ८३ । स्वरादेर्द्वितीयस्य ॥

येन नाप्राप्तिन्यायेन पूर्वस्य बाधकोऽयम् । स्वरादेर्धातोर्द्वितीय-स्यावयवस्यैकस्वरस्यानभ्यासस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम् । आशिशत्, अटाट्यते, अरिरिषति । स्वरादेरिति किम्? पापच्यते । धातोरिति किम्? आटतुः । स्वरादेरिति कर्म्मधारयात्पञ्चम्या सिध्यति, द्वितीयग्रहणमिहोपलक्षणम्, तेन—शिष्टप्रयोगानुसारेण कण्ड्वादीनां तृतीयस्यापि—कण्डूयियिषति । ईर्ष्यतेर्यिशब्दस्य सनो वा द्विर्वचनम्—

ईर्ष्यितुमिच्छति—ईर्ष्यियिषति। सनोऽपि—ईर्ष्यिषिषति। नामधातोः- रादस्य द्वितीयस्य तृतीयस्य क्रमेण युगपद्वा—पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति, पुपुतित्रीयियिषति। कश्चिद् द्वितीयतृतीययो- रपि—अशिश्वीयिषति, अश्वीयियिषति॥

## ८४। न नवदराः संयोगादयोऽये॥

स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्याभ्यासस्य नवदराः संयोगादयो न द्विरुच्यन्ते, न तु ये परे। उन्दिदिषति, उड्डिजिषति, अड्डिडिषति, अर्चिचिषति। नामधातुष्वपि—इन्द्रीयितुमिच्छति, इन्दिद्रीयिषति। एवमन्येऽप्यनुसर्त्तव्याः। अय इति किम्? अरार्य्यते। अर्य्यमाख्यातवान्, आरर्य्यदित्यपि स्यात्। कथं प्रोर्णोनूयते? नायं ये परतः। स्वरादाद्याद् द्वितीयोऽवयवो वचनाद्गम्यते॥

## ८५। पूर्वोऽभ्यासः॥

धातोर्द्विरुक्तस्य यः पूर्वः सोऽभ्याससंज्ञो भवति। पपाच, देहि। अभ्यासप्रदेशाः—"अभ्यासस्यादिर्व्यञ्जनमवशेष्यम्" इत्येवमादयः॥

## ८६। द्वयमभ्यस्तम्॥

धातोरभ्यास इतरश्च द्वयमभ्यस्तसंज्ञं भवति। ददति, पेपचः। द्वयमिति किम्? परमात्रस्य माभूत्। अन्यथा जुहूषतीत्यत्राभ्यस्तस्य च इत्यभ्यासस्य सम्प्रसारणं न स्यात्। अभ्यस्तप्रदेशाः—"अभ्यस्तानामा- कारस्य" इत्येवमादयः॥

## ८७। जक्षादिश्च॥

जक्षादिरनभ्यस्तोऽप्यभ्यस्तसंज्ञो भवति। जक्षति, जाग्रति, दरिद्रति, चकासति, शासति। पञ्चैते भाषायां व्यवस्थिता इति॥

## ८८। चण्परोक्षाचेक्रीयितसनन्तेषु॥

चणाद्यन्तेषु द्विर्वचनं भवत्यधिकारवशात्। अपीपचत्, औन्दिदत्, पपाच, पापच्यते, प्रोर्णोनूयते, पिपक्षति, अटिटिषति। अत्वप्र-

इयं संभ्रेक्षीयितयोरपि द्विर्वचनार्थम् । तेनार्थत्, प्रतीषिषति, अटाट्यते ॥

## ८९ । जुहोत्यादीनां सार्वधातुके ॥

जुहोत्यादीनां सार्वधातुके परे द्विर्वचनं भवति । जुहोति, अजुहोत् जुहवानि, जजनानि, जजन्यात्, अजजन् । चिक्लिदचक्नसचराचरचलाचलपतापतवदावदघनाघनपाटुपटा वा इति नामभूताः संज्ञा रूढा । न च क्लिदेर्नाम्युपधत्वात् कः । क्लिशिचरिचलिपतिवदिहनिपाटयतिभ्यो नाच्प्रत्ययो द्विर्वचनं निपातनं चेति ॥

## ९० । अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् ॥

अभ्यासस्यादिर्व्यञ्जनमवशेष्यं रक्षणीयं भवति । अनादिर्लोपनीयमित्यर्थः । शिश्राय, जग्लौ, बंभ्रम्यते । व्यञ्जनग्रहणमनादिवर्णमात्रस्य लोपो माभूत् । कथम् आटतुः ? अभ्यासजातेरवगतं शेष्यम् । शेष्यशब्दो निवृत्तिप्रधानां स्थितिमाहेत्यन्ये ॥

## ९१ । शिट्परोऽघोषः ॥

शिटः परोऽघोषोऽवशेष्यो भवति, शिटो लोप इत्यर्थः । चुश्च्योत, तिष्ठेव, चस्कन्द । शिट्पर इति किम् ? पप्सौ । अनायपर्योऽयमारम्भः ॥

## ९२ । द्वितीयचतुर्थयोः प्रथमतृतीयौ ॥

अभ्यासद्वितीयचतुर्थयोः स्थाने प्रथमतृतीयौ भवतः यथासंख्यमान्तरतम्यात् । चखान, चिच्छेद, टिठकारयिषति, तस्थौ, जुघोष, पफाल, डुढौके, दध्यौ, बभार । कथम् ऊढमाख्यातवान् औजढत् ? असिद्धं बहिरङ्गमन्तरङ्ग इत्येके ॥

## ९३ । हो जः ॥

अभ्यासहकारस्य जकारो भवति । जघान, जुहोति ॥

## ९४ । कवर्गस्य चवर्गः ॥

अभ्यासकवर्गस्य चवर्गो भवति यथासंख्यम् । चकार, चखान, जगाम, जघास, जुगुहे ॥

## ९५ । न कवतेश्चेक्रीयिते ॥

कवतेरभ्यासस्य चवर्गो न भवति चेक्रीयिते परे । कोकूयते खरः । सविकरणनिर्देशात् कौतिकुवत्योर्माभूत्—चोकूयते ॥

## ९६ । ह्रस्वः ॥

स्वरान्तस्याभ्यासस्य ह्रस्वो भवति । तस्थौ, लुलूषति, डुढौके ॥

## ९७ । ऋवर्णस्याकारः ॥

अभ्यास ऋवर्णस्य अकारो भवति । ववृधे, चकृतुः ॥

## ९८ । दीर्घ इणः परोक्षायामगुणे ॥

इणो धातोरभ्यासस्य परोक्षायामगुणे दीर्घो भवति । ईयतुः, ईयुः । कृते द्विर्वचने इयो बाधकं यत्वमिति वचनम् । अगुण इति किम् ? इययिथ ॥

## ९९ । अस्यादेः सर्वत्र ॥

परोक्षायां सर्वत्र गुणिन्यगुणे चाभ्यासस्यादेरस्य दीर्घो भवति । आटिथ, आटतुः । अस्येति किम् ? इयेष, उवोष । आदेरिति किम् ? पपाच ॥

## १०० । तस्मान्नागमः परादिरन्तश्चेत्संयोगः ॥

तस्माद्दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति, धातोरन्तश्चेत् संयोगः स्यात् परोक्षायां परतः । आनर्च्छ, आनर्च्छतुः, आनर्च्छुः । आनञ्ज, आनञ्जतुः, आनञ्जुः । तस्मादिति किम् ? आञ्छ, आञ्छतुः, आञ्छुः । नायमकारलोपस्य बाधको दीर्घः । अन्तश्चेत् संयोग इति किम् ? आटतुः ॥

## १०१ । ऋकारे च ॥

तस्माद् दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति परोक्षाया-मृकारे च परतः । आनृधे, आनृधाते, आनृधिरे । कथम् आरधुः नि-मित्ताभावात् ॥

## १०२ । अश्नोतेश्च ॥

तस्मात् दीर्घीभूतादभ्यासादश्नोतेश्च परादिर्नकारागमो भवति परो-क्षायां परतः । व्यानशे, व्यानशाते, व्यानशिरे । सविकरणनिर्देशाद् अश्नातेर्न स्यात्—आशतुः ॥

## १०३ । भवतेरः ॥

भवतेरभ्यासस्य परोक्षायामकारो भवति । बभूव, बभूवतुः, बभूवुः ॥

## १०४ । निजिविजिविषां गुणः सार्वधातुके ॥

निज्यादीनाम् अभ्यासस्य सार्वधातुके गुणो भवति अर्थादिकारस्य । नेनेक्ति, नेनिज्यात् । वेवेक्ति, वेविज्यात् । अनेनेक्, अवेवेक् । वेवेष्टि, वेवेष्टु ॥

## १०५ । भृञ्हाङ्माङामित् ॥

भृञ् हाङ् माङामभ्यासस्य सार्वधातुके परे इद् भवति । बिभर्ति, बिभृयात् । जिहीते, अजिहीत । मिमीते, अमिमीत ॥

## १०६ । अर्त्तिपिपर्त्योश्च ॥

अनयोरभ्यासस्य इद् भवति सार्वधातुके परे । इयर्त्ति, इयृयात्, पिपर्त्ति, पिपृयात्, पृथग् योगो वैचित्र्यार्थः ॥

## १०७ । सन्यवर्णस्य ॥

सनि परे योऽभ्यासस्तस्यावर्णस्य इद् भवति । पिपक्षति, पिपासति । सन्यभ्यासस्येति किम् ? पापचिषते ॥

## १०८ । उवर्णस्य जान्तस्थापवर्गपरस्यावर्णे ॥

सनि परे योऽभ्यासस्तस्योवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे परे इद् भवति । जु इति सौत्रोऽयं धातुः—जिजावयिषति, यु—यियावयिषति, यियविषति । रु—रिरावयिषति, लूञ्—लिलावयिषति, पूञ्—पिपावयिषति । पूङ्स्तु—पिपविषते, भूञ्—बिभावयिषति । उवर्णस्येति किम् ? बोभविषति । वचनमिदं ज्ञापनार्थम्—इति यत्कृतं तत् सर्वं स्थानिवदिति, तेन—जुहावयिषतीत्यादयः सिद्धाः ॥

श्रुस्रुद्रुप्रुप्लुच्युकां वा वक्तव्यम्—शिश्रावयिषति, शुश्रावयिषति, सिस्रावयिषति, सुस्रावयिषति, दिद्रावयिषति, दुद्रावयिषति । पिप्रावयिषति, पुप्रावयिषति । पिप्लावयिषति, पुप्लावयिषति । चिच्यावयिषति, चुच्यावयिषति ॥

## १०९ । गुणश्चेक्रीयिते ॥

चेक्रीयिते योऽभ्यासस्तस्य गुणो भवति । चेचीयते, पोपूयते, बेभिदिता । वर्णान्तत्वाद् नामिन एव ॥

## ११० । दीर्घोऽनागमस्य ॥

चेक्रीयिते योऽभ्यासस्तस्यानागमस्य दीर्घो भवति । पापच्यते । अनागमस्येति किम् ? वनीवच्यते, वरीवृश्च्यते । अनागमस्येति वचनमभ्यासविकारेष्वपवादो नोत्सर्गं बाधत इति ज्ञापनार्थम्, तेन—मीमांसते ॥

## १११ । वन्चिस्रन्सिध्वन्सिभ्रन्सिकसिपतिपदिस्कन्दामन्तो नी ॥

एषां चेक्रीयते योऽभ्यासस्तस्यातोऽन्तो नीर्भवति । वनीवच्यते, सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते । दीर्घविधानाद् गुणो नाशङ्क्यते ॥

## ११२ । अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य ॥

अनुनासिकान्तस्य धातोश्चेक्रीयते परे योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति । बम्भण्यते, बम्भणिता । यंयम्यते, यंयमिता । तकार उच्चारणार्थः । प्रतिपदोक्तग्रहणात्—बाभाम्यते । पुनरन्तग्रहणमनुस्वारस्यापि स्थित्यर्थम् ॥

## ११३ । जपादीनां च ॥

जप इत्येवमादीनां चेक्रीयते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति । जञ्जप्यते, जञ्जपिता । जञ्जभ्यते, जञ्जभिता । जप, जभ, दह, दन्श, भन्ज, पश षडेते जपादयः ॥

## ११४ । चरफलोरुच्च परस्यास्य ॥

चरफलोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति, परस्यास्योश्च भवति । चञ्चूर्य्यते, चञ्चुरिता । पम्फुल्यते, पम्फुलिता ॥

## ११५ । ऋमतो रीः ॥

ऋमतो धातोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तो रीर्भवति । नरीनृत्यते, परीपृच्छ्यते ॥

## ११६ । अलोपे समानस्य सन्वल्लघुनीनि चण् परे ॥

समानसंज्ञकस्यालोपे सति लघुनि धात्वक्षरेऽभ्यासस्य इनि चण् परे सन्वत्कार्यं भवति । अपीपचत्, अलीलवत्, अशिश्रवत् । अलोपे समानस्येति किम्? अचकथत् । कथं पटुमाख्यातवान् अपीपटत्, वृद्धौ समानस्वरलोपः । लघुनीति किम्? अततक्षत् । कथम् अजीजागरत्? अनेकवर्णव्यवधानेऽपि लघुनि स्यादेवेति मतम्, अत् स्वरादीनां च इति वचनात् । इनीति किम्? तचकमत् । इनीति जातिनिर्देशात् वादितवन्तं प्रयोजितवान्—अवीवदद् वीणां परिवादकेनेति इनिनो लोपेऽपि स्यात् । चण् पर इति किम्? दिरमयिषति, दीर्घो लघोर्मामूल ॥

## ११७ । दीर्घो लघोः ॥

समानसंज्ञकस्याल्लोपे सति लघ्वन्तस्याभ्यासस्य लघुनि धात्वक्षरे इनि चण्परे दीर्घो भवति । अपीपचत्, अजूहवत् । लघोरिति किम्? अतित्रपत् ॥

## ११८ । अत् त्वरादीनां च ॥

त्वरादीनामभ्यासस्य लघुनि धात्वक्षरे इनि चण्परेऽद् भवति । अतत्वरत्, असस्मरत् । त्वर, स्मृ, दृ, प्रथ, म्रद, स्तृ, स्पशे, वा वेष्टि, चेष्टी इति गणः ॥

## ११९ । इतो लोपोऽभ्यासस्य ॥

इतः सूत्रादारभ्याभ्यासस्य लोपो भवत्यधिकृतं वेदितव्यम् । तेन पूर्वोक्ते सन्वद्भावे सत्ययं न स्यात् । अमीमपत्, अदीदपत् । पुनरभ्यासग्रहणं समस्तलोपार्थम् ॥

## १२० । सनि मिमीमादारभलभशकपतपदामिस्स्वरस्य ॥

मिमादीनां स्वरस्य सनि परे इसादेशो भवति अभ्यासलोपश्च । डुमिञ्—मित्सति । मीञ् मीङ् वा—प्रमित्सति, प्रमित्सते । मा इति मेङ्माङोरपि ग्रहणम् । प्रमित्सते, उपमित्सते । दासंज्ञकः—दित्सति, धित्सति । रभ—आरिप्सते । लभ—आलिप्सते । शक्ल शक—शिक्षति । पत्लृ पित्सति । पद पित्सते । कथं पिपतिषति ? सनीति द्विसकारोऽयं निर्देशो व्यक्तिर्वेति ।
प्रतिरित्सतीति वक्तव्यम् । प्रतिपूर्वो राधो हिंसायामिति ॥

## १२१ । आप्नोतेरीः ॥

आप्नोतेः स्वरस्य ईर्भवति सनि परेऽभ्यासलोपश्च । ईप्सति । ऋधिज्ञप्योरीरीतौ वक्तव्यौ सनि सकारादौ । ईर्त्सति, ज्ञीप्सति ॥

## १२२ । दन्भेरिच ॥

दन्भेः स्वरस्य इत् भवति चकारादीच सनि सकारादौ अभ्यासलोपश्च । धिप्सति, धीप्सति । मुचोऽकर्म्मकस्यौत्वं वक्तव्यः—मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव—आनुकूल्यात् कर्म्मकर्तृत्वम् ॥

## १२३ । दिगि दयतेः परोक्षायाम् ॥

देङः परोक्षायां दिग्यादेशो भवति अभ्यासलोपश्च । तिपा धातुरेव निर्दिश्यते । दिग्ये, दिग्याते, दिग्यिरे । दय दान इत्यस्यामाव्यवधानात् दयाञ्चक्रे ॥

इति दौर्गसिंह्यां वृत्तावाख्याते तृतीयः पादः समाप्तः ॥

---

## १२४ । सपरस्वरायाः सम्प्रसारणमन्तः स्थायाः ॥

सह परेण धातुस्वरेणान्तःस्थायाः सम्प्रसारणं भवत्यधिकृतं वेदितव्यम् । परेणैव सस्वरत्वं लोकतः सिद्धम्, परग्रहणं स्पष्टार्थम् । सम्प्रसारणं य्वृतोऽन्तःस्थानिमित्ता नित्यत्वेन स्थिता प्रत्याख्यायते । अन्तःस्थाग्रहणमभ्यासविकारबाधनार्थम्, तेन—विव्यथे, विव्याधे इत्यादीनां यस्याभ्यासे सम्प्रसारणं सिद्धम् ॥

## १२५ । ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे ॥

ग्रहादीनाम् अन्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति अगुणे प्रत्यये परे । गृह्यते, गृह्णाति । जीयते, जिनाति । ऊयतुः, ऊयुः । "न वाश्व्योरगुणे च" इति प्रतिषेधबाधनार्थं वेञो वयिरुच्यते । विध्यते, विध्यति, ऊष्ट, उशन्ति, विच्यते । विचति—कुटादित्वात्, गुणाभावम् । कथम् उरुव्यचाः, असुन् औणादिकत्वात् । पृच्छ्यते,

पृच्छति । कथं प्रश्नः ? "प्रश्नाख्यानयोः" इति वचनात् । वृश्च्यते वृश्चति, भृज्ज्यते, भृज्जति । अगुण इति किम् ? ग्रहीता ॥

## १२६ । स्वपिवचियजादीनां यण्परोक्षाशीःषु ॥

स्वपिवच्योर्यजादीनामन्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति यणि परोक्षायामाशिषि चागुणे परतः । सुप्यते, सुषुपतुः, सुप्यात् । उच्यते, ऊचतुः, उच्यात् । इज्यते । ईजतुः, इज्यात् ॥

"यजो वपो वहश्चैव वेञ् व्येञौ ह्वयतिस्तथा ।
वद्वसौ श्वयतिश्चैव नव यजादयः स्मृताः ॥

## १२७ । परोक्षायामभ्यासस्योभयेषाम् ॥

उभयेषां ग्रहादिस्वपादीनामभ्यासस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति परोक्षायां परतः । गुणपर्थोऽयम् । जग्राह, जग्रहिथ, जिज्यौ, जिज्यिथ, उवाय, उवयिथ । स्वपादीनां च—सुष्वाप, सुष्वपिथ, उवाच, उवचिथ, इयाज, इयजिथ । परोक्षायामिति किम् ? विवक्षति, वावच्यते ॥

## १२८ । व्यथेश्च ॥

व्यथेरभ्यासस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति परोक्षायां परतः । विव्यथे, विव्यथाते, विव्यथिरे । परोक्षायामिति किम् ? वाव्यथ्यते ॥

## १२९ । न वाश्व्योरगुणे च ॥

वेञ् श्वि इत्येतयोरभ्यासस्यान्तः स्थायाः सपरस्वरायाः सम्प्रसारणं न भवति, परोक्षायाम् अगुणे गुणिनि च । ववौ, वविथ, ववतुः, ववुः । शिश्वाय, शिश्वयिथ, शिश्वियतुः, शिश्वियुः । अगुण इति वचनाद् वेञोऽनभ्यासोऽपि गृह्यते । "श्वयतेर्वा" इति परस्य विभाषात्वेव ॥

## १३० । स्वपिस्यमिव्येञां चेक्रीयिते ॥

स्वपिस्यमिव्येञामप्राप्तं सम्प्रसारणं भवति चेक्रीयिते परे । सोषु-प्यते, सेसिम्यते, वेवीयते ॥

## १३१ । स्वापेश्चणि ॥

स्वापेरिनन्तस्य चणि परतः सम्प्रसारणं भवति । असूषुपत् । स्वापे-रिनन्तस्येति किम् ? स्वापमकरोत्—असुषुपत् ॥

## १३२ । ग्रहिस्वपिप्रच्छां सनि ॥

एषां सनि परे सम्प्रसारणं भवति । जिघृक्षति, सुषुप्सति, पिपृ-च्छिषति ॥

## १३३ । चायः किश्चेक्रीयिते ॥

चायश्चेक्रीयिते परे किर्भवति । चेकीयते ॥

## १३४ । प्यायः पिः परोक्षायाम् ॥

प्यायश्चेक्रीयिते परे परोक्षायां च पिर्भवति । पेपीयते, आपिप्ये, आपिप्याते, आपिप्यिरे ॥

## १३५ । श्वयतेर्वा ॥

श्वयतेश्चेक्रीयिते परे परोक्षायां च सम्प्रसारणं भवति वा । शोशू-यते, शेश्वीयते. शुशाव शुशुवतुः, शिश्वाय, शिश्वियतुः ॥

## १३६ । कारिते च संश्चणोः ॥

श्वयतेः संश्चणोर्यत् कारितं तस्मिन् सम्प्रसारणं भवति वा । शुशावयिषति, शिश्वाययिषति, अशूशवत्, अशिश्वयत् । इति कृतस्य स्थानिवद्भावाच्छुद्धिर्वचनम् ॥

## १३७ । ह्वयतेर्नित्यम् ॥

ह्वयतेः संश्चणोर्यत् कारितं तस्मिन् नित्यं सम्प्रसारणं भवति । जुहावयिषते, अजूहवत् । द्विर्वचननिमित्ते कारिते व्यवधान एव यथा

स्यादिति वचनम्, ह्वायकयितुमिच्छति—जिह्वायकयिषति, अजुह्वायकत् इति ॥

## १३८। अभ्यस्तस्य च ॥

ह्वयतेरभ्यस्तमात्रस्यान्तःस्थायाः परस्वरायाः सम्प्रसारणं भवति। जुहाव, जोहूयते, जुहूषति ॥

## १३९। द्युतिस्वाप्योरभ्यासस्य ॥

द्युतिस्वाप्योरभ्यासस्य सम्प्रसारणं भवति। दिद्युते, विद्युत्यते, दिद्योतिषते, अदिद्युतत्, सुष्वापयिषति। स्वापेरिनन्तस्य ग्रहणाद् न यङादौ, तेन सिष्वापयिषति ॥

## १४०। न सम्प्रसारणे ॥

सम्प्रसारणे कृते पुनः सम्प्रसारणं न भवति। विध्यते, वेविध्यते, विव्यथे, विविधतुः विविधुः। संविव्यतुः, संविव्युः। एकदेशविकृतस्यानन्यवद्भावाद् व्यकौ जातो च वचनम् ॥

## १४१। वशेश्चेक्रीयिते ॥

वशेश्चेक्रीयिते परे सम्प्रसारणं न भवति। वावश्यते ॥

## १४२। प्रच्छादीनां परोक्षायाम् ॥

प्रच्छिव्रश्चिभ्रस्जीनां परोक्षायां सम्प्रसारणं न भवति। पप्रच्छतुः, पप्रच्छुः। वव्रश्चतुः, वव्रश्चुः। बभ्रज्जतुः, बभ्रज्जुः ॥

## १४३। सन्ध्यक्षरान्तानामाकारोऽविकरणे ॥

सन्ध्यक्षरान्तानां धातूनामविकरणविषये आकारो भवति। धेट्—धाता, ग्लै—ग्लाता, म्लै—म्लाता, दो—दाता। सुग्लः, सुम्लः—उपसर्गे त्वातो डः स्यात्। अन्तग्रहणं धातुसंज्ञाकाले सन्ध्यक्षरार्थम्, तेन—चेता, स्तोता। अविकरण इति किम्? ग्लायति, म्लायति ॥

## १४४। न व्ययतेः परोक्षायाम् ॥

व्ये ओ धातोः परोक्षायामाकारो न भवति । संविव्याय, संविव्यिय । अगुणे सम्प्रसारणमस्त्येव ॥

## १४५ । मीनातिमिनोतिदीङां गुणवृद्धिस्थाने ॥

एषां गुणवृद्ध्योः प्रसङ्गे आकारो भवति । मीञ्—प्रमाता, प्रमापयति । डुमिञ्—निमाता, निमापयति । दीङ्—उपदाता, उपदापयति । उपदायो वर्त्तते, "इङाभ्यां चेति" घञ् स्यात् । गुणवृद्धिस्थान इति किम् ? प्रमीयते । वर्णान्तविधित्वादभ्यासस्य न स्यात्—प्रमेमीयते ॥

## १४६ । सनि दीङः ॥

दीङः सन्याकारो भवति । उपदिदासते । नाम्यन्तानामनिटाम् इत्यगुणत्वाद् वचनम् ॥

## १४७ । स्मिजिक्रीङामिनि ॥

एषामिनि परे आकारो भवति । विस्मापयते, जापयति, क्रापयति, अध्यापयति । हेतुकर्तृभये स्मिङोऽभिधानात् कुञ्चिकयैनं विस्माययति—करणाद् भये न स्यात् । भातिरिनन्तो हेतुभयेऽपि वर्त्तते—मुण्डो भापयते । भीषिचिन्ति इति वचनाद् भियः षान्तता, मुण्डो भीषयते । विस्फुरणं विस्फारः तं करोतीतीन्—विस्फारयति, विस्फोरयति—हेतुविवक्षायाम् इन् । चप सान्त्वने, चयनेऽपि वृत्तिः—चापयति । चिनस्तु चाययति । डुवपि प्रजनेऽपि—पुरोवातो गाः प्रवापयति, वी प्रजने—प्रवाययति,—गर्भं ग्राहयतीत्यर्थः । तपः साधयति, धर्मं साधयतीति—पारलौकिकेऽपि साधिना भवितव्यमेव । सिधु गत्यामित्यनेन च—अश्वं सेधयति, ग्रामं सेधयतीति भवितव्यमेव । सिध्यतिनापि—तपस्तापसं सेधयति । कस्त्वामुल्लापयते, श्येनो वर्त्तिकामुल्लापयते—लातेरेवायं प्रयोगः, विसंवादाभिभवयोर्लियः कारिते प्रयोगो नास्त्यनभिधानात्, दयादिरयम् । विलाता, विलेता, विलास्यते, विलेष्यते, विलाय, विलीय, लातेर्लियश्च प्रयोगोऽनेकार्थत्वाद्धातूनामिति ॥

## १४८। सृजिदृशोरागमोकारः स्वरात्परो धुटि गुणवृद्धिस्थाने॥

सृजिदृशोः स्वरात्परो धुडादौ प्रत्यये गुणवृद्धिस्थानेऽकारागमो भवति। स्रष्टा, अस्राक्षीत्। द्रष्टा, अद्राक्षीत्। धुटीति किम्? ससर्ज, ददर्श। गुणवृद्धिस्थान इति किम्? सृष्टीष्ट, दृक्षीष्ट।

योगविभागात् स्पृशादीनां वा—स्पृश—स्प्रष्टा, अस्प्राक्षीत्। मृश—म्रष्टा, अम्राक्षीत्। कृष—क्रष्टा, अक्राक्षीत्। तृप, त्रप्ता, अत्राप्सीत्। दृप—द्रप्ता, अद्राप्सीत् पक्षे स्पर्ष्टा, अस्पार्क्षीदित्यादि॥

## १४९। दीङोऽन्तो यकारः स्वरादावगुणे॥

दीङोऽन्तो यकारो भवति स्वरादावगुणे प्रत्यये परे। उपदिदीये, उपदिदीयाते, उपदिदीयिरे। दीङोऽवयवत्वेन द्विर्वचनं स्याद् आत्वं च न स्यात्॥

## १५०। आलोपोऽसार्वधातुके॥

धातोराकारस्य लोपो भवति असार्वधातुकेस्वरादावगुणे प्रत्यये परे। पपुः, तस्थुः, गोदः, संस्था। असार्वधातुक इति किम्? यान्ति। स्वरादाविति किम्? ग्लायते। अगुण इति किम्? दानम्॥

## १५१। इटि च॥

धातोराकारस्य लोपो भवति इटि परे। पपिथ, ददिथ। इटीति किम्? पपाथ। गुर्वर्थमिदम्॥

## १५२। दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ॥

दासंज्ञकमागायतिपिबतिस्थास्यतिजहातीनामन्त ईकारो भवति व्यञ्जनादावगुणे प्रत्यये परे। दीयते, धीयते, मीयते, गीयते। गायतीति निर्देशाद् गाङ गताविस्यस्य गायत इति भवितव्यमेव।

पीयते । पातेस्तु पायते । स्थीयते, प्रवसीयते । स्यतीति निर्देशात्—सायते, सासायते, सनोतेर्ये वात्वम् । हीयते । हाङस्तु—हायते ॥

## १५३ । आशिष्येकारः ।

दामादीनामाशिष्यगुणे व्यञ्जनादौ परत एकारो भवति । देयात्, धेयात्, मेयात्, गेयात्, पेयात्, स्थेयात्, अवसेयात्, हेयात् । अगुण इति किम् ? दासीष्ट, मासीष्ट । वा संयोगादेरस्य इति वक्तव्यम्—ग्लेयात् ग्लायात् । म्लेयात्, म्लायात् । अस्य इति किम् ? स्थेयात् ॥

## १५४ । अन उस् सिजभ्यस्तविदादिभ्योऽभुवः ॥

सिजभ्यस्तविदादिभ्यो भूवर्जितेभ्यः परस्यान उस् आदेशो भवति । सिच्—अकार्षुः, उदगुः । अदुः । परस्य न लुग्लोप इति । अभ्यस्ते—अददुः, अजुहवुः, अनेनिजुः । विदादि—विद ज्ञाने आदन्त द्विष,—अविदुः, अदुः, अलुः, अद्विषुः । गणकृतमनित्यमिति वा स्यात् द्रास्त्यन एवार्थात्—अविदन्, अरान्, अलान्, अद्विषन् । अभुव इति किम् ? अभूवन् ॥

## १५५ । इचस्तलोपः ॥

इचस्तप्रत्ययस्य सर्वस्य लोपो भवति । अपादि, अलावि । इच इति किम् ? अकारितराम् ॥

## १५६ । हेरकारादहन्तेः ॥

धातोर्विहितस्य हेरकारात्परस्य लोपो भवति अहन्तेः । पच, पठ, भव, दीव्य । हेर्व्यक्तित्वात्—पचतात् । अकारादिति किम् ? याहि । अहन्तेरिति किम् ? जहि शत्रून्, संनिपातलक्षणस्य वर्णग्रहणे निमित्तत्वात् ॥

## १५७ । नोश्च विकरणादसंयोगात् ॥

नोश्च विकरणादसंयोगात्परस्य हेर्लोपो भवति । चिनु, सुनु । विकरणादिति किम् ? नुहि । असंयोगादिति किम् ? राप्नुहि ॥

## १५८ । उकाराच्च ॥

उकाराच्च विकरणात्परस्य हेर्लोपो भवति । तनु, कुरु, । विकरणादिति किम् ? जुहि ॥

## १५९ । उकारलोपो वमोर्वा ॥

असंयोगस्य विकरणस्योकारस्य लोपो भवति वा वमोः परतः । सुन्वः, सुन्मः, सुनुवः, सुनुमः । तन्वः, तन्मः, ।

तनुवः, तनुमः, आद्यन्तवद्भावात् । सुनोमि, तनोमीति परत्वात् स्वरादेशत्वाद्वा सिद्धम् ॥

## १६० । करोतेर्नित्यम् ॥

कृञः परस्य विकरणोकारस्य नित्यं लोपो भवति वमोः परतः । कुर्वः, कुर्म्मः ॥

## १६१ । ये च ॥

करोतेर्नित्यं विकरणोकारस्य लोपो भवति ये प्रत्यये परे । कुर्य्यात्, कुर्य्याताम्, कुर्य्युः ॥

## १६२ । अस्योकारः सार्वधातुकेऽगुणे ॥

करोतेरकारस्यागुणे सार्वधातुके परे उकारो भवति । कुरुतः, कुर्वन्ति । कथम् कुरु ? प्रत्ययलोपलक्षणात् । गुणो नेव स्वरूपनिर्देशात् सार्वधातुक इति किम् ? सञ्चस्करुः । अगुण इति किम् ? करोमि ॥

## १६३ । रुधादेर्विकरणान्तस्य लोपः ॥

रुधादेर्यो विकरणस्तस्यान्तावयवस्य लोपो भवति अगुणे सार्वधातुके परे । रुन्धः, रुन्धन्ति । भिन्तः, भिन्दन्ति । अगुण इति किम् ? रुणद्धि ॥

## १६४ । अस्तेरादेः ॥

अस्तेरादेरकारस्यागुणे सार्वधातुके परे लोपो भवति । स्तः, सन्ति । अगुण इति किम् ? अस्ति ।

## १६५ । अभ्यस्तानामाकारस्य ॥

अभ्यस्तसंज्ञकानामाकारस्य लोपो भवति अगुणे सार्वधातुके परे । मिमते, मिमताम् । जिहते, जिहताम् । दत्ते, धत्ते । अगुण इति किम् ? जहाति ।

## १६६ । क्र्यादीनां विकरणस्य ॥

क्र्यादीनां धातूनामगुणे सार्वधातुके विकरणाकारस्य लोपो भवति । क्रीणते, क्रीणन्ति, प्रीणते, प्रीणन्ति । कथं स्तभ्नन्तीत्यु पलक्षणत्वात् । क्र्यादीनामिति किम् ? दीव्यामः, सीव्यामः । विकरणस्येति सुखप्रतिपत्त्यर्थम् । अगुण इति किम् ? क्रीणाति ॥

## १६७ । उभयेषामीकारो व्यञ्जनादावदः ॥

द्व्यपेक्षयोभयशब्दो व्यक्त्यपेक्षया बहुवचनम् । उभयेषामभ्यस्त-क्र्यादिविकरणानां दावर्जितानामाकारस्य व्यञ्जनादावगुणे सार्वधातुके ईकारो भवति । मिमीते, जिहीते, लुनीते, पुनीते । व्यञ्जनादाविति किम् ? मिमते, क्रीणते । अगुण इति किम् ? जहाति, क्रीणाति । सार्वधातुक इति किम् ? लालायते । अद इति किम् ? दत्से, धत्से ॥

## १६८ । इकारो दरिद्रातेः ॥

दरिद्रातेराकारस्यागुणे सार्वधातुके व्यञ्जनादाविकारो भवति । दरिद्रितः, दरिद्रिथः । अगुण इति किम् ? दरिद्राति । सार्वधातुक इति किम् ? दरिद्राणम्, दरिद्रायकः, दिदरिद्रासति ॥

भियो वेति वक्तव्यम्—बिभितः, बिभीतः ॥

## १६९ । लोपः सप्तम्यां जहातेः

जहातेरन्तस्य सप्तम्यामगुणे लोपो भवति । जह्यात्, जह्याताम् ।

व्यञ्जनादावगुणे सार्वधातुके इत्वं वा वक्तव्यम्—जहितः, जहीतः । हौ चात्वमित्वमीत्वं वेष्टम्—जहाहि, जहिहि, जहीहि ॥

## १७० । धुटि हन्तेः सार्वधातुके ॥

हन्तेर्धुडादौ सार्वधातुकेऽगुणेऽन्तस्य नकारस्य लोपो भवति । हतः, हथः, आहते, आहताम् । धुटीति किम् ? हन्वः, हन्मः । अगुण इति किम् ? हन्ति । प्रतिषिद्धेटां मध्ये हन्तेरेव सार्वधातुके सम्भव-दर्शनार्थमिदम् ॥

## १७१ । शासेरिदुपधाया अण्व्यञ्जनयोः ॥

शासेरुपधाया इद् भवति । अणि व्यञ्जनादावगुणे । अन्व शिषत्, शिष्यते, शिष्टः । कथं मित्रं शास्तीति मित्रशीः ? विलोपात् स्वरादेशो विधिर्बलवान् । अथवा सहचरितः शासुरिह गृह्यते—आशास्ते, आशा-स्यमानः । कथम् आशीः ? ज्ञापकात् ॥

## १७२ । हन्तेर्ज हौ ॥

हन्तेर्जकारो भवति हौ परे । जहि शत्रून् । हेर्व्यक्तित्वाद्—हतात् । परत्वात्तातन् ॥

## १७३ । दास्त्योरेभ्यासलोपश्च ॥

दासंज्ञकस्यास्तेश्च हौ परेऽन्तस्यैत्वं भवति, अभ्यासलोपश्च यथा-सम्भवम् । देहि, धेहि, अस्—एधि । अलोपश्चेति सिद्धेऽभ्यासग्रहणं समस्तलोपार्थम् ॥

## १७४ । अस्यैकव्यञ्जनमध्येऽनादेशादेः परोक्षायाम् ॥

अगुणे परोक्षायां परतोऽनादेशादेर्धातोरस्यैकव्यञ्जनमध्यगतस्यैत्वं भवति, अभ्यासलोपश्च । पेचतुः, नेमतुः । सेहे ।

अकाराधिकाराद् क्वचिद् दीर्घोऽपि गृह्यते—राधो हिंसायाम्—अपरे-धतुः । हिंसायामित्येव, आरराधतुः ।

राजिभ्राजिभ्राशिभ्लाशीनां वा वक्तव्यम्—रेजतुः । रराजतुरित्यादि । अन्यत्र न भवति—चकाशे । थलि च सेट्यप्येवम्—रेजिथ, रराजिथ ।

असहायव्यञ्जनमध्यगतस्येति किम् ? ततस्तुः । अनादेशादेरिति किम् ? बभणतुः । अगुण इति किम् ? अहं पपच ॥

## १७५ । थलि च सेटि ॥

थलि च सेटि परतोऽनादेशादेर्धातोरस्यैकव्यञ्जनमध्यगतस्यैत्वं भवति, अभ्यासलोपश्च । पेचिथ, नेमिथ । सेटीति किम् ? पपक्थ । अनादेशादेरिति किम् ? बभणिथ । एकव्यञ्जनमध्यगतस्येति किम् ? विशर्यिथ ॥

## १७६ । तॄफलभजत्रपश्रन्थिग्रन्थिदम्भीनां च ॥

तॄप्रभृतीनामत एत्वं भवति, अभ्यासलोपश्च, परोक्षायामगुणे थलि च सेटि परतः । गुणयादेशादिसहायव्यञ्जनत्वाद् वचनम् । तेरतुः, तेरिथ । फेलतुः, फेलिथ । भेजतुः, भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे । श्रेथतुः, ग्रेथतुः । देभतुः । अनुषङ्गलोपिनां मध्ये दम्भेरेवेति नियमात्—ममन्थतुः । निरनुषङ्गैः साहचर्यात्—शश्रन्थिथ, जग्रन्थिथ, ददम्भिथ इत्यनुषङ्गिणां न स्यात् । अगुण इति किम् ? अहं ततर ।

जभ्रमुवमित्वनफणस्यमां वा वक्तव्यम्—जेरतुः, जजरतुः, जेरिथ, जजरिथेत्यादि ॥

## १७७ । न शसददवादिगुणिनाम् ।

शसेर्ददेर्वकारादीनां गुणिनां च धातूनामेत्वमभ्यासलोपश्च न भवति अगुणे परोक्षायां थलि च सेटि परतः । विशशसतुः, विशशसिथ, ददते, ददाते, ववसतुः, ववसिथ, विशशरतुः, विशशरिथ, निनयिथ ॥

## १७८ । स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ ॥

स्वरादावगुणे प्रत्यये परे धातोरिवर्णोवर्णान्तस्य इयुवौ भवतः, निर्दिष्टस्य स्थानानि यथासंख्यं स्यात् । शिश्रियतुः, चिक्रियतुः, लुलु-वतुः, पुपुवतुः, पुवन्ति, लुवन्ति, लुवन्ति । स्वरादाविति किम् ?

श्रीयात्, लूयात् । अगुण इति किम् ? श्रयिता, लविता । धातुग्रहण-मप्युत्तरार्थमेव ॥

## १७९ । अभ्यासस्यासवर्णे ॥

इवर्णोवर्णान्तस्याभ्यासस्यासवर्णे स्वरे इयुवौ भवतः । इयेष, उवोष, इयृयात् । असवर्ण इति किम् ? ईषतुः, ऊषतुः ॥

## १८० । नोर्विकरणस्य ॥

नोर्विकरणस्योकारस्यागुणे स्वरादावुव् भवति आन्तरतम्यात् । प्राप्नुवन्ति, प्राप्नुवन्तु । शक्नुवन्ति, शक्नुवन्तु । नोरिति किम् ? सुवन्ति । विकरणस्येति किम् ? तन्वन्ति ॥

## १८१ । य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य ॥

अनेकाक्षरस्य धातोर्य इवर्णस्तस्यासंयोगपूर्वस्य यकारो भवति अगुणे स्वरादौ । चिक्यतुः, चिक्युः । निन्यतुः, निन्युः । चिक्यिरे, निन्यिरे । असंयोगपूर्वस्येति किम् ? शिश्रियतुः चिक्रियतुः । अनेकाक्षरस्य धातोरिति किम् ? अधीयते ॥

## १८२ । इणश्च ॥

इणो धातोरगुणे स्वरादौ यकारो भवति । यन्ति, यन्तु । चकारो-ऽनुक्तसमुच्चयार्थः, तेन इकोपि स्यात्—अधियन्ति, अधियन्तु ॥

## १८३ । नोर्वकारो विकरणस्य ॥

नोर्विकरणस्यासंयोगपूर्वस्य स्वरादावगुणे वकारो भवति । सुन्व-न्ति, चिन्वन्ति । विकरणस्येति किम् ? नुवन्ति, नोनुवः । असंयोग-पूर्वस्येति किम् ? तक्ष्णुवन्ति ॥

## १८४ । जुहोतेः सार्वधातुके ॥

जुहोतेरुकारस्य सार्वधातुके स्वरादावगुणे प्रत्यये परे वकारो भवति । जुह्वति, जुह्वतु । अगुण इति किम् ? जुहवानि । सार्वधातुक इति किम् ? जुहुवुः । स्वरादाविति किम् ? जुहुयात् ॥

## १८५ । भुवो वोऽन्तः परोक्षाद्यतन्योः ॥

भुवो धातोरन्तो वकारो भवति परोक्षाद्यतन्योः स्वराद्योः परतः । बभूव, बभूवतुः, बभूवुः । बभूविथ, अभूवन्, अभूवम् । पुनर्वकारो गुणवृद्धिबाधनार्थः, नित्यश्चेद्गुणाधिकारः स्यात् । स्वराद्योरिति किम्? अभूत्, बभूवान् । बभूवुषु इत्यसिद्धं बहिरङ्गमन्तरङ्गे इति ॥

## १८६ । गोहेरूदुपधायाः ॥

गोहेः कृतगुणस्य स्वरादौ परत उपधाया ऊद् भवति । गूहयति, गूहिता, गूहकः गोहेः कृतगुणस्येति किम्? जुगुहुः । उपधाग्रहणमुत्तरार्थं च ॥

## १८७ । दुषेः कारिते ॥

दुषेरुपधाया ऊद् भवति कारिते परे । दूषयति । कारित इति किम्? दोषो वर्तते । कारित इति संज्ञापूर्वकत्वाद् वा चित्तविकारे— चित्तं दूषयति, चित्तं दोषयति । प्रज्ञां दूषयति, प्रज्ञां दोषयति ॥

## १८८ । मानुबन्धानां ह्रस्वः ॥

घटादयो मानुबन्धा अन्वाख्याताः । तेषामुपधायाः कारिते परे ह्रस्वो भवति । घटयति, व्यथयति ॥

ह्मगे ह्रगे सगे स्थगे संवरणे । कगे नोच्यते, अस्यायमर्थ इति च नोच्यते—कगयति । वन् च, वनु च नोच्यते, वन् च हिंसार्थः । वनु च कगेवत्—वनयति, वनयति । स्मृ आध्याने—स्मरयति चिन्तायामयत्र न भवति—विस्मारयति ।

जनी जृष् क्नसु रञ्जोऽमन्ताश्च—जनी प्रादुर्भावे—जनयति । जृष्— जरयति । क्नसु ह्वरणे—क्नसयति । रञ्ज रागे—रजयति मृगान्, रञ्जेर्मृगरमणेऽनुषङ्गलोपः । अमन्ताश्च—रमयति, श्रमयति ।

ज्वलह्वलह्मलनमोऽनुपसर्गा वा—सोपसर्गास्तु नित्यं मानुबन्धाः । ज्वल दीप्तौ घटादिः, प्रज्वलयति । तथा ह्वल ह्मल चलने—प्रह्वलयति, प्रह्मलयति । अमन्तत्वात् उपनमयति ।

ग्लास्नावनुवमश्च । अनुपसर्गा इति किम् ? प्रग्लापयति, प्रस्नापयति, उपवनयति, उद्वमयति । न कम्यमिचमः । शमोऽदर्शने—शमयति रोगान् । दर्शने तु न भवति—निशामयति रूपम् ।

स्खदिरवपरिभ्यां च—अवस्खदयति, परिस्खदयति । अवपरिभ्यामेवेति नियमादन्योपसर्गाच्च भवति—प्रस्खादयति, उपस्खादयति ।

फण गतौ पठ्यते मानुबन्धश्च । गतेरन्यत्र न भवति—फाणयति फाणटम् ।

अन्ये सुगमा इति नोदाहृताः । कथम् उद्घाटितः कपाटः, चौरस्योत्क्रा· थयति ? घटन्तादिन् । संक्रामयतीति शन्तृकन्तादिन् ॥

## १८९ । इचि वा ॥

मानुबन्धानां धातूनां कारिते इचि परे ह्रस्वो भवति वा । अघटि, अघाटि, अव्यथि, अव्याथि । त्रजि गतौ दाने च, द्दत्त हिंसायामिति घटादिपाठबलादनुपधाया अपि दीर्घत्वम्, तेन—प्रत्रञ्जि, अत्राञ्जि । अद्दत्ति, अद्दात्ति ॥

## १९० । जनिवध्योश्च ॥

इच्मात्रमिह वर्तते । जनिवध्योरिचि परे नित्यं ह्रस्वो भवति । अजनि, अवधि । यद्यपि बन्धने वधिस्तथापीह हिंसायाम् । तथा च—मलकश्चास्ति वधकोऽपि न विद्यते । वधिः प्रकृत्यन्तरमित्येके ॥

## १९१ । ओतो यिन्आयीस्वरवत् ॥

ओतः परौ यिन् आयी स्वरवद् भवतः । गव्यति, गव्यते । अवोऽपि न स्यात्, गवाजिनवदिष्टत्वात् ॥

## १९२ । औतश्च ॥

औतः परौ यिन्आयी स्वरवद् भवतः । नाव्यति, नाव्यते । यथासंख्य· भयात् पृथगुच्यते ॥

## १९३ । नाम्यन्तानां यण्आयियिन् आशी-श्च्विचेक्रीयितेषु ये दीर्घः ॥

नाम्यन्तानां धातूनां यणादिषु ये च्वौ च परत आन्तरतम्याद् दीर्घो भवति । चीयते, मन्तूयति, अग्नीयते, पटूयति, चीयात्, च्वौ च—पटूकरोति । य इति किम्? कृषीष्ट । नामीति सम्भवदर्शनार्थ-मिदम् ॥

## १९४ । इणोऽनुपसृष्टस्य ॥

इणो धातोरनुपसृष्टस्याशिषि ये दीर्घो भवति । ईयात्, ईया-स्ताम् । अनुपसृष्टस्येति किम्? अन्वियात् । यणो व्यवहितपाठाने-हानुवृत्तिरिति गम्यते । तेन समीयते नियमो न स्यात् ॥

## १९५ । ऋत ईदन्ताश्च्विचेक्रीयितयिन्आयिषु ॥

ऋदन्तस्य च्विचेक्रीयितयिन्आयिषु परत ईदन्तो भवति । मात्रीक-रोति, जेह्रीयते, स्वस्रीयति, दुहित्रीयते । ऋत इति किम्? चेकीर्यते ॥

## १९६ । इरन्यगुणे ॥

ऋदन्तस्यानि विकरणेऽगुण इकारो भवति । आद्रियते, आध्रियते । ऋत इति किम्? किरति, गिरति । अगुण इति किम्? स्मरति । आदेशादागमो विधिर्बलवानिति ॥

## १९७ । यणाशिषोर्ये ॥

ऋदन्तस्य यणाशिषोर्ये पर इकारोऽन्तो भवति । क्रियते, क्रियात् । य इति किम्? कृषीष्ट ॥

## १९८ । गुणोऽर्तिसंयोगाद्योः ॥

अर्तेः संयोगादेश्च धातोर्यणाशिषोर्ये परे गुणो भवति । अर्य्यते अर्य्यात् । स्मर्य्यते, स्मर्य्यात् । असिद्धं बहिरङ्गमन्तरङ्गे इति—संस्क्रि-यते, संस्क्रियात् ॥

## १९९ । चेक्रीयिते च ॥

ऋतेः संयोगादेश्च धातोश्चेक्रीयते परे गुणो भवति । अरार्यते, साम्रर्यते ॥

## २०० । घ्राध्मोरी ॥

घ्रा ध्मा इत्येतयोश्चेक्रीयिते पर ईकारो भवति । जेघ्रीयते, देध्मीयते । हन्तेर्घ्रीर्वा वक्तव्यम्—जेघ्नीयते, जङ्घन्यते ॥

## २०१ । यिन्यवर्णस्य ॥

यिनि परेऽवर्णस्य ईकारो भवति । वस्त्रीयति, मालीयति । च्वौ च दीर्घोभवति, मालीस्यात् ॥

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु निपाता इष्टाः । अशनमिच्छति भोक्तुम्—अशनायति, उदकमिच्छति पातुम्—उदन्यति, धनमिच्छति तृष्णक्—धनायति ॥

## २०२ । अदेर्घस्लृ सनद्यतन्योः ॥

अदेः स्थाने सनद्यतन्योः परतो घस्लृरादेशो भवति । लृद् अनुबन्धः । जिघत्सति, अघसत् ॥

## २०३ । वा परोक्षायाम् ॥

परोक्षायां परतोऽदेर्घस्लृरादेशो भवति वा । आद, आदतुः, जघास, जक्षतुः । घस्लृ अदने, सौत्रोऽयं भाषायां मर्ग्विषय एव ॥

## २०४ । वेञश्च वयिः ॥

वेञो धातोः परोक्षायां परतो वयिर्भवति वा । उवाय, ऊयतुः ववौ, ववतुः । इकारः स्वरूपग्राहकः ॥

## २०५ । हन्तेर्वधिराशिषि ॥

हन्तेर्वधिर्भवति आशिषि परतः । वध्यात्, वध्यास्ताम् ॥

## २०६ । अद्यतन्यां च ॥

हन्तेरद्यतन्यां च परतो वधिर्भवति । अवधीत्, अवधिषाम् । अनात्मनेपदवादिटि कृते वा दीर्घो न स्यात्, हन् निर्देशस्य स्वरूपग्राहकत्वात् । वाशब्दो व्यवस्थावाचीह स्मर्यते, तेनात्मनेपदे वा—आहत, आहसाताम्, आवधिष्ट, आवधिषाताम् ॥

## २०७ । इणो गा ॥

इणो धातोरद्यतन्यां गादेशो भवति । अगात्, अगाताम् । इण्वद् इकोऽपि—अध्यगात् ॥

## २०८ । इङः परोक्षायाम् ॥

इङः परोक्षायां गादेशो भवति । अधिजगे, अधिजगाते, अधिजगिरे । इङ इति किम् ? इट् गतौ, उदियाय ।

अद्यतनीक्रियातिपत्त्योर्वा गीरादेश इष्यते—अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । इनि सन्णिचोरपि गायतेरध्ययनेऽपि वृत्तिः—अधिजिगापयिषति, अध्यजीगपत् । इकस्तु—अध्यापिपयिषति, अध्यापिपत् ॥

## २०९ । सनीणिङोर्गमिः ॥

सनि परे इण् इङोर्गमिरादेशो भवति । ग्रामं जिगमिषति, वेदानधिजिगांसते । इकोऽपि—अधिजिगमिषति । गम्लृ बोधने सनि नाभिधीयते चेत् तथायमपि, अर्थान् प्रतीषिषति । इट् गतौ बोधनेऽपि इयते, गमयति, अधिगमयति, गमिनैव सिद्धम् । अर्थान् प्रत्याययति, शास्त्रमध्यापयतीति भवितव्यमेव ॥

## २१० । अस्तेर्भूरसार्वधातुके ॥

अस्तेर्भूरादेशो भवति असार्वधातुकविषये । भविता, भूतः, भविष्यति । भव्यम्—"स्वराद् यः" । तिपा निर्देशः किम् ? असिता ॥

## २११ । ब्रुवो वचिः ॥

ब्रुवो धातोर्वचिर्भवति असार्वधातुकविषये । वक्ता, वक्ष्यति । वाच्यम्- "ऋवर्णव्यञ्जनान्ताद् घ्यण्" ॥

## २१२ । चक्षिङः ख्याञ् ॥

चक्षिङः ख्याञादेशो भवति असार्वधातुकविषये । आख्याता, आख्यास्यति, आख्यास्यते । अनुबन्धत्वादुभयपदम् । आख्येयम्—"आत् अनोरिच" इति । कथं सञ्चक्ष्यो दुर्जनो, वर्जनीय इत्यार्थः । नृचक्षा राक्षसः—असुन् औणादिकत्वात् । विचक्षणो विद्वान् लोकतः सिद्धः ।

## २१३ । वा परोक्षायाम् ॥

चक्षिङः परोक्षायां ख्याञादेशो भवति वा । आचख्यौ, आचख्ये, आचचक्षे ॥

## २१४ । अजेर्वी ॥

अजेर्वीरादेशो भवति असार्वधातुकविषये । विव्यतुः, वयनीयम्, वीतः, वीतवान् । व्यञ्जनादौ वेति केचित्—प्राजिता, प्रवेता, प्राजिष्यते, प्रवेष्यते, प्राजितुम्, प्रवेतुम्, घञ् अल् क्यप्सु च न स्यात्—समाजः, उदजः, समज्या । प्राजनो दण्डः, बाधिकारादियमिष्टसिद्धिः ॥

## २१५ । अदादेर्लुग् विकरणस्य ॥

अदादेर्गणाद् विकरणस्य लुग् भवति । अत्ति, हन्ति, जुहोति, बिभेति, जुहुतः, बिभीतः । लुग् लोपत्वान्न गुणः । विकरणस्येति किम् ? अघ्नन् । अदाद्यन्तर्गणो जुहोत्यादिरिति ॥

## २१६ । इण्स्थादापिबतिभूभ्यः सिचः परस्मै ॥

इणादिभ्यः परस्य सिचो लुग् भवति परस्मैपदे परतः । अगात्, अध्यगात्, अस्थात्, अदात्, अधात्, अपात्, अभूत् । पिबतेरिति किम् ? पा रक्षणे—अपासीत् । परस्मा इति किम् ? समस्थिषत, अदिषत ।

घ्राशाछासा धेट्‌ां वा वक्तव्यम्—अघ्रात्, अघ्रासीत्, अशात्, अशासीत्। अच्छात्, अच्छासीत्। असात्, असासीत्। अधात्, अधासीत्॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते चतुर्थः पादः समाप्तः॥

---

## २१७। नाम्यन्तयोर्धातुविकरणयोर्गुणः॥

नाम्यन्तयोर्धातुविकरणयोरन्तरतमो गुणो भवति अर्थात्प्रत्यये परे। पक्ता, चेता, नेता, स्तोता, कर्त्ता, भविता, सुनोति, तनोति। नाम्यन्तयोरिति किम्? उम्भिता, क्रीणाति। ग्लायति, म्लायति। ऐकारोपदेशबलान्न गुणः। नीभ्याम् लूभ्यामिति गौणत्वात्॥

## २१८। नामिनश्चोपधाया लघोः॥

धातोरुपधाया नामिनो लघोर्गुणो भवति। कोषिता, कोषिष्यते, वर्त्तिता, वर्त्तिष्यते। भेत्ता, छेत्तेति प्रत्यये परे धातोरुपधैव। चकार उत्तरार्थः॥

## २१९। अनि च विकरणे॥

नामिन उपधाया नाम्यन्तस्य चान्येव विकरणे गुणो भवति। रोचते, वर्त्तते, भवति, नयति। अन्येव विकरण इति किम्? नृत्यति, सुनोति, क्रीणाति, पुषाण। विकरण इति किम्? अतुदन्॥

## २२०। करोतेः॥

करोतेः स्वविकरणे गुणो भवत्येव। करोति, करोतु। तनाद्युपलक्षणं करोतिरिति केचित्, तेन—सनर्णोति॥

## २२१। मिदेः॥

मिदेः स्वविकरणे गुणो भवत्येव। मेद्यति। भौवादिकस्य मेदतेरनिमित्त एव॥

## २२२ । अभ्यस्तानामुसि ॥

अभ्यस्तानामुसि परे नामिनो गुणो भवति । द्विःप्रयुक्तस्यधोश्च परस्मा इति प्रतिषेधे प्राप्ते वचनम् । अबिभयुः, अजुहवुः, अबिभरुः, अजागरुः । अभ्यस्तानामुसीति किम् ? जुहुवुः ॥

## २२३ । न णकारानुबन्धचेक्रीयितयोः ॥

नाम्यन्तानां नाम्युपधानां च णकारानुबन्धे चेक्रीयिते च परे गुणो न भवति । अशिश्रियत्, अपुपुषत्, अचुद्युतत्, नीयते, चुच्यते । नरीनृत्यते, लोलूयते ॥

## २२४ । अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके ॥

अभ्यस्तस्य चोपधाया नामिनः स्वरादौ गुणिनि सार्वधातुके परे गुणो न भवति । नेनिजानि, अनेनिजम् । विशेषणामिग्रहणाज् ज्ञानाशीत्यलोपो न स्यात् । एवमुत्तरत्रापि योऽयम् । गुणिनीति किम् ? गुणिन्यपि गुणो माभूत्—अनेनिजुः ॥

## २२५ । सनि चानिटि ॥

नामिन उपधाया अनिटि सनि गुणो न भवति । बिभित्सति, बिभित्सा, बुभुत्सते, जिघृक्षति । चकारादनामिनोऽपि क्वचित्, तेन—धीप्सति न लोपः स्यात् । अनिटीति किम् ? चुकोपिषति ॥

## २२६ । सिजाशिषोश्चात्मने ॥

नामिन उपधायाः सिच्यात्मनेपदे आशिषि चानिटि गुणो न भवति । अभित्त, अभित्सत, अभित्साताम्, अदुग्ध, अदुग्धाः, अधुक्षत । दुहदिहलिहगुहामात्मने दन्त्ये वा सलोप, तत्र बाधस्थितवा-दुत्तरः । सिचोऽपवर्ग्युपलक्षणत्वात् सिजम् । भित्सीष्ट, भुत्सीष्ट । अनिटीति किम् ? अवर्धिष्ट, वर्धिषीष्ट । इहात्मनेग्रहणं गुणबाधिका

वृद्धिरिति ज्ञापनार्थम्, तेन—प्रवृवीत, प्रवृषीत । कुटादित्वाद्गुणे वृद्धिर्न स्यात् ॥

## २२७ । ऋदन्तानां च ॥

ऋदन्तानां च धातूनां सिजाशिषोरात्मनेपदेऽनिटि गुणो न भवति । अकृत, अकृषाताम्, कृषीष्ट । अनिटीति किम् ? प्रावरिष्ट, प्रवरिषीष्ट । कथं तॄ—अतीर्ष्ट, तीर्षीष्ट, स्तॄ—अस्तीर्ष्ट, स्तीर्षीष्ट, पॄ—अपूर्ष्ट, पूर्षीष्ट । सिजाशिषोरात्मन इड्विकल्पेष्विटित्यृकारस्योपलक्षणत्वात् ॥

## २२८ । स्थादोश्च ॥

स्थादासंज्ञकयोश्च नामिनः सिज्यात्मनेपदे गुणो न भवति । समस्थित, समस्थिषाताम् । अदित, अदिषाताम् । अधित, अधिषाताम् । अनिन इति किम् ? स्थासीष्ट, दासीष्ट ॥

## २२९ । भुवः सिज्लुकि ॥

भुवो धातोः सिज्लुकि सति गुणो न भवति । अभूत्, अभूताम्, भुव इति किम् ? अस्थात् । सिज्लुकीति वचनान्नामिनो निवृत्तिर्भवति शङ्क्यते ॥

## २३० । सूतेः पञ्चम्याम् ॥

सूतेः पञ्चम्युत्तमे गुणो न भवति । सूङ—सुव, सुवावहै, सुवामहै ॥

## २३१ । दीधीवेव्योश्च ॥

छान्दसावेतौ धातू इत्येके । पञ्चम्यामिति नेहानुवृत्तिः पृथग्योगात् । दीधीवेव्योश्च गुणो न भवति । आदीध्यै, आवेव्यै, आदीध्यनम्, आवेव्यनम्, आदीध्यकः, आवेव्यकः ॥

## २३२ । रुदविदमुषां सनि ॥

रुदादीनां सनि गुणो न भवति । रुरुदिषति, विविदिषति, मुमुषिषति । पारिशेष्याद् विदिर्ज्ञानार्थः । सनि व्यञ्जनादेर्युपधात्वाद् विकल्पेऽप्राप्ते वचनं नित्यार्थम् ॥

## २३३ । नाम्यन्तानामनिटाम् ॥

नाम्यन्तानां धातूनामनिटां सनि गुणो न भवति । चिचीषति, निनीषति, तुष्टूषति, लुलूषति, चिकीर्षति, बुभूर्षति । अनिटामिति किम् ? शिश्रयिषति । ज्ञीप्सतीति नित्यत्वात् कारितलोपः स्यात् ॥

"दीर्घाणां च कृतो दीर्घो गुणं बाधेत चेत्तदा ।
दीर्घत्वाविरुतौ नाम इनो लोपस्तु दुर्लभः ॥"

## २३४ । सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः ॥

सर्वेषां धातूनां विकरणानां च नामिन उपधाया नाम्यन्तस्य च सार्वधातुके पञ्चम्युत्तमवर्जिते आत्मनेपदे गुणो न भवति । दुग्धे, स्तुते, चिनुते, कुरुते । सार्वधातुक इति किम् ? धोक्ष्यते, स्तोष्यते । अनुत्तमे पञ्चम्या इति किम् ? स्तवै, करवै ॥

## २३५ । द्वित्वबहुत्वयोश्च परस्मै ॥

सर्वेषां धातूनां विकरणानां च सार्वधातुके पञ्चम्युत्तमवर्जिते द्वित्वबहुत्वयोश्च परस्मैपदे गुणो न भवति । दुग्धः, दुहन्ति । स्तुतः, स्तुवन्ति । चिनुतः, चिन्वन्ति । कुरुतः, कुर्वन्ति । द्वित्वबहुत्वयोरिति किम् ? दोग्धि, स्तौति, करोति, चिनोति । अनुत्तमे पञ्चम्या इति किम् ? दोहाव, दोहाम । चिनवाव, चिनवाम ॥

## २३६ । परोक्षायां च ॥

सर्वेषां धातूनां परोक्षायां च द्वित्वबहुत्वयोश्च परस्मैपदे गुणो न भवति । दुदुहतुः, दुदुहुः । विव्यतुः, विव्युः । द्वित्वबहुत्वयोरिति किम् ? दुदोह, निनयिथ ॥

## २३७ । सर्वत्रात्मने ॥

सर्वेषां धातूनां परोक्षायां च सर्वस्मिन्नात्मनेपदे गुणो न भवति। दुदुहे, दुदुहाते, दुदुहिरे। चक्रे, चक्राते, चक्रिरे ॥

## २३८। आशिषि च परस्मै ॥

सर्वेषां धातूनां सर्वत्राशिषि च परस्मैपदे गुणो न भवति। चीयात्, चीयास्ताम्। दुह्यात्, दुह्यास्ताम्। परस्मै इति किम्? चेषीष्ट, धोक्षीष्ट ॥

## २३९। सप्तम्यां च ॥

सर्वेषां धातूनां सप्तम्यां परस्मैपदे गुणो न भवति। स्तुयात्, चिनुयात्, दुह्यात् ॥

## २४०। हौ च ॥

सर्वेषां धातूनां हौ परे गुणो न भवति। जुहि, दुग्धि, प्राप्नुहि। चिनु, सुनु। प्रत्ययलोपलक्षणत्वात्। कथम् एहि? आङ् परत्वमिति ॥

## २४१। तुदादेरनि ॥

तुदादेरनि गुणो न भवति। तुदति, नुदति ॥

## २४२। आमि विदेरेव ॥

विदेरेवामि परे गुणो न भवति। विद ज्ञाने—विदाञ्चकार। विदेरेवेति किम्? ओषाञ्चकार, जागराञ्चकार ॥

## २४३। कुटादेरनिनिचट्सु ॥

कुटादेर्गणस्य इन्इच्अटो वर्जयित्वान्येषु प्रत्ययेषु गुणो न भवति। उत्कुटिता, उत्कुटितुम्, उत्कुटिष्यति, उत्पुटिता, उत्पुटितुम्, उत्पुटिष्यति। कुटादेरिति किम्? लेखनीयम्। अनिनिचट्स्विति किम्? उत्कोटयति, उदकोटि, उच्चुकोट। कथं पुञ्छनीयम्? रूढित्वात् ॥

## २४४। विजेरिटि ॥

पिजेरिटि परे गुणो न भवति । ओविजी—उद्विजिता, उद्विजितुम्, उद्विजिष्यते । कथम् उद्वेजिता ? इना सिद्धम् ॥

## २४५ । स्थादोरिरद्यतन्यामात्मने ॥

स्थादासंज्ञकयोरद्यतन्यामात्मनेपद इर्भवति । समस्थित, समस्थिषाताम्, अदित, अदिषाताम् । अधित, अधिषाताम् । आत्मन इति किम् ? अस्थात्, अदात्, अधात् ॥

## २४६ । मुचादेरागमो नकारः स्वरादनि विकरणे ॥

मुचादेर्गणस्य स्वरात्परो नकारागमो भवति अनि विकरणे परे । मुञ्चति, लुम्पति । विकरण इति किम् ? अमुचन् ॥

## २४७ । मस्जिनशोर्धुटि ॥

मस्जिनशोः स्वरात्परो नकारागमो भवति धुटि परे । मङ्क्ता, मङ्क्ष्यति, नंष्टा, नङ्क्ष्यति ॥

## २४८ । रधिजभोः स्वरे ॥

रधिजभोः स्वरात्परो नकारागमो भवति स्वरे परे । रन्धयति, अरन्धि । जम्भयति, अजम्भि ॥

## २४९ । नेटि रधेरपरोक्षायाम् ॥

रधेरिटि परे नकारगमो न भवति अपरोक्षायाम् । रधिता, रधिष्यति, रधितव्यम् । अपरोक्षायामिति किम् ? ररन्धिव, ररन्धिम ॥

## २५० । रभिलभोरविकरणपरोक्षयोः ॥

रभिलभोः स्वरात्परो नकारागमो भवति अविकरणपरोक्षयोः स्वरे परे । आरम्भयति, आरम्भि, आरम्भो वर्तते । आलम्भयति, आलम्भि । अविकरणपरोक्षयोरिति किम् ? आरभते, आलभते, रेभे, लेभे ॥

## २५१ । हुधुड्भ्यां हेर्धिः ॥

हुधुड्भ्यां परस्य हेर्धिर्भवति । जुहुधि, चकाधि, भिन्द्धि, छिन्द्धि

भिन्तात्, छिन्तात्, पत्त्वात्—तातण् । भिन्धकि, छिन्धकि—स्यादक् । कथं रुदिहि, स्वपिहि, सेट्‌कत्वात् ॥

२५२ । अस्तेः ॥

अस्तेः परस्य हेर्धिर्भवति । अस—एधि । नित्यत्वादन्तरङ्गत्वादेत्वे सति वचनम् ॥

२५३ । शा शास्तेश्च ॥

शास्तेः परस्य हेर्धिर्भवति । शास्तेश्च शा भवति । शाधि । अन्येति कृते।त्वं स्यात् ॥

२५४ । लोपोऽभ्यस्तादन्तिनः ॥

अभ्यस्तात्परस्यान्तेर्नकारस्य लोपो भवति । ददति, ददतु । जाग्रति, जाग्रतु । नलोपः साध्य इत्यन्यकृतः ॥

२५५ । आत्मने चानकारात् ॥

अनकारादात्मनेपदेऽन्तेर्नकारस्य लोपो भवति । कुर्व्वते, कुर्व्वताम् । लुनते, लुनताम् । व्यतिजाते, व्यतिजाताम् । अनकारादिति किम् ? पचन्ते, पच्यन्ते ॥

२५६ । शेते रिरन्तेरादिः ॥

शेतेः परस्यान्तेरादि रिर्भवति । शेरते, शेरताम्, अशेरत । अन्ति-ग्रहणमन्तिनो रिरादिर्माभूत् ।

वेत्तेर्वा वक्तव्यम्—संविदते, संविद्रते ॥

२५७ । आकारादट औ ॥

आकारात्परस्य अट और्भवति । पपौ, तस्थौ ।

आशिषि तुह्योस्तातण् वा वक्तव्यम् । जीवतु, जीवतात्, जीवत्वम्, नन्दतु, नन्दतात्, नन्दत्वम्, छिन्तात्, कुरुतात् । णकारोऽगुणार्थः ॥

२५८ । ऋदन्तस्येरगुणे ॥

ऋदन्तस्य धातोः श्रुतस्य स्थानिनोऽन्तरतमोऽगुणे प्रत्यये परे इर्भवति । चिकीर्षति, जिहीर्षति, तितीर्षति । ऋदन्तस्येति किम्? चकतुः । "कीर्तीषोः किश्च" इति निर्देशात् कीर्तयति ॥

## २५९ । उरोष्ठ्योपधस्य च ॥

ओष्ठ्योपधस्य धातोर्ऋदन्तस्यागुणे प्रत्यये परे उर्भवति । पुपूर्षति, मुमूर्षति, बुभूर्षति, बोभूर्य्यते । दन्त्योष्ठ्यादपि—प्रावुवूर्षति, संवुवूर्षति । धातोरोष्ठ्योपधस्येति किम्? ऋ गतौ—समीर्षुः ॥

## २६० । इन्यसमानलोपोपधाया ह्रस्वश्चणि ॥

अविद्यमानसमानलोपोपधाया ह्रस्वो भवति इनि चण् परे । अचीकरत्, अजीहरत्, अलीलवत् । इनग्रहणमिन्सामान्यार्थम् । तेन—वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ह्रस्वः समानलोपत्वेव । असमानलोपोपधाया इति किम्? अससामत् । उपधाया इति किम्? अचकाङ्क्षत् । कथं गोनावमाख्यातवान्—अजुगोनत्? ओतः स्थानिवद्भावात् ॥

## २६१ । न शास्वृदनुबन्धानाम् ॥

शास्तेर्ऋदनुबन्धानां चोपधाया ह्रस्वो न भवति इनि चण् परे । अशशासत्, अडुढौकत्, शास्तेरिति किम्? आङः शास इच्छायाम्—आशीशसत् । ओणेर्ऋदनुबन्धो ज्ञापनार्थः—नित्यमपि द्विर्वचनं ह्रस्वत्वेन बाध्यते, तेन—मा भवानटिटत् ।

भ्राजृ, भ्रासृ, भासृ, एषामृदनुबन्धो नाद्रियते । भ्राज—अबिभ्रजत् । भ्रास—अबिभ्रसत् । भास—अबीभसत् । दीप—अदीदिपत्, जीव—अजीजिवत्, मील—अमीमिलत्, पीड—अपीपिडत्, कण—अचीकणत्, वण—अवीवणत्, भण—अबीभणत्, श्रण—अशीश्रणत्, हेठ—अजीहिठत्, लुप्—अलुलुपत् । भ्राजम् भ्रासम् तमचीकरत्—अबभ्राजत्, समानलोपत्वात् । तेन—भ्राजादीनां वेति न वक्तव्यम् ।

## २६२ । लोपः पिबतेरीच्चाभ्यासस्य ॥

पिबतेरुपधाया लोपो भवति अभ्यासस्येच्च भवति इनि चण् परे । अपीप्यत्, पिबतेरिति किम् ? पै ओवै—अपीपयत्, पा रक्षणे—अपीपलत् ॥

## २६३ । तिष्ठतेरित् ॥

ह्रस्व ईकारोऽभ्यासस्येह । तिष्ठतेरुपधाया इद् भवति इनि चण् परे । अतिष्ठिपत् ॥

## २६४ । जिघ्रतेर्वा ॥

जिघ्रतेरुपधाया इद् भवति वा इनि चण् परे । अजिघ्रिपत्, अजिघ्रपत् । कथम् अवीवृधत्, अववर्धत्; अमीमृजत्, अममार्जत्; अचीकॢपत्, अचकल्पत्; अचीकृतत्, अचिकीर्तत् । इनि चपि ऋवर्णस्य संज्ञा पूर्वकृतत्वात्, "कीर्त्तीषोः किञ्च" इति ज्ञापकस्यानित्यत्वात् ॥

इति दौर्गसिंह्यां वृत्तावाख्याते पञ्चमः पादः समाप्तः ॥

---

## २६५ । अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ॥

अनिदनुबन्धानां धातूनामगुणे प्रत्यये परेऽनुषङ्गलोपो भवति । भज्यते, ध्वस्यते, भग्नः, भग्नवान् । अनिदनुबन्धानामिति किम् ? नन्द्यते, वन्द्यते । अतएव वर्जनादिदनुबन्धानां नोऽस्तीति । तथा च—पुंवमिति स्वराम्तत्वादत्वं स्यात् । नञा निर्दिष्टस्यानित्यात् लङ्गिकम्प्योरुपतापशरीरविकारयोः स्यात्—विलगितः, विकपितः । रञ्जादीनां शुन्फाम्यामामनि च न लुप्यते । तृफ तृन्फ तृप्तौ—तृम्फतीत्यादि ॥

## २६६ । नशब्दाच्च विकरणात् ॥

अनिदनुबन्धानां नकारेण योगः, परेऽगुण इति सामान्यम् । इदनुबन्धानामनिदनुबन्धानां च गुणिन्यगुणे च नशब्दाच्च विकरणादनुषङ्गस्य लोपो भवति । भनक्ति, भङ्क्तः, भञ्जन्ति, हिनस्ति, हिंस्तः, हिंसन्ति ॥

## २६७ । परोक्षायामिन्धिषन्थिग्रन्थिदन्भीनामगुणे ॥

इन्ध्यादीनां परोक्षायामगुणे परतोऽनुषङ्गस्य लोपो भवति । समीधे, समीधाते, समीधिरे, वचनाद्दाम् नास्ति । श्रेथतुः, ग्रेथतुः, देभतुः । इन्ध्यादीनामेवेति नियमात्—शश्रंसे, बभञ्जतुः ॥

## २६८ । दन्शिसन्जिस्वन्जिरन्जीनामनि ॥

दन्शयादीनाम् अनिविकरणेऽनुषङ्गस्य लोपो भवति । दशति, सजति, परिष्वजते, रजति । कथं परिष्वजेते, अन्तरङ्गत्वात् स्थानिवद्भावाच्च । दन्श दशन इति निर्देशात्—दशनम् । कथम् अभजि, अभाजि ? भजेरिचि भञ्जनेऽपि वृत्तिः ॥

## २६९ । अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु ॥

धातोरुपधाया अस्य दीर्घो भवति, नामिनां च वृद्धिर्भवति इन् इच् अट् णकु परतः । पाचयति, अपाचि, पपाच; लावयति, अलावि, लुलाव; नाययति, अनायि, निनायः; कारयति, अकारि, चकार । धातोरिति किम् ? रचयति । कथं पटुमाख्यातवान्—अपीपटत् ? वृद्धौ सन्ध्यक्षरलोपः । धातोर्नामिनो गुणे सत्युपधाया दीर्घः सिद्धः । नामिग्रहणं लिङ्गार्थमेव, नञ्जमनं वा । कथम् अचकासत्, अचकसत् ? संज्ञापूर्वकत्वाद् वृद्धिरनित्येति समानलोपत्वात् सन्वद्भावो न स्यात् । तथा अट्युत्तमे वा—अहं पपच, अहं पपाच, अहं निनय, अहं निनाय, अहं लुलव, अहं लुलाव, अहं चकर, अहं चकार ॥

## २७० । सिचि परस्मै स्वरान्तानाम् ॥

परस्मै पदे सिचि परतः स्वरान्तानां धातूनां वृद्धिर्भवति नामिन

एव । अरावीत्, अलावीत्, अचैषीत्, अनैषीत् । अर्थात् स्वरान्तप्रत्ययमुपदेशार्थं, तेन—उदवोढाम् । सिचीति किम् ? अयाव । परस्मैति किम् ? अच्योष्ट ।
ऊर्णोतेर्वा—प्रौर्णावीत्, प्रौर्णवीत् ॥

## २७१ । व्यञ्जनान्तानामनिटाम् ॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनामनिटां नामिनो वृद्धिर्भवति, उपधाया एव । अभैत्सीत्, अरौत्सीत्, अताप्सीत् । अनिटामिति किम् ? अकोषीत् ॥

## २७२ । अस्य च दीर्घः ॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनाम् अनिटामस्य च दीर्घो भवति । अपाक्षीत् । पृथग्योगात् अभाङ्क्षीत् ॥

## २७३ । वदव्रजरलन्तानाम् ॥

परस्मैपदे सिचि परतो वदिव्रज्यो रलन्तानां धातूनामस्य च दीर्घो भवति । अवादीत्, अव्राजीत्, अचारीत्, अचालीत् । कथम् अवधीत्, अभ्रलीत्, नाकारस्य रलन्ततेति ।
यन्ताादीनां सेटामनेदनुबन्धह्मयन्तक्षणश्वसां वेति—अरणीत्, अराणीत् । एदनुबन्धादीनां च—कगे—अकगीत् । ग्रह—अग्रहीत् । ष्यम्—अस्यमीत् । व्यय—अव्ययीत् । क्षण—अक्षणीत् । श्वस—अश्वसीत् । अनिटामिति नञा निर्दिष्टस्यानित्यत्वात् ॥

## २७४ । श्विजागोर्गुणः ॥

सिचि परस्मैपदे श्विजाग्रोर्गुणो भवति । अश्वयीत्, अजागरीत् । वृद्धेरपवादः ॥

## २७५ । अर्त्तिसर्त्योरणि ॥

अर्त्तिसर्त्योरणि गुणो भवति । मा भवानरत्, असरत् । कथम् आरत्, अदर्शत् ? ऋदर्त्तेरयोपलक्षणत्वात् ॥

## २७६ । जागर्त्तेः कारिते ॥

जागर्त्तेः कारिते परे गुणो भवति । जागरयति ॥

## २७७ । यणाशिषोर्ये ॥

जागर्त्तेर्यणाशिषोर्ये परे गुणो भवति । जागर्य्यते, जागर्य्यात् । य इति किम् ? जागरिषीष्ट । इड् वेज्वयेति वृद्धिः स्यात् ॥

## २७८ । परोक्षायामगुणे ॥

जागर्त्तेः परोक्षायामगुणे गुणो भवति । जजागरतुः, जजागरुः । अगुण इति किम् ? जजागार ॥

## २७९ । ऋतश्च संयोगादेः ॥

संयोगादेर्धातोर्ऋतश्च परोक्षायामगुणे गुणो भवति । सस्मरतुः, सस्मरुः । कथं सञ्चस्करतुः, सञ्चस्करुः ? असिद्धं बहिरङ्गमन्तरङ्गमित्य-नित्येयम् ॥

## २८० । ऋदन्तानां च ॥

ऋदन्तानां च परोक्षायामगुणे गुणो भवति । तेरतुः, तेरुः; विश-शरतुः, विशशरुः; विददरतुः, विददरुः; निपपरतुः, निपपरुः । कथं विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः ? शॄद्ॄप्रामर्थे प्राप्राप्राश्च वर्त्तन्ते ॥

## २८१ । ऋच्छ ऋतः ॥

पुनर्ग्रहणं गुणार्थम् । ऋच्छ ऋतः स्थाने परोक्षायां गुणिन्यगुणे च गुणो भवति । आनर्छ, आनर्छतुः, आनर्छुः । कथम् आरतुः ? नित्य-त्वान्निमित्ताभावान्ना नागमविघातः स्यात् ॥

## २८२ । शीङः सार्वधातुके ॥

शीङः सार्वधातुकेऽगुणे गुणो भवति । एकवर्णत्वान्नुणान्ते । शेते, शयीत, शेताम्, अशेत ॥

## २८३ । अयीर्ये ॥

शीङ ईकारोऽय् भवति ये परे । शय्यते, अधिशय्यगतः । कथं समुह्यते, समुह्य गतः ? ऊहत्यर्थे वहिरिति । अगुणे ये तु सोपसर्गस्य ऊहतेर्निवृत्तिरभिधानात्, तेन ह्रस्वो न वाच्यः ॥

## २८४ । आयिरिच्यादन्तानाम् ॥

आदन्तानां धातूनामिचि परे आयिर्भवति निर्दिष्टस्यातः स्थाने । अदायि, अदायि, दायिष्यते, अदायिषत, दायिषीष्ट, दायिता । इङ्‌वे-ञोरिति ॥

## २८५ । शाछासाह्वाव्यावेपामिनि ॥

शाछासाह्वाव्यावेपाम् इनि परे आयिर्भवति । शो—शाययति, छो—छाययति, सो—साययति, ह्वेञ्—ह्वाययति, व्येञ्—संव्याययति, वेञ्—वाययति, पा पाने, पै ओवै—पाययति ॥

## २८६ । अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यादन्ताना-मन्तः पो यलोपो गुणश्च नामिनाम् ॥

अर्त्यादीनामादन्तानां च इनि परे पकारोऽन्तो भवति, यथासम्भवं यलोपो गुणश्च नामिनाम् । तिपा धातुरेव निर्दिश्यते । अर्पयति, ह्रेपयति, ब्लेपयति । रीरेषणे, रीङ् श्रवणे वा—रेपयति । क्नोपयति, क्ष्मापयति, स्थापयति, क्ष्मापयति, अध्यापयति ॥

## २८७ । पातेर्लोऽन्तः ॥

पातेरिनि परे लकारोऽन्तो भवति । पालयति । पाल रक्षणे चौरादिकोऽप्यस्ति, पातेरायिः स्यादिति वचनम् ॥ पुनरन्तग्रहणम् आदेशो वा स्यादिति ॥

## २८८ । धूञ्प्रीणात्योर्नः ॥

धूञ्प्रीणात्योरिनि परे नकारोऽन्तो भवति । धूनयति, प्रीणयति ।

धूञ् प्रीणात्योरिति किम् ? धू विधूनने—विधावयति, प्रीङ् प्रीतौ—प्राययति ।

घृतं विलीनयति,—विलीनं करोतीतीन् । घृतं विलालयति,—लालते रूपम् । स्नेहद्रवीकरणे लियः कारिते वृत्तिर्वास्त्यनभिधानात् ।

पक्षेणोपवाजयतीति वजते रूपम् । वाधातोः कम्पने कारिते न वृत्तिः ।

सत्यार्थवेदानामन्त आप्तु कारित एव चुरादौ—सत्यापयति, अर्थापयति, वेदापयति । कथं कारापयति, वर्णापयति, शब्दापयति ? आपनमापः, कारस्यापः—कारापः, तं करोतीतीन्, हेतौ साधुसंग्रहकार्यं वा ॥

## २८९ । स्फायेर्वादेशः ॥

स्फायेरिनि परे वादेशो भवति । स्फावयति, आगमः स्यादित्यादेशवचनम् ॥

## २९० । शदेरगतौ तः ॥

शदेरगत्यर्थस्य इनि परे त आदेशो भवति । फलानि शातयति । अगताविति किम् ? गाः शादयति—गमयतीत्यर्थः ।

रुहार्थे रुपिरिति व्रीहीन् रोपयति, कायमध्यारोपयति, अर्थं समारोपयति । रुहेस्तु—रोहयति, आरोहयति, हस्ती हस्तिपकम् ॥

## २९१ । हन्तेस्तः ॥

हन्तेरिनि परे तकारोऽन्तो भवति । घातयति । पुनस्तग्रहणं गत्यर्थम्, तेन शस्याद् गां घातयति—गमयतीत्यर्थः ॥

## २९२ । हस्य हन्तेर्घिरिनिचोः ॥

हन्तेर्हस्य इनिचोः परतो घिर्भवति । घातयति, अघानि । हन्तस्य धातोर्विशेषणं स्यादिति पुनर्हन्तिग्रहणम् ॥

## २९३ । लुप्तोपधस्य च ॥

हन्तेर्लुप्तोपधस्य च हस्य घिर्भवति । घ्नन्ति, घ्नाघ्नते । लुप्तोपधस्येति किम् ? क्लेशापहः, तमोपहः ॥

## २९४ । अभ्यासाच्च ॥

अभ्यासात्परस्य हन्तेर्हस्य घिर्भवति । जघान । हन्तेरभ्यासादिति किम् ? हननीयितुमिच्छति—जिहननीयिषति ।
हेरचणीति वक्तव्यम्—जिघीषति, प्रहाययितुमिच्छति—प्रजिघाय- यिषति । अचणीतिवचनात् प्राजीहयत् ॥

## २९५ । जेगिः सन्परोक्षयोः ॥

जयतेः सन्परोक्षयोर्गिर्भवति । जिगीषति, जिगाय, विजिग्ये । जिनातेर्लाक्षणिकत्वात् जिज्यतुः ॥

## २९६ । चेः कि वा ॥

चिञः सन्परोक्षयोः किर्भवति वा । चिकीषति, चिचीषति । चिकाय, चिचाय । चिक्ये, चिच्ये । कि कित ज्ञाने परस्मैपदीति वचनम् ॥

## २९७ । सणोऽलोपः स्वरेऽबहुत्वे ॥

सणोऽकारस्य लोपो भवति अबहुत्वे स्वरे । अधुक्षाताम्, अधुक्षा- थाम्, अधुक्षि । स्वर इति किम् ? अधुक्षत । अबहुत्वमिति किम् ? अधुक्षन्त, अकारान्तत्वाच्चलोपो न स्यात् ॥

## २९८ । दरिद्रातेरसार्वधातुके ॥

तिपा धातुरेव निर्दिष्टः । दरिद्रातेरसार्वधातुकमात्रेऽन्तस्य लोपो भवति । दरिद्रयति, अदरिद्रि, दरिद्रीवर्त्तते, दरिद्र्यते, दरिद्र्यात् । कथं दरिद्रियम् ? "आतश्चनोरिच" इति परत्वाद्वेति मयट्कल्पसुत्या युण्वो- रमिटि सनि च न स्यात्—दरिद्राणम्, दरिद्रायकः, दिदरिद्रासकः ॥

## २९९ । ग्रश्चिमसृजोर्धुटि ॥

मस्जिनशोर्धुटि परेऽन्तस्य लोपो भवति । मङ्क्ता, मङ्क्ष्यति । नंष्टा, नङ्क्ष्यति । नागमेऽन्तरङ्गत्वात् सस्य तृतीये सति पश्चाल्लोपः । धुटीति किम् ? मज्जयते ॥

## ३०० । यन्योकारस्य ॥

धातोरोकारस्य लोपो भवति यनि परे । द्यति, स्यति । यनीति किम् ? अपोयते, परनिमित्तादेशः पूर्वस्मिन्न स एव ॥

## ३०१ । आकारस्योसि ॥

धातोराकारस्य लोपो भवति उसि परे । अदधुः, अदुः, अधुः, अस्थुः ॥

## ३०२ । सन्ध्यक्षरे च ॥

धातोराकारस्य लोपो भवति सन्ध्यक्षरे च परतः । ध्यतिरे, व्यतिले ॥

## ३०३ । अस्तेः सौ ॥

अस्तेः सौ परेऽन्तस्य लोपो भवति असि । कथम् आशीः लाक्षणिकत्वात् । आशम्, आशास्यम् इति सस्य तृतीयेऽपि ह उच्चारणस्याभेदात् ।

ह एकारे वक्तव्यः—व्यतिहे । कथम् ईहामासे ? तिपा धातुस्वरूपनिर्देशात् ॥

## ३०४ । असन्ध्यक्षरयोरस्य तौ तल्लोपश्च ॥

इह धातुप्रस्तावेऽकारसन्ध्यक्षरयोः परयोरकारस्य तावकारसन्ध्यक्षरे वर्णौ भवतः यथासंख्यम्, तयोश्च निमित्तभूतयोर्लोपो भवति । चिकीर्षति, दीव्यन्ति, पच्यन्ते, पचे । अस्येति किम् ? यान्ति । असन्ध्यक्षरयोरिति किम् ? पचति । अस्य लोप इति सिद्धे तौ तल्लोपश्चेति किम् ? पच्यन्ते, नलोपो माभूत् ॥

## ३०५ । दीधीवेव्योरिवर्णयकारयोः ॥

दीधीवेव्योरन्तस्य लोपो भवति इवर्णयकारयोः परयोः । आदीधिता, आवेविता, आदीधीत, आवेवीत, आदीध्यते, आवेव्यते । यथासंख्यमिष्टेति । न तु प्रत्येकं धातवो द्विवचनात् ॥

## ३०६ । नामि व्यञ्जनान्तादायेरादेः ॥

नाम्यन्ताद् व्यञ्जनान्तादायेरादेर्लोपो भवति । अग्नीयते, रैयते, विदुष्यते, अनुडुह्यते आह्नयीवाचरति—नित्यत्वात् पुंवद्भावः । आह्नायते । सन्निपातलक्षणं स्यादिति नामिग्रहणम् ॥

## ३०७ । गमहनजनखनघसामुपधायाः स्वरादावनण्यगुणे ॥

गमादीनामुपधायाः स्वरादावण्वर्जितेऽगुणे लोपो भवति । जग्मतुः, जग्मुः, जघ्नतुः, जघ्नुः । जज्ञे, जज्ञाते—जज्ञिरे, चख्नतुः, चख्नुः; जक्षतुः, जक्षुः । स्वरादाविति किम्? गम्यते । अनणीति किम्? अगमत्, अघसत् । अगुण इति किम्? गमिष्यति ॥

## ३०८ । कारितस्यानामिड्विकरणे ॥

आमृवड्विकरणादन्यस्मिन् प्रत्यये कारितस्य लोपो भवति । अचीकरत्, अचीकमत्, अररक्षत्, कार्यते, कारणा, उद्यादि, यत्वादयो बाध्यन्ते । अनामिड्विकरण इति किम्? कारयामास, कारयिता, कारयति, अहं कारये । तद्भावादन्तरङ्गत्वाच्च गुणः ॥

## ३०९ । यस्यापत्यप्रत्ययस्या स्वरपूर्वस्य यिन्आयिषु ॥

यिन्आयी द्वौ, बहुवचनं गणार्थम् । यस्येत्यकार उच्चारणार्थः, अपत्यप्रत्ययसम्बन्धिनो यस्यास्वरपूर्वस्य यिन्आयितद्धितानां स्वरव्यञ्जनकारेषु लोपो भवति । गार्गीयति, गार्गीयते । गार्ग्ये साधुर्गार्ग्य इति श्रुतेरभेदात् । कुरोर्नकारादेश्च ष्ण्यादपत्यमात्रे गर्गादित्वात् यः ।

कौरव्यस्यापत्यमितीन् कौरविः, नैषादिः । गार्ग्यस्यायं गार्गीयः। गार्गीणां समूहो गार्गकम्, समूहेऽकञ् । कथं राजन्यकम् ? गणकृतमनित्यमिति । गार्गी स्यात् , गार्गी स्त्री । गर्गो अनातुस्वर इति किम् ? गार्ग्यायणः । यिन् आयिन्विति किम् ? गार्ग्य माचष्टे—गार्ग्ययति। यिन्आयीन्विति न्याय्यः पाठः, तद्धितानामाकृतिप्रधानत्वात् । तथा च—सोमो देवताऽस्याः सौमी ऋक् च दृश्यते । व्यस्वरपूर्वस्येति किम् ? आत्रेयीयति, आत्रेयायते, आत्रेयीस्यात् । आत्रेयी स्त्री ।

"मत्स्यस्य यस्य स्त्रीकार ईये चागस्त्यसूर्य्ययोः ।
तिष्यपुष्ययोर्नक्षत्रे अनि यस्य विभञ्जनात् ।।"

मत्सी, अगस्त्यस्यापत्यमित्यण् आगस्त्यस्यायम् आगस्तीयः, आगस्त्यस्येयम् आगस्ती । सूर्य्यस्यायं सौर्य्यः, तत्र भवः सौरीयः, सूर्य्यस्येयं सौरी दिक् । तैषमहः, तैषी रात्रिः, पौषमहः, पौषी रात्रिः, गवात् पृथगाविरुद्धरार्थः ॥

## ३१० । नलोपश्च ॥

नकारो लुप्यते येन स नलोपो यांगः । अर्थाद् यिन् आय्योर्नलोप एव करणीयः । विलुप्यति, विलुप्यते, एवं राजीयति, पयीयति, पुंसीत्यपि । नियमः किम् ? दीव्यतीत्यपि । कथं चतुर्य्यति, अनुडुह्यति, गीर्य्यति, धूर्य्यति, शब्दाश्रयत्वान्नियमः । सर्पिष्यति, धनुष्यति, एवं स्यादेवं । गोमत्यतीति क्विप् , कथं गोमान् , पचन् , पुमान्? यिन्आय्योर्धुटि प्रत्ययलोपस्यानित्यत्वानुदनुबन्धशन्तृङ् पुंसामेवेति ।

## ३११ । व्यञ्जनाद्दिस्योः ॥

धातोर्व्यञ्जनाद् दिस्योर्लोपो भवति । अधोक्, अलेट् । कथं दंषि ? साहचर्य्यात् ॥

## ३१२ । यस्यानानि ॥

यस्येत्यकार उच्चारणार्थः । व्यञ्जनात्परस्य धातोर्यस्यानानि प्रत्यये

परे लोपो भवति । वेभिदिता । हशदमिच्छत्याचरति वा—हशादिता । भिषज्यधातुः कण्ड्वादौ—भिषजिता । यिन्व्याप्योर्नेच्छन्त्येके, तेनोभय-प्रमाणत्वात् विकल्प इति । वक्ष्यमाणलोपोक्तेर्द्वियकारपाठाद्वा मव्यादौ-नामदोषः । मव्यिता, सूर्क्ष्यिता, ईर्ष्यिता । व्यञ्जनादिति किम् ? लोलू-यिता । इनो लोपेऽयादेशे च—मोमूत्रिता, शाशयिता । धातोर्यस्येति किम् ? पच्यते । अननीति किम् ? पापच्यते ॥

## ३१३ । अस्य च लोपः ॥

धातोरकारस्यानि प्रत्यये परे लोपो भवति । चिकीर्षिता । कुसुमं मगधं कर्ता—कुसुमिता, मगधिता । विषयसप्तम्यपि—कण्डूः, लोलूः, यायावरः, तेनास्य च लोपे यलोपः स्यात् ॥

## ३१४ । सिचो धकारे ॥

सिचो धकारे परे लोपो भवति । अलविढ्वम्, अच्योढ्वम् । अयाध्वमिति सस्य तृतीयेऽपि ध्व उच्चारणस्याभेदात् ॥

## ३१५ । धुटश्च धुटि ॥

धुटः परस्य सिचो लोपो भवति धुटि परे । अभित्त, अभित्थाः । धुट इति किम् ? अमंस्त । धुटीति किम् ? अभित्साताम् ॥

## ३१६ । ह्रस्वाच्चानिटः ॥

ह्रस्वात्परस्यानिटः सिचो लोपो भवति धुटि परे । अकृत, अकृथाः, समस्थित, आहत । ह्रस्वादिति किम् ? अच्योष्ट । मेढ: परस्य चेति दृष्टार्थम्, तेन अवारिष्टाम्, व्यद्योतिष्ट ॥

## ३१७ । इटश्चेटि ॥

इटः परस्य सिचो लोपो भवति ईटि परे । अलावीत्, अकोषीत् । इट इति किम् ? अभैत्सीत् । ईटीति किम् ? अकनिषम् ।

## ३१८ । स्कोः संयोगाद्योरन्ते च ॥

धातोः संयोगाद्योः सकारककारयोर्लोपो भवति धुट्यन्ते च। आरिप्सते, आलिप्सते, आचष्टे। भ्रष्टा, भ्रक्ष्यति, त्वक्षू—त्वष्टिः, कौ नेट्। अन्ते चेत्युत्तरार्थम्, भाषायामपि चेक्रीयितलुगन्तमित्येके—अबाभ्रट्। स्कोरिति किम्? अकार्ष्टाम्, मृज—अमार्ट्। धुट्यन्त इति किम्? भृज्जते, आचक्ष्महे॥

## ३१९। चवर्गस्य किरसवर्णे॥

चवर्गस्य किर्भवति असवर्णे धुट्यन्ते च। वक्ता, योक्ता, अनेनेक्, अवेवेक्। असवर्ण इति किम्? उच्छति, उज्झति॥

## ३२०। हो ढः॥

धातोर्हकारस्य ढो भवति धुट्यन्ते च। लेढा, लेक्ष्यति, अलेट्॥

## ३२१। दादेर्घः॥

धातोर्दादेरवयवस्य हस्य घो भवति धुट्यन्ते च। अधोक्ष्यत्, अधोक्। कथं दोग्धा? आद्यन्तवद्भावात्॥

## ३२२। नहेर्धः॥

नहेर्हस्य धो भवति धुट्यन्ते च। नद्धा, नत्स्यति, अनानत्॥

## ३२३। भृजादीनां षः॥

भृज्जादीनामन्तः षो भवति धुट्यन्ते च। भ्रष्टा, भ्रक्ष्यति, स्रष्टा, स्रक्ष्यति, मार्ष्टा, अमार्ट्, मार्क्ष्यति। यज—यष्टा। राजृ—राष्टिः। भ्राजृ—भ्राष्टिः। भ्रस्जेर्भृजिरिहोपलक्षणम्। निपातनस्येष्टविषयत्वात् सम्प्रसारणादन्यत्र विभाषा—भ्रष्टा, भर्ष्टा, भ्रज्जनम्, भर्ज्जनम्। सम्प्रसारणे तु—भृज्जति, भृज्जते॥

## ३२४। छशोश्च॥

छशोश्च षो भवति धुट्यन्ते च। प्रष्टा, प्रक्ष्यति। क्रोष्टा, क्रोक्ष्यति, अचाक्रोट्। निमित्ताभावाद्, द्विर्वा पाठः॥

## ३२५ । भाषितपुंस्कं पुंवदायौ ॥

भाषितपुंस्कं पुंवद्भवति आयौ परे । ब्राह्मणीवाचरति—ब्राह्मणायते, श्येनी—श्येतायते, हरिणी—हरितायते, एनी—एतायते, लोहिनी—लोहितायते । श्येतैतहरितलोहितेभ्यस्तो न इति नदादौ । स्वर्थेतु न भवति गौणत्वात्—अलोहिनी लोहिनी भवति—लोहिनीयते । इत्यन्ये । पुमानिव पुंवत् स्त्रीति लोकतः सिद्धम्, तत्राधिकारत्वात् अमुख्यमपि नपुंसकं पुंवदिति, तेनातिनूयते । भाषितः पुमान्येनार्थ इति समासात्—द्रोणीयते । कथं श्वश्रूयते ? श्वशुरस्य श्वश्रूत्वतो निपातनात् नात्रिभावत्वम् श्वशुरत्वम् अपि तु विशिष्टमेव रूपम् । कथं गर्भीयते शालिः, अन्तर्वर्त्तित्वमात्रविवक्षयेति ॥

## ३२६ । आदातामाथामादेरिः ॥

अकारात्परयोरातामाथामित्येतयोरादेरिर्भवति । पचेताम्, पचेथाम् । अकारादिति किम् ? व्यत्यपाताम् ॥

## ३२७ । आते आथे इति च ॥

अकारात्परयोराते आथे इत्येतयोरादेरिर्भवति । पचेते, पचेथे । अविकृतनिर्देशात् स्वरे विकृतिर्नास्तीति । इति चैवं अकारे प्रश्लेषः, तेन—पचावहे आवामिति स्वरे विकृतिर्न स्यात् ॥

## ३२८ । याशब्दस्य च सप्तम्याः ॥

अकारात्परस्य याशब्दस्य सप्तम्या इर्भवति । पचेत्, पचेताम्, पचेः । अकारादिति किम् ? अद्यात् ॥

## ३२९ । याम्युसोरियमियुसौ ॥

अकारात्परयोर्याम्युसोरियमियुसौ भवतः यथासंख्यम् । पचेयम्, पचेयुः । कथम् आह, आहतुः, आहुः । आत्थ, आहथुः ? ब्रुवस्यादिषु पञ्चसु निपाता वा । तथा विदेर्णवसु—वेद, विदतुः, विदुः । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म ॥

## ३३० । शमादीनां दीर्घो यनि ॥

शमादीनां दीर्घो भवति यनि परे । शाम्यति, दाम्यति । मदीपर्य्यन्तः शमादिः । यनीति किम् ? शम्यते ॥

## ३३१ । ष्ठिवुक्लम्वाचमामनि ॥

एषामनि परे दीर्घो भवति । ष्ठीवति, क्लामति, आचामति । आङिति किम् ? विचमति, चमति ॥

## ३३२ । क्रमः परस्मै ॥

क्रमः परस्मैपदेऽनि दीर्घो भवति । क्रामति । कथं क्राम ? हेर्लोपात् । परस्मै इति किम् ? पराक्रमते, उपक्रमते ॥

## ३३३ । गमिष्यमां छः ॥

सामान्यमनुवर्त्तते, एषामन्तस्य छो भवति अनि परे । गच्छति, सङ्गच्छते, इच्छति, यच्छति, आयच्छते ॥

## ३३४ । पः पिबः ॥

पाधातोरनि परे पिबादेशो भवति । पिबति । अदन्तो वा । अनि पानार्थ इति किम् ? पै शोषे—पायति ॥

## ३३५ । घ्रो जिघ्रः ॥

घ्राधातोरनि परेजिघ्रादेशो भवति । जिघ्रति ॥

## ३३६ । ध्मो धमः ॥

ध्माधातोरनि परे धमादेशो भवति । धमति ॥

## ३३७ । स्थस्तिष्ठः ॥

स्थाधातोरनि परे तिष्ठादेशो भवति । तिष्ठति ॥

## ३३८ । म्नो मनः ॥

म्नाधातोरनि परे मनादेशो भवति । मनति ॥

## ३३९ । दाणो यच्छः ॥

दाण् धातोरनि परे यच्छादेशो भवति । यच्छति ॥

## ३४० । दृशेः पश्यः ॥

दृशे रनि परे पश्यादेशो भवति । पश्यति ॥

## ३४१ । अर्तेॠच्छः ॥

अर्तेरनि परे ऋच्छादेशो भवति । ऋच्छति । तिब निर्देशार्थं एव ।

## ३४२ । सर्तेर्धावः ॥

सर्तेरनि परे धावादेशो भवति । धावति । ननु धातु गतावर्थे शीघ्र अभिधाने यथा स्यादिति वचनम्, तेन—प्रियामनुसरति ॥

## ३४३ । शदेः शीयः ॥

शदेरनि परे शीयादेशो भवति । शीयते ॥

## ३४४ । सदेः सीदः ॥

सदेरनिपरे सीदादेशो भवति । सीदति ॥

## ३४५ । जा जनेविकरणे ॥

जनेर्विकरणे आदेशो भवति । जनी—जायते । यदि तु ई वा स्यात्—जायते, जन्यते ॥

## ३४६ । ज्ञश्च ॥

ज्ञश्चविकरणे आदेशो भवति । जानाति ॥

## ३४७ । पूवादीनां ह्रस्वः ॥

पूवादीनां विकरणे ह्रस्वो भवति । पुनाति, लुनाति । ल्वी येत्यतो लादिप्वादिश्चवधिहृतये वृत् । पूङस्तु—पवते । भूङ्—भवते ॥

## ३४८ । उतो वृद्धिर्व्यञ्जनादौ गुणिनि सार्वधातुके ॥

धातोरुतो वृद्धिर्भवति व्यञ्जनादौ गुणिनि सार्वधातुके परे। रौति, रौषि, रौमि एवं नौति, स्तौति। कथं जुहोति? जुहोतिरिति निर्देशात्। धातोरिति किम्? सुनोति, तनोति॥

### ३४९। ऊर्णोतेर्गुणः॥

परयोगेनात्र वा गम्यते। ऊर्णोतेर्व्यञ्जनादौ गुणिनि सार्वधातुके परे गुणो भवति वा। प्रोर्णोति, प्रोर्णौति॥

### ३५०। ह्यस्तन्यां च॥

ऊर्णोतेर्व्यञ्जनादौ गुणिनि ह्यस्तन्यां च नित्यं गुणो भवति। प्रौर्णोत्, प्रौर्णोः। चकारोऽनुक्तसमुच्चयार्थः, तेनेटि वा स्यात्—प्रोर्णविता, प्रोर्णुविता, प्रौर्णवीत्, प्रौर्णुवीत् इत्यपि स्यात्॥

### ३५१। तृहेरिड् विकरणात्॥

प्रकृतत्वात्सार्वधातुकमनुवर्त्तते। तृहेर्विकरणात्पर इडागमो भवति व्यञ्जनादौ गुणिनि सार्वधातुके परे। तृणेढि, तृणेक्षि, तृणेह्मि॥

### ३५२। ब्रुव ईड् वचनादिः॥

ब्रुव ईड् भवति वचनादिर्भूत्वा व्यञ्जनादौ गुणिनि सार्वधातुके। ब्रवीति, ब्रवीतु, अब्रवीत्।
चर्करीतान्नेति केचित्—बोभवीति, बोभोति॥

### ३५३। अस्तेर्दिस्योः॥

अस्तेः परयोर्दिस्योर्वचनादिरीड् भवति। आसीत्, आसीः। साहचर्यात्—त्वमसि। तिपा धातुस्वरूपनिर्देशात्—अभूत्॥

### ३५४। सिचः॥

सिचः परयोर्दिस्योर्वचनादिरीड् भवति। अकार्षीत्, अकार्षीः। आगमशास्त्रमनित्यमिति केचित्—मा भैः॥

## ३५५ । रुदादिभ्यश्च ॥

रुदादिभ्यः परयोर्दिस्योर्वचनादिरीड् भवति । अरोदीत्, अरोदीः । अस्वपीत्, अस्वपीः । अश्वसीत्, अश्वसीः । प्राणीत्, प्राणीः । अजक्षीत्, अजक्षीः । पञ्चैते रुदादयः ॥

## ३५६ । अदोऽट् ॥

अदः परयोर्दिस्योर्वचनादिरड् भवति । आदत्, आदः । रुदादेरपि केचित्—अरोदत्, अरोदः ॥

## ३५७ । सस्य सेऽसार्वधातुके तः ॥

सस्य तकारो भवति असार्वधातुकविषये से । जिघत्सति, वत्स्यति । असार्वधातुक इति किम् ? वस्से ॥

## ३५८ । अणिवचेरोदुपधायाः ॥

वचेरुपधाया ओद् भवति अणि परे अवोचत्, अवोचः । कथं पुलकवाचः ? असार्वधातुक इति विशेषणात्, एवमुत्तरत्रापि ॥

## ३५९ । अस्यतेः स्थोऽन्तः ॥

अस्यतेरन्तः स्थो भवति अणि परे । अपास्थत् ॥

## ३६० । पतेः पप्तिः ॥

पतेः पप्तिर्भवति अणि परे । अपप्तत् । श्वेरद् वक्तव्यः । अश्वत् ॥

## ३६१ । कृपे रो लः ॥

कृपे रेफस्य लकारो भवति । कल्प्ता, कल्पयति, कल्पः । कथं क्लृप्तः, क्लृप्तिरिति ? रश्रुतेर्लश्रुतिरिति—वक्तव्यं वा । इह ऋकारस्थस्य रेफस्यावर्णात्मन ऌकारस्थो लकारोऽवर्णात्मान्तरतम्याद् भवन् ऌकारस्य ऌकार एव स्याद् अव्यतिरिक्तत्वात् । कथं कृपा ? लाक्षणिकत्वात् । कृपणादयो ह्यौणादिका इति ॥

## ३६२। गिरतेश्चेक्रीयिते ॥

गिरते रेफस्य लकारो भवति। चेक्रीयिते परे। गर्हितं गिरति—निजेगिल्यते ॥

## ३६३। वा स्वरे ॥

गिरते रेफस्य लत्वं भवति वा स्वरे परे। गिरति, गिलति। निगरणम्, निगलनम्। निगाल्यत इतीनः स्थानिवद्भावात्। गलः प्राण्यङ्गे, विषे तु गर इति। कपिरिकादेर्लोकतः सिद्धिः,—कपिरिका, कपिलिका, रोहिणी, लोहिणी। रोम, लोम। पर्य्यङ्कः, पल्यङ्कः। परिघः, पलिघः। परियोगः, पलियोगः। चूडा, चूला। वडभी, वलभी। जडम्, जलम्। जडधिः, जलधिः। डलयोरेकत्वम्। तथोपसर्गस्यायतौ-परायते, पलायते। निर्दुरोर्वा स्यात्—निरयणम्, निलयनम्। दुरयणम्, दुलयनम्। प्रतिव्यवहिते नेष्टम्—प्रत्ययते ॥

## ३६४। तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्व सिध्वोः ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादिचतुर्थत्वं भवति अन्तस्तस्मात् सकारे ध्वे च परतः। घुघुक्षति, अघुग्ध्वम्, अघुक्षत्, अघूढ्वम्, बुभुत्सते, अभुद्ध्वम्। धीप्सति, भोत्स्यते, निर्घोक्ष्यते, इत्यादयस्तद्भावात्। सिध्वोरिति किम्? दिदम्भिषति, दुग्धः, दुग्धवान्। पुनर्धातुग्रहणमिह सुखार्थं च ॥

## ३६५। लोपे च दिस्योः ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादेश्चतुर्थत्वं भवति दिस्योर्लोपे च सति। अधोक्, अजोघोट्, अबोभोत्। दिस्योरिति किम्? प्रदुग्धाः, वर्णाश्रयत्वात् प्रत्ययलोपलक्षणं नास्तीति ॥

## ३६६। तथोश्च दधातेः ॥

दधातेर्धान्तस्यादेश्चतुर्थत्वं भवति तयोः सिध्वोश्च परतः । धत्तः, धत्थः, धद्धे, त्सेधान्तस्येति किम् ? दधाति, दधासि ॥

इति दौर्गसिंह्यां वृत्तावाख्याते षष्ठः पादः समाप्तः ॥

---

## ३६७ । इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः ॥

धातोर्विहितस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिडागमो भवति । भविता; भविष्यति, भवितव्यम् । पुनर्धात्वधिकारो धातुसंज्ञाश्रितासार्वधातुकार्थः, तेन—गृह्णाति, वृणोति, जुगुप्सते, मीमांसते । असार्वधातुकस्येति किम् ? शेते, वेत्ति । "टकार इटि च" इत्यादौ विशेषार्थः । व्यञ्जनादेरिति किम् ? बभूव । अयकारादेरिति किम् ? भूयात् ॥

## ३६८ । स्नुक्रमिभ्यां परस्मै ॥

परस्मैपदविषये यौ स्नुक्रमी ताभ्यां परस्यासार्वधातुकस्यव्यञ्जनादेरयकारादेरादिरिडागमो भवति । प्रस्नविता, प्रस्नविष्यति, क्रमिता, क्रमिष्यति, चिक्रमिषति । परस्मैपदविषय एवेति नियमात्—व्यक्रंस्यते, प्रचिक्रंसते, उपचिक्रंसते प्रोपाभ्यां क्रमी इत्यादिरात्मनेपदी । प्रस्नवितव्यम्, प्रक्रमितव्यम् । इत्यसमानविषयत्वादिट् । कथं प्रक्रन्ता, उपक्रन्ता ? आत्मनेपदविषयस्य क्रमेः कर्त्तरि कृतीट्प्रतिषेधः । प्रस्नवितेवाचरति—प्रस्नवित्रीयते, आयिरयमात्मनेपदी ॥

## ३६९ । रुदादेः सार्वधातुके ॥

रुदादेर्गणात् सार्वधातुके व्यञ्जनादेरयकारादेरादिरिडागमो भवति । रोदिति, रुदितः, स्वपिति, स्वपितः, श्वसिति, श्वसितः, प्राणिति, प्राणितः, जक्षिति, जक्षितः । रुद्यत इति परत्वाद् यणा भवितव्यम् ॥

"रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।

अन्तिरिति विज्ञेयो रुदादिः पञ्चको गणः ॥"

## ३७० । ईशः से ॥

ईशः सादौ सार्वधातुक आदिरिडागमो भवति । ईशिषे, ईशिष्व ॥

## ३७१ । ईड्जनोः सध्वे च ॥

ईड्जनोः सध्वे च सार्वधातुके परे आदिरिडागमो भवति । ईडिषे, ईडिष्व, ईडिध्वे, ईडिध्वम् । व्यतिजज्ञिषे, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम् । जन जनने, न जनी—यना व्यवहितत्वात् । सध्वे चेति पठितत्वादन्याः रेव ईशिरनु कृष्यते—ईशिध्वे, ईशिध्वम् ॥

## ३७२ । से गमः परस्मै ॥

परस्मैपदस्य यो गमिस् तस्मात् स आदिरिडागमो भवति । गमिष्यति, जिगमिषति, अधिजिगमिष त्वम् । जिगमिषा, जिगमिषुः, जिगमिषितव्यम् । परस्मैपदस्येति किम् ? अधिजिगांसते, सङ्गंसीष्ट । केचिद् योगं विभज्यात्मनेपद इटमिच्छन्ति । तन्मतेन—सञ्जिगमिषुः, अधिजिगमिषितव्यम् । अनिङ्गमः कृतीत्येके, तदा अधिजिगांसुरिति ॥

## ३७३ । हन्नृदन्तात् स्ये ॥

हन्तेर् ऋदन्ताच्च धातोः स्ये परे आदिरिडागमो भवति । हनिष्यति, हनिष्यमाणः । करिष्यति, करिष्यमाणः । स्वरिष्यमाणः, स्वरिष्यति, अस्वरिष्यत् ॥

## ३७४ । अञ्जेः सिचि ॥

अञ्जेः सिच्यादिरिडागमो भवति । आञ्जीत्, आञ्जिषाम् । ऊदनुबन्धत्वाद् विकल्पे प्राप्ते नित्यार्थं वचनम् ॥

## ३७५ । स्तुसुधूञ्भ्यः परस्मै ॥

एभ्यः परस्मैपदे सिच्यादिरिडागमो भवति । प्रास्तावीत्, प्रासावीत्, प्राधावीत् । परस्मा इति किम् ? प्रास्तोष्ट, प्रासोष्ट, प्राधोष्ट । धूञ् कम्पनेऽपि अधावीत् ॥

## ३७६ । यमिरमिनम्यादन्तानां सिरन्तश्च ॥

एषां परस्मैपदे सिच्यादिरिडागमो भवति । सिरन्तो भवति । अयंसीत्, अरंसीत्, अनंसीत् । अयासीत्, अयासिष्टाम्, अम्लासीत्, अम्लासिष्टाम् । अदरिद्रासीत्, अदरिद्रासिष्टाम् ? अन्तग्रहणात् दरिद्रातेरालोपो न स्यात् । कथम् अदरिद्रीत्, अदरिद्रिष्टाम् ? आगमस्यानित्यत्वाद् विभाषैव ॥

## ३७७ । स्मिङ्पूङ्ऋञ्ज्वशूकृगृदृधृप्रच्छां सनि ॥

एषां सनीडागमो भवत्यादिः । स्मिङ्—सिस्मयिषते । पूङ्—पिपविषते । पूञस्तु—पुपूषति । ऋ—अरिरिषति । अञ्जु—अञ्जिजिषति । अशू—अशिशिषते । कृ—चिकरिषति । गृ—जिगरिषति । दृङ्—दिदरिषते । धृङ् अवस्थाने—दिधरिषते, प्रच्छ—पिपृच्छिषति ।

अविकृतस्वरिताः कृ गृ धृ तौदादिकाः । कॄञ् हिंसायां—चिकरिषति, चिकीर्षति । गॄ शब्दे—जिगरिषति । जिगीर्षति । धृञ् धारणे—दिधरिषति, दिधीर्षति । कृप्रोर्ज्ञापकस्य सविकल्पत्वाद् अन्येषामृवर्णानां वा स्यादेव । कथं प्रावुवूर्षते, प्राविवरिषते, संवुवूर्षति, संविवरिषति ? वृङ्वृञोर्ग्रहानिर्दिष्टस्यानित्यत्वात् ॥

"वृद्वृङ्वृञां समीड् वा स्यादात्मने च सिजाशिषोः ।
संयोगादेरृतो वाच्यः गुडसिद्धो बहिर्भवः ॥"

तॄ—अतरिष्ट, अतीर्ष्ट । तरिषीष्ट, तीर्षीष्ट । वृ—अवरिष्ट, अवृत । वरिषीष्ट, वृषीष्ट । स्वृ, अस्वरिष्ट, अस्वृत, स्वरिषीष्ट स्वृषीष्ट । समस्कृत, संस्कृषीष्ट असिद्धं बहिरङ्गमन्तरङ्गे इति ॥

## ३७८ । इटो दीर्घो ग्रहेरपरोक्षायाम् ॥

ग्रहेः परस्येटो दीर्घो भवति न तु परोक्षायाम् । ग्रहीता । अग्रहीत्-इट्स्यात् सिचो लोपः स्यात्, अस्य च दीर्घो न स्यात् । कथं ग्राहिता,

प्राप्नोति ? इडादिष्टोऽस्मिंस्तस्मात् । अपरोक्षायामिति किम् ? अस्तरिव, अस्तरिम ॥

"ऋदुवृङ्वृञोऽपि वा दीर्घो न परोक्षाशिषोरिटः ।
न परस्मै सिचि प्रोक्त इति योगविभञ्जनात् ॥"

तृ—तरिता, तरीता । वृङ् वृञ् वा—वरिता, वरीता । वर्जने तु—विशशरिव, विशशरिम, ववरिथ, तरिषीष्ट, वरिषीष्ट, अतारिष्टाम्, अवारिष्टाम् ॥

## ३७९ । अनिडेकस्वरादातः ॥

एकस्वरादातोराकारान्तात् परमसार्वधातुकमनिड् भवति । दाता, दास्यति, दातव्यम् । एकस्वरादिति किम् ? दरिद्रिता ॥

"अनात्मनेपदस्थात्तु वृतादेरिड् न स्ये सनि ।
श्वस्तन्यां च कृपेनैव कृतादेर्वापि सेऽसिचि ॥"

वृतु—वर्त्स्यति विवृत्सति । वृधु—वर्त्स्यति, विवृत्सति । शृधु—शर्त्स्यति, शिशृत्सति । स्यन्दू—स्यन्त्स्यति, सिस्यन्त्सति । कृपू—कल्प्स्यति, चिक्लृप्सति, कल्प्तासि । कृपेः श्वस्तन्यां वा इत्यादितम् कृती—कर्त्स्यति, कर्तिष्यति । एवं चृती हिंसायाम्—चर्त्स्यति, चर्तिष्यति । उछृदिर्—छर्त्स्यति, छर्दिष्यति । उतृदिर्—तर्त्स्यति, तर्दिष्यति । नृती—नर्त्स्यति, नर्तिष्यति । असिचीति किम् ? अकर्तीत् ॥

## ३८० । इवर्णादश्विश्रिडीङ्शीङः ॥

इवर्णान्तात् श्विश्रिडीङ्शीङ्वर्जितादेकस्वरात् परमसार्वधातुकमनिड् भवति । चेता, चेष्यति, नेता, नेष्यति । अश्विश्रिडीङ्शीङ इति किम् ? श्वि—श्वयिता । श्रि—श्रयिता । डीङ्—डयिता । शीङ्—शयिता । एकस्वरादिति किम् ? अवधीधिता, अवेविता ॥

## ३८१ । उतोऽयुरुणुस्नुक्षुक्ष्णुवः ॥

उकारान्तादेकस्वराद् युरुणुस्नुक्षुक्ष्णु वर्जितात् परमसार्वधातुकमनिड् भवति । होता, स्तोता । अयुरुणुस्नुक्षुक्ष्णुव इति किम् ?

यविता, रविता नविता, स्नविता, स्नविता, क्ष्णविता । उत इति किम् ? नविता । एकस्वरादिति किम् ? प्रोर्णविता ॥

## ३८२ । ऋतोऽवृङ्वृञः ॥

ऋदन्तादेकस्वराद् वृङ् वृञ् वर्जितात् परमसार्वधातुकमनिड् भवति । कर्ता, हर्ता । अवृङ् वृञ इति किम् ? वरिता । ऋत इति किम् ? कॄ करिता । एकस्वरादिति किम् ? जागरिता ॥

## २८३ । शकेः कात् ॥

शकेः कान्तादनिड् भवति । शक्लृ शक्तौ—शक्ता, शक्ष्यति ॥

## ३८४ । पचिवचिसिचिरिचिमुचेश्चात् ॥

एभ्यः पञ्चभ्योऽनिड् भवति । डुपचष् पाके, पच व्यक्तीकरणे वा-पक्ता । वच वचि—वक्ता । सिच—सेक्ता । रिचिर —रेक्ता । मुच्लृ—मोक्ता ॥

## ३८५ । प्रच्छेश्छात् ॥

प्रच्छेश्छान्तादनिड् भवति । प्रष्टा, प्रक्ष्यति ॥

## ३८६ । युजिरुजिरञ्जिभुजिभजिभञ्जिसञ्जित्यजिभ्रसजियजिमस्जिसृजिनिजिविजिस्वञ्जेजात् ॥

एभ्यः पञ्चदशभ्योऽनिड् भवति । युजिर् युजि—योक्ता । रुजो—रोक्ता । रञ्ज—रङ्क्ता । भुज भुजो—भोक्ता । भज—भक्ता । भञ्ज—भङ्क्ता । सञ्ज—सङ्क्ता ॥ त्यज—त्यक्ता । भ्रस्ज—भ्रष्टा । यज—यष्टा । टुमस्जो—मङ्क्ता । सृज—स्रष्टा । निजिर्—नेक्ता । विजिर्—वेक्ता । न त्वोविजी, ईदनुबन्धबलात् । स्वञ्ज—स्वङ्क्ता ॥

## ३८७ । अदितुदिनुदिक्षुदिस्विद्यतिविद्यतिवि-

न्दतिविनत्तिछिदिभिदिहदिशादिसदिपदिस्क-
न्दिखिदेर्दात् ॥

एभ्यः षोडशभ्योऽनिड् भवति । अद—अत्ता, तुद—तोत्ता, नुद—नोत्ता । क्षुदिर्—क्षोत्ता, स्विद—स्वेत्ता, विद सत्तायाम्, विद्लृ लाभे, विद विचारे वा—वेत्ता । छिदिर् छेत्ता, भिदिर्—भेत्ता, हद—हत्ता, शद्लृ—शत्ता, पद—पत्ता, स्कन्दिर—स्कन्त्ता, खिद दैन्ये, खिद परिघाते वा—खेत्ता ॥

३८८ । राधिरुधिक्रुधिक्षुधिबन्धिशुधिसिध्य-
तिबुध्यतियुधिव्याधिसाधेर्धात् ॥

एभ्य एकादशभ्योऽनिड् भवति । राध—राद्धा । रुधिर्—रोद्धा, क्रुध—क्रोद्धा । क्षुध—क्षोद्धा । बन्ध—बन्द्धा । शुध—शोद्धा, षिधु—सेद्धा, बुध अवगमने—बोद्धा, युध—योद्धा, साध—साद्धा ।

३८९ । हनिमन्यतेर्नात् ॥

आभ्यामनिड् भवति । हन—हन्ता । मन ज्ञाने—मन्ता । कथम् अमधीत्? अयं नान्तः ॥

३९० । आपितपितिपिस्वपिवपिशपिछुपिक्षिपि-
लिपिलुपिसृपेः पात् ॥

एभ्य एकादशभ्योऽनिड् भवति । आप्लृ—आप्ता, तप धूप सन्तापे, तप ऐश्वर्ये वा—तप्ता, तिपृ—तेप्ता, ञिष्वप्—स्वप्ता । डुवप—वप्ता, शप—शप्ता, छुप—छोप्ता, क्षिप—क्षेप्ता, लिप—लेप्ता । लुप्लृ—लोप्ता । सृप्लृ—सर्प्ता । कथं तर्प्ता, दर्प्ता? रधादित्वाद् विभाषेट् ॥

३९१ । यभिरभिलभेर्भात् ॥

एभ्यस्त्रिभ्योऽनिड् भवति । यब्धा, रब्धा, लब्धा ॥

३१२ । यमिरमिनमिगमेर्मात् ॥

एभ्यश्चतुर्भ्योऽनिड् भवति । यन्ता, रन्ता, नन्ता, गन्ता ॥

३१३ । रिशिरुशिक्रुशिलिशिविशिदिशिदृशिस्पृशिमृशिदन्शेः शात् ॥

एभ्यो दशभ्योऽनिड् भवति । रिश रुश हिंसायाम्—रेष्टा, रोष्टा । क्रुश—क्रोष्टा, लिश—लेष्टा, विश—वेष्टा, दिश—देष्टा, दृशिर्—द्रष्टा, स्पृश—स्प्रष्टा, मृश—म्रष्टा, दन्श—दंष्टा ॥

३१४ । द्विषिपुष्यतिकृषिश्लिष्यतित्विषिपिषिविषिशिषिशुषितुषिदुषेः षात् ॥

एभ्य एकादशभ्योऽनिड् भवति । द्विष—द्वेष्टा, पुष्यति—पोष्टा, कृषति कर्षति वा—क्रष्टा, श्लिष्यति,—श्लेष्टा, त्विष—त्वेष्टा, पिष्लृ—पेष्टा, विष्लृ—वेष्टा, शिष्लृ—शेष्टा, शुष—शोष्टा, तुष—दोष्टा ॥

३१५ । वसतिघसेः सात् ॥

आभ्यामनिड् भवति । वस्ता, जिघत्सति । नायं दान्त इति ॥

३१६ । दहिदिहिदुहिमिहिरिहिरुहिलिहिलुहिनहिवहेर्हात् ॥

एभ्यो दशभ्योऽनिड् भवति । दह—दग्धा, दिह—देग्धा, दुह—दोग्धा, मिह—मेढा, रिह—रेढा, रुह—रोढा, लिह—लेढा, लुह—लोढा, नह—नद्धा, वह—वोढा । रिहिलुही सौत्रौ धातू केचिन्न पठन्त्येव ॥

३१७ । ग्रहगुहोः सनि ॥

ग्रहगुहोः सनि नेड् भवति । ग्रह—जिघृक्षति, गुह—जुघुक्षति ॥

३१८ । उवर्णान्ताच्च ॥

इवर्णान्ताद्धातोः सनि नेड् भवति । वर्णग्रहणं स्मुस्त्रुश्रुत्यर्थम् । रुरूषति, नुनूषति, सुस्नूषति, सुसूषति, सुस्रूषति, लुलूषति, पुपूषति ॥

## ३९९ । इवन्तर्धभ्रस्जदन्भुश्रियूर्णुभरज्ञपिसनितनिपतिदरिद्रां वा ॥

एषां सनि परे इडागमो न भवति वा । इवन्त—दिदेविषति, दुद्यूषति, ऋधु—अर्दिधिषति, ईर्त्सति । भ्रस्ज—बिभ्रज्जिषति, बिभ्रक्षति । दम्भु—दिदम्भिषति, धिप्सति, धीप्सति । श्रिञ्—शिश्रयिषति, शिश्रीषति । यु—यियविषति, युयूषति । ऊर्णुञ्—प्रोर्णुनविषति, प्रोर्णुनूषति । भर—बिभरिषति, बुभूर्षति । ज्ञपि—जिज्ञपिषति, ज्ञीप्सति । सनु—सिसनिषति, सिषासति । तनु—तितनिषति, तितांसति । पत्लृ—पिपतिषति, पित्सति । दरिद्रा—दिदरिद्रासति, दिदरिद्रिषति । भ्रस्जग्रहणमप्राप्ते विभाषा ॥

## ४०० । भुवः सिज्लुकि ॥

भुवो धातोः सिज्लुकि सति नेड् भवति । अभूत्, अभूताम् । सिज्लुकीति किम् ? भ्यस्यमविष्ट ॥

## ४०१ । सृवृभृस्तुद्रुस्रुश्रुव एव परोक्षायाम् ॥

एभ्य एव परोक्षायां नेड् भवति । सृ—ससृव, वृञ्, वृङ्—वव्रुवहे, ववृमहे । डुभृञ्, भृञ् वा—बभृव । ष्टुञ्—तुष्टुव । द्रु—दुद्रुव । स्रु—सुस्रुव । श्रु—शुश्रुव । एभ्य एवेति किम् ? पेचिव, शेकिव, ददिव, ररम्भिव, मेशिव । रधादित्वाद् विभाषापि बाध्यते । परत्वाद् विकल्प इत्येके—ररन्धिव, रेध्व इति ॥

## ४०२ । थल्य कारात् ॥

अकारान्ताद्धातोस् थलि नेड् भवति । दधर्थ, जहर्थ । थलीति किम् ? जहिव, जहिम । अकारान्तादिति किम् ? स्तृञ्—तस्तरिथ ॥

"नित्यानिटां स्वरान्तानां सृजिदृश्योश्च वेट् थलि ।
तृचि नित्यानिटः स्युश्चेद् वृध्येऽद्वां नित्यमिट् थलि ॥"

पपक्थ, पेचिथ, पपाथ, पपिथ । चिचेथ, चिचयिथ । सस्रष्ठ, ससृजिथ । दद्रष्ठ, ददर्शिथ । तृचि योऽकारवान् नित्यानिडिति विशेषणात् । अदेर्घस्लृ—जघसिथ । वेञो वयिः—ववयिथ, ऋव्येर्विकल्पेट्त्वात् प्रासज्ञिथ, ववरिथ, आरिथ, विव्ययिथ, आदिथ ॥

## ४०३ । कृञोऽसुटः ॥

असुटः कृञः परोक्षायां थलि च नेड् भवति । चकृव, चकृम, चकर्थ । असुट् इति किम् ? सञ्चस्करिव, सञ्चस्करिम, सञ्चस्करिथ ॥

"स्यसिजाशीःश्वस्तनीषु भावकर्मार्थकासु च ।
स्वरहनग्रहदृशामिड् वेज्वच्चेति वक्तव्यम् ॥"

चेष्यते, चायिष्यते । दास्यते, दायिष्यते । एवम् अचेष्यत, अचायिष्यत । अदास्यत, अदायिष्यत, हनिष्यते, घानिष्यते । अहनिष्यत, अघानिष्यत । ग्रहीष्यते, ग्राहिष्यते । अग्रहीष्यत, अग्राहिष्यत । द्रक्ष्यते, दर्शिष्यते । अद्रक्ष्यत, अदर्शिष्यत । सिचि च—अचेषाताम्, अचायिषाताम् । अवधिषाताम्, अघानिषाताम् । अग्रहीषाताम्, अग्राहिषाताम् । अदृक्षाताम्, अदर्शिषाताम् । आशिषि च—चेषीष्ट, चायिषीष्ट । दासीष्ट, दायिषीष्ट । वधिषीष्ट, घानिषीष्ट, ग्रहीषीष्ट, ग्राहिषीष्ट, दृक्षीष्ट, दर्शिषीष्ट । श्वस्तन्यां च—चेता, चायिता । दाता, दायिता । हन्ता, घानिता । ग्रहीता, ग्राहिता । द्रष्टा, दर्शिता । इज्वद्भावादिटस्तु कारितलोपः स्यात्—कारिष्यते, कारयिष्यते । चोरिष्यते, चोरयिष्यते, गानुबन्धानां ह्रस्वो नित्यम्—गमिष्यते ॥

## ४०४ । सुड् भूषणे सम्पर्युपात् ॥

भूषणेऽर्थे सम्पर्युपात् परस्य कृञः सुडादिर्भवति । संस्कर्ता, सञ्चस्कार, समस्कार्षीत्, परिष्कर्ता, परिचस्कार, पर्यष्कार्षीत् । मध्यागमेऽपि वक्ष्यते । उपस्कर्ता, उपचस्कार, उपास्कार्षीत् ।

एवं समवायेऽपि वक्तव्यम् । भूषणसमवायाभ्यामन्यत्रापि दृश्यते--संस्कृतमिदमनित्यमिति । उपात् प्रतियत्नविकृतवाक्याध्याहारेषु सुट् वक्तव्यः । एधोदकस्योपस्कुरुते, उपस्कृतं भुङ्क्ते—विकृतं भुङ्क्त इत्यर्थः । उपस्कृतं जल्पति—वाक्याध्याहारं जल्पतीत्यर्थः ॥

इति दौर्गसिंह्यां वृत्तावाख्याते सप्तमः पादः समाप्तः ॥

---

## ४०५ । पदान्ते धुटां प्रथमः ॥

पदान्ते वर्तमानानां धुटाम् अन्तरतमः प्रथमो भवति । त्वक्चरथः, ककुब्जानि, वाग्भुङ्क्ते, त्वक्छुतम्, ककुब्भासः । वर्गप्रथमतृतीये स्यात् । अलेट्, अलेड्, आसीत्, असीद्, "वा विरामे" इति बाधकत्वात् प्रथमतृतीयौ । पदग्रहणम प्रकृतस्यापि लिङ्गस्य परिग्रहार्थं, तेन च धातोरन्ते न स्यात्—वदति, पचते । धुटामिति किम् ? अन्नं जयत्वम् ॥

## ४०६ । रसकारयोर्विसृष्टः ॥

पदान्ते वर्तमानयो रेफसकारयोर्विसृष्टो भवति । अग्निः, पयः । पदान्त इति किम् ? बिभर्ति, आस्महे । अतएवारम्भः । कथम् अग्निस्त्वम्, अग्निस्त्वम्, अग्नस्त्वम्, भद्रस्त्वम् ? सो पदान्ते ऽर्थग्रहणादपि वा द्वयोरत्वं स्यात् ॥

## ४०७ । घढधभेभ्यस्तथोर्धोऽधः ॥

घढधभेभ्यः परयोस्तथोर्धो भवति, न तु धाञः । अद्धुग्ध, अदुग्धाः, अलीढ, अलीढाः, अबुद्ध, अबुद्धाः, अलब्ध, अलब्धाः । अध इति किम् ? धत्तः, धत्थः ॥

## ४०८ । षढोः कः से ॥

षढोः को भवति से परे । पेक्ष्यति, पिपक्षति, लेक्ष्यति, लिलिक्षति । स इति किम् ? पिनष्टि, लेढि ॥

## ४०९। तवर्गस्य षटवर्गाद् टवर्गः॥

षाट्टवर्गाच्च परस्य तवर्गस्य टवर्गो भवति। वपुष्टरम्, वपुष्टा, द्वेष्टि, पिनष्टि, कृष्णाति, ईट्टे, लीढः अलीढ्वम्। टवर्गाट्टवर्गे इति किम्? पक्ता, पपक्थ इति सिद्ध्यर्थम्। कथं मधुलिट् तरति—मधुलिट्तरः? असत्यत्वात्॥

## ४१०। ढे ढलोपो दीर्घश्चोपधायाः॥

ढे परे ढलोपो भवति, उपधायाश्च दीर्घः। लीढः, मूढः। कथं लेढा, प्रोढा, अन्तरङ्गत्वाद् गुणे कृते ढलोप एव स्यात्। उपधाग्रहणस्य संज्ञापूर्वकत्वाद् ऋतो न स्यात्। वृहू—वृढः। दृहू—दृढः॥

## ४११। सहिवहोरोदवर्णस्य॥

सहिवहोर्ढे परे ढलोपो भवति। अवर्णस्यौद् भवति। सोढा, वोढा कथम् ऊढः, ऊढवान्? अन्तरङ्गत्वान्नित्यत्वात् सम्प्रसारणम्। अवर्णग्रहणं किम्? उदवोढाम्—सिच्यस्य दीर्घत्वेऽपि न स्यात्॥

## ४१२। धुटां तृतीयश्चतुर्थेषु॥

धातूनां धुटां चतुर्थेष्वेव तृतीयो भवति। दोग्धा, द्विड्ढि, अकार्ष्ट, लब्धा। चतुर्थेष्वेवेति नियमात् शङ्क्यते, द्विट्ः॥

## ४१३। अघोषेष्वशिटां प्रथमः॥

अघोषेषु परतो धातूनामशिटां धुटां प्रथमो भवति। धोक्षि, भेत्ता, युयुत्सते, आरिप्सते। अशिटामेवेति किम्? अस्ति॥

## ४१४। भृजः स्वरात् स्वरे द्विः॥

भृजः स्वरात् परस्य स्वरे द्विर्भवति। भृजी—बभ्रज्जे, बभ्रज्जाते, बभ्रज्जिरे। आद्यव्याकरणमतमेतत्॥

## ४१५। अस्य वमोर्दीर्घः॥

अकारस्य वमोः परतो दीर्घो भवति। पचामि, पचावः, पचामः।

दीव्यामि, दीव्यावः, दीव्यामः । अस्येति किम् ? दध्वः, दध्मः । यदि ह्यादीर्घस्तदाऽऽगोयो न स्यात् । कथं पचमानः, अपचम् ? वमोर्धर्मयोरादयोः साहचर्यात् ॥

## ४१६ । स्वरान्तानां सनि ॥

स्वरान्तानां धातूनां सनि परे दीर्घो भवति । चिकीर्षति, जुहूर्षति, चिचीषति । कथम् शिश्रयिषति, बिभरेषतीति ? गुणेनाभ्रातत्वात् । स्वरान्तानामिति सुखार्थमेव ॥

## ४१७ । हनिङ्गमोरुपधायाः ॥

इङो गमः इङ्गमः । हन्इङ्गमोरुपधाया दीर्घो भवति सनि परे । जिघांसति, अधिजिगांसते । इङो गम इति किम् ? सञ्जिगंसते । तितांसति, तितनिषतीति वा वक्तव्यम् ॥

## ४१८ । नामिनो र्वोरकुर्छुरोर्व्यञ्जने ॥

अत्र तदन्तविशेषणम् । र्वोरुपधाया धातोर्नामिनो दीर्घो भवति व्यञ्जने परे, न तु कुर्छुरोः । चिकीर्षति, बुभूर्षति, दीव्यति, सीव्यति, कूर्दते । खूर्दते । धातोरिति किम् ? कुर्कुरः । कथं कुर्कुरीयते ? नामधातुत्वात् । नामिन इति किम् ? कर्त्ता, भव्यम् । र्वोरिति किम् ? नृत्यति । अकुर्छुरोरिति किम् ? कुर्य्यात्—दीर्घविधिं प्रति न स्थानिवदिति कुर्य्यते । कथं री रेषणे—रिर्य्येतुः, वी प्रजने—विव्यतुरिति ? अभ्यासप्रतिषेध इति । व्यञ्जन इति किम् ? किरति, तुवति ॥

## ४१९ । सस्य ह्यस्तन्यां दौ तः ॥

सस्य ह्यस्तन्यां दौ परे तो भवति । अचकात्, अन्वशात् । ह्यस्तन्यामिति किम् ? अभैत्सीत्—इटस्तद्ग्रहणेन ग्रहणात् । ह्यस्तन्यां सौ वा वक्तव्यम्—अचकास्त्वम्, अचकास्त्वम् ॥

## ४२० । अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु ॥

ह्यस्तन्यादिषु परतो धातोरादिरडागमो भवति । अकरोत्, अकार्षीत्, अकरिष्यत् । धातोरिति किम् ? न्यविशत ॥

## ४२१ । स्वरादीनां वृद्धिरादेः ॥

स्वरादीनां धातूनां ह्यस्तन्यादिष्वादेः स्वरस्य वृद्धिर्भवति आन्तरतम्यात् । ऐक्षत, ऐधिष्ट, ऐधिष्यत । कथम् ऐज्यत, औप्यत, औह्यत ? अन्तरङ्गत्वादडागमे यणि सम्प्रसारणे सन्धौ च वृद्धिः । अन्तरङ्गा वा यणादयः ॥

## ४२२ । अवर्णस्याकारः ॥

स्वरादीनां धातूनामादेरवर्णस्याकारो भवति ह्यस्तन्यादिषु परतः । आटत्, आटीत्, आटिष्यत्, आप्नोत्, आपत्, आप्स्यत् । अवर्णः सवर्णग्रहणार्थमित्येके । एकदेशेनान्तरतम्यात् सर्वा वृद्धयो मा भूवन्निति वर्णग्रहणम् ॥

## ४२३ । अस्तेः ॥

अस्तेर्ह्यस्तन्यामगुणेऽवर्णस्याऽऽकारो भवति । आस्ताम्, आसन्, व्यत्यास्त । परोऽप्यवर्णस्याकारो लोपेन बाध्यतेऽस्तिमात्राश्रयत्वात् ॥

## ४२४ । एतेर्ये ॥

एतेर्ये ह्यस्तन्यनि परेऽटोऽवर्णस्याऽऽकारो भवति । आयन्, प्राध्यायन् । परापि वृद्धिरियमात्राश्रितेन यत्वेन बाध्यते । य इति किम् ? ऐत् ॥

## ४२५ । न मामास्मयोगे ॥

मायोगे मास्मयोगे च ह्यस्तन्यादिष्वडागमो न भवति । मा भवान् करोत्, मास्म करोत् । जुगुप्सत स्मैनमदुष्टभावं मैवं भवानक्षतसाधुवृत्त इति मतम् । मा भवान् कार्षीत्, मा स्म कार्षीत् । संयुक्ते न स्यादिति मास्मग्रहणम् । स्मादन्यत्रोत्पदो न स्यात्, मा भवानपचत ॥

## ४२६ । नाम्यन्ताद्धातोराशीरद्यतनीपरोक्षासु धो ढः ॥

नाम्यन्ताद्धातोराशीरद्यतनीपरोक्षासु यो धकारस्तस्य ढकारो भवति। चेषीढ्वम्, कृषीढ्वम् अभ्यगीढ्वम्, समस्थिढ्वम्, तुष्टुढ्वे । वहृढे । अन्तग्रहणं भूतपूर्वनाम्यन्तार्थम्, तेन प्रावरिषीढ्वम्, अलविढ्वम्, लुलुविढ्वे । धातोरिति संज्ञापूर्वकत्वादनित्यार्थम्, तेनासु सेट्सु विभाषा सिद्धा—प्रावरिषीढ्वम्; प्रावरिषीध्वम्, अलविढ्वम्, अलविध्वम्, दिदीयिढ्वे, दिदीयिध्वे इत्यपि ॥

## ४२७ । मर्जो मार्जिः ॥

मर्ज इत्येतस्य मार्जिरादेशो भवति । मार्ष्टा, मार्क्ष्यति, अमार्ट् । मार्जो वर्तते । मर्ज इति किम् मृष्टः ॥

अगुणो स्वरे वा वक्तव्यम्—परिमृजन्ति, परिमार्जन्ति ॥

## ४२८ । धात्वादेः षः सः

धातोराद्यवयवस्य षकारस्य सकारो भवति । षह—सहते । षिच—सिञ्चति । धातोरिति किम् ? षट्—षण्डः । आदेरिति किम् ? लषितुम् । कथं षण्डीयति ? नामधातुत्वाद्, धातोश्चारम्भको षिन, न षकार इति । "ष्ठिवुष्वष्कमामनि" इति निर्देशात्—ष्ठीवति, ष्ठिवेरपि थकारठकारपरस्य कार परो वेति मतम्, तेन—टेष्ठीव्यते, तेष्ठीव्यत इति सिद्धम् ।

ष्वक्के न स्यादिति वक्तव्यम् ष्वष्कते । निमित्ताद्विकारस्यस्य सकारस्य सत्वार्थः षोपदेशो धातूनामिति । तत्र स्वरदन्त्यपराः सादयः षोपदेशाः । स्मिङ्स्विदिस्विदिस्वपयश्च, सृपिसृजिस्तृ स्त्यासीकृसेकवर्जम् ।

## ४२९ । णो नः ॥

धात्वादेर्णकारस्य नकारो भवति । णीञ्—नयति । णम—नमति । धात्वादेरिति किम् ? क इति । कथं ण कारीयति ? नामधातुत्वाद् । इत्-

प्युपसर्गादसमासे णोपदेशस्य णत्वार्थो नकारपाठः । सर्वे नादयो णोपदेशाः । नृतिनन्दिनर्दिनक्कनाटिनाटिनॄनाथृनाधृवर्जम् ॥

## ४३० । निमित्तात्प्रत्ययविकारागमस्थः सः षत्वम् ॥

अन्यार्थोऽयमारम्भः । निमित्तान्नामिकरात् परः प्रत्ययविकारागमस्थः सः षत्वमापद्यते । नामिनस्तावत्—चिचीषति, लुलूषति, सर्पिष्यति, धनुष्यति । कात्—शक्ष्यति, विवक्षति । रात्—चिकीर्षति । विकारस्थः—सिषेव, सुष्वाप । आगमस्थः—परिष्करोति, वचनाद् भिन्नपदेऽपि व्यवधेऽपि भावात् । प्रत्ययविकारागमस्थ इति किम् ? सृप्ल—सिसृप्सति । सेकृ—सिसेकिषते । तस्यैवापि शब्दस्यार्थं प्रपञ्चः ।

तथोपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनाम् अडन्तरोऽपि—अभिषुणोति, अभ्यषुणोत् । अभिषुवति, अभ्यषुवत् । अभिष्यति, अभ्यष्यत् । अभिष्टौति, अभ्यष्टौत् । अभिष्टोभते, अभ्यष्टोभत ।

स्थासेनिसेधतिसिचसञ्जस्वञ्जाम्　अडभ्यासान्तरोऽपि—अभिष्ठास्यति, अभ्यष्ठात्, अभितष्ठौ । सेनया अभियाति—अभिषेणयति, अभ्यषेणयत्, अभिषिषेणयिषति । अभिषेधति, अभ्यषेधत्, प्रतिषिषेधयिषति, प्रत्यषेधत्, प्रतिषिषेधिषति । अभिषिञ्चति, अभ्यषिञ्चत्, अभिषिषिक्षति, अभिषजति, अभ्यषजत्, अभिषिषङ्क्षति, परिष्वजते, पर्यष्वजत, परिषिष्वङ्क्षते ।

सदेरप्रतेः—निषीदति, न्यषीदत्, निषिषत्सति । अप्रतेरिति किम् ? प्रतिसीदति, प्रत्यसीदत्, प्रतिसिषत्सति । प्रतेरपि स्तन्भेः—प्रतिष्टभ्नाति, प्रत्यष्टभ्नात्, प्रतितष्टम्भ । एवम् अभिष्टभ्नाति, अभ्यष्टभ्नात्, अभितष्टम्भ । अवाद् गौर्जित्यनिकटाश्रयेषु—मल्लस्यावष्टम्भः अवष्टब्धा सेना, दण्डमवष्टभ्यास्ते । एविति किम ? अवस्तब्धो वृषलः—शीतेन सङ्कुचित इत्यर्थः ।

स्वन स्वनो भोजने—विष्वणति, अवष्वणति—अपश्रणत् । अवाष्वणत्,

निवर्त्ताय, अवयवत्राण—सशब्दं भुङ्क इत्यर्थः । एवमन्येऽप्यनुस-र्तव्याः ॥

## ४३१ । शासिवसिघसीनां च ॥

निमित्तात्परः शासिवसिघसीनां च सः षत्वमापद्यते । शिष्यते, उष्यते, अक्षतु । अविकारस्थ इत्यारम्भः ॥

## ४३२ । स्तौतीनन्तयोरेव सनि ॥

निमित्तात्परः प्रत्ययविकारागमस्थः स्तौतीनन्तयोरेव सनि षत्व-भूते सः षत्वमापद्यते । तुष्टूषति, सिषेधयिषति, सुष्वापयिषति । स्तौ-तीनन्तयोरिति किम् ? सिसिक्षति, सुसुषति । षत्वभूत इति किम् ? तिष्ठासति, सुषुप्सति । कथं सोषुपिषते ? चेक्रीयते षत्वं पश्चात् सन् । अर्थात् प्रतीषिषति सनोऽवयवस्यानभ्यासस्थानिमित्तात् षत्वं स्यादेव । स्विदिस्वदिसहीनामिनन्तानां नेष्यते—सिस्वेदयिषति । सिस्वाद-यिषति, सिसाहयिषति । तेनैवापि शब्देनान्यदपि व्यभिचार्यते । तथा सिञ्चतेश्चेक्रीयिते न स्यात्—सेसिच्यते । सुनोतेः स्ये—अभिसोष्यते । सेधतेर्गतौ—अभिसेधयति गाम्—गमयतीत्यर्थः । एवमन्येऽप्यनुस-र्तव्याः ॥

## ४३३ । लुग्लोपे न प्रत्ययकृतम् ॥

लुका लोपे सति प्रत्यये परे यत् कार्य्यं प्रकृतेस्तन्न भवति । लुका लोपो यस्येति विग्रहः । अङ्गाः, वङ्गाः, कलिङ्गाः, पञ्च, कति, जुम्बे, वि-करणलुकि न गुणः, लुकीति न कृतं लुग्लोपयोर्विशेषप्रतिपत्त्यर्थम्, तेन प्रत्ययलोपे प्रत्ययलक्षणमवधार्य्यते—अभिनत्, अच्छिनत् । प्रत्ययकृत-मिति किम् ? परस्यान इस्—उदगुः, अधुः । कतीह, पञ्चात्र ॥

## ४३४ । स्वरविधिः स्वरे द्विर्वचननिमित्तेकृते द्विर्वचने ॥

द्विर्वचननिमित्ते स्वरादौ प्रत्यये परे प्रकृतेः पूर्वस्मिन् परस्मिन् वा द्विर्वचने कृते स्वरस्य स्थाने विधिर्भवति । पपतुः, आटिटत्, अम्मतुः,

इयाय, निनाय, निनयिथ, लुलाव, लुलविथ, निन्यतुः, चक्रतुः । स्वर-विधिरिति किम्? अलूलुपत्—सपरस्वरायाः सम्प्रसारणं पश्चाद् द्विर्वचनम् । स्वर इति किम्? जेघ्रीयते । द्विर्वचननिमित्त इति किम्? दुद्यूषति । येन विना यन्न भवति तत्तस्य निमित्तम् । इटो विधिना सनि द्विर्वचन मिति, तेन अरिरिषतीति सिद्धम् । कथम् इयेष, उवोष? न स्थानिवत्त्वम्, असवर्णे इति वचनात् ॥

## ४३५ । योऽनुबन्धोऽप्रयोगी ॥

अनुबध्यत इत्यनुबन्धः, अप्रयुक्तिरप्रयोगः । अनुबन्धो यः सोऽप्रयोगी, अनुच्चारणीयो भवति । इङ्—अधीते । डुकृञ्—कुरुते । एव-मन्येऽपि ॥

## ४३६ । शिडिति शादयः ॥

शादयो वर्णा हपर्य्यन्ताः शिडिति संज्ञिताः । शिट्प्रदेशाः—"शिट्-परोऽघोषः" इत्येवमादयः ॥

## ४३७ । सम्प्रसारणं य्वृतोऽन्तःस्थानिमित्ताः ॥

इश्च उश्च ऋश्चेति द्वन्द्वः । तकारः सुखनिर्देशार्थः । अन्तःस्थैव निमि-त्तमुत्पत्तिर्येषां तेऽन्तःस्थानिमित्ता य्वृतः सम्प्रसारणमिति संज्ञिताः । सम्प्रसारणप्रदेशाः—"सपरस्वरायाः सम्प्रसारणमन्तःस्थायाः" इत्ये-वमादयः । अन्तःस्थानिमित्ता इति किम्? स्थितः, स्थितवान्, तद्दीर्घ-मस्य न स्यात् ॥

## ४३८ । अर् पूर्वे द्वे सन्ध्यक्षरे च गुणः ॥

अर् पूर्वे द्वे सन्ध्यक्षरे च गुण इति संज्ञिते । एकं पूर्वमेकारमपे-क्ष्यापरं ओकारमपेक्ष्येति । गुणप्रदेशाः—"नाम्यन्तयोर्धातुविकरणयो-र्गुणः" इत्येवमादयः ॥

## ४३९ । आरुत्तरे च वृद्धिः ॥

आर् उत्तरे च द्वे सन्ध्यक्षरे वृद्धिरिति संज्ञिते। आर्, ऐ, औ। वृद्धिप्रदेशाः—"वृद्धिरादौ सणे" इत्येवमादयः॥

इति दौर्गसिंह्यां वृत्ताख्यातेऽष्टमः पादः समाप्तः॥

इत्याख्यातं समाप्तम्॥

---

# अथ कृत्प्रकरणम्।

वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये॥

## १। सिद्धिरिज्वद् ञ्णानुबन्धे॥

ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे धातोरिचीव कार्य्यस्य सिद्धिरिति दिश्यते॥

"ह्रस्वत्वञ्चावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम्।
हन्तेर्घो जनुवधोर्ह्रस्वः कुटादीनां गुणो भवेत्॥
स्याद्वादन्तानामायिश्च इनीचीति निबन्धनात्।
न ह्रस्वोमानुबन्धानामिचि वा वचनेन च॥"

पाठः पाठकः। कारः, कारकः। घातः, घातकः। जनः, जनकः। वधः, वधकः। उत्कोटः, उत्कोटकः। पायः, पायकः। सिद्धिग्रहणं मिथकर्तृकत्यागमकृत्सार्थम्॥

## २। हन्तेस्तः॥

हन्तेर्नकारस्य तकारो भवति ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे। घातः, घातकः। कथं भ्रौणहत्यमिति? रूढितः सिद्धः॥

## ३। न सेटोऽमन्तस्यावमिकमिचमाम्॥

इच्मात्रमिह स्मर्य्यते। सेटोऽमन्तस्य वमिकमिचमिवर्जितस्येचि कृतं कार्य्यं न भवति। अशमि, अतमि। ञानुबन्धे कृतीउवन्नावाच—शमः, शमकः, शमी। तमः, तमकः, तमी। सेट इति किम्? अयामि,

यामः, यामकः । अचमिकमिचमामिति किम् ? अचामि, अकामि । अभिधानादाङ्पूर्वश्चमिः—आचामि, वामः, कामः, आचामः । कथम् श्रामः ? अम रोग इति चौरादिक इति दीर्घः । वौ श्रमेर्णत्रानिर्दिष्टस्यानित्यत्वात् विश्रामः । कथम् उद्यमः ? यम चेति चौरादिको मानुबन्धश्च । उपरम इति च दृश्यते ॥

## ४ । प्रत्ययलुकां चानाम् ॥

प्रत्यये लुग् येषां धातूनामेकदेशस्य ते प्रत्ययलुकोऽर्थात् अनामिस्वनकाराणाम्, प्रत्ययलुकां धातूनां नलोपवर्जितानां यत् प्राप्तं तच्च भवति, अर्थात् तस्मिन्नेव प्रत्यये परे । समिधिता, समिधकः, दृषदि, दृशदकः—थिन् । लोलुवः, मरीमृचः, तस्य लुगपि अस्योपधाया दीर्घो गुणश्च न स्यात् । प्रत्ययस्य लुग् येभ्य इत्युक्तेः—मेद्यादृ, वेत्तीति इग्यनोर्लुकि प्रतिषेधः स्यात् । अनामिति किम् ? हन्तेर्घञि—घातः । हन्तेर्मनि—घ्नोघ्न । रञ्जेः—रागः । कथं कुञ्चेर्निकुचितमिति ? सन्निपातलक्षणत्वाद् गुणस्य ॥

## ५ । सार्वधातुकवच्छे ॥

शानुबन्धे कृति परे सार्वधातुक इव कार्य्यं भवति । जुहत्, पचमानः, "कृञ शा च"—क्रिया । यस्य यदुक्तं तस्य तदेव श्रुतत्वात् ॥

## ६ । ङे न गुणः ॥

ङानुबन्धे कृति परे गुणो न भवति । बिभ्यत्, बिद्वन्, लुभ्यन्, स्वमीह मधु लिहानाश्चिग्वाभाः ॥

## ७ । के यण्वच्च योक्तवर्जम् ॥

कानुबन्धे कृति परे यणीव कार्य्यं भवति, ये उक्तं वर्जयित्वा । कृतः, उक्तवान्, गृहीत्वा, इष्टः । यणवद्भावेऽगुणत्वं सम्प्रसारणं च स्यात् । योक्तवर्जमिति किम् ? कृतः, जितः, स्मृतः, इकारागमदीर्घगुणा न स्युः ॥

आर् उत्तरे च द्वे सन्ध्यक्षरे वृद्धिरिति संज्ञिते । आर्, ऐ, औ ।
वृद्धिप्रदेशाः—"वृद्धिरादौ सणे" इत्येवमादयः ॥

इति दौर्गसिंह्यां वृत्तावाख्यातेऽष्टमः पादः समाप्तः ॥

इत्याख्यातं समाप्तम् ॥

---

# अथ कृतप्रकरणम् ।

वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः ।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये ॥

## १ । सिद्धिरिज्वद् ञ्णानुबन्धे ॥

ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे धातोरिचीव कार्य्यस्य सिद्धिरिति दिश्यते ॥

"इच्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम् ।
हन्तेर्घो अनुधोर्ह्रस्वः कुटादीनां गुणो भवेत् ॥
स्यादादन्तानामायिश्च इनीचीति निबन्धनात् ।
न ह्रस्वोमानुबन्धानामिञ्चि वा वचनेन च ॥"

पाठः पाठकः । कारः, कारकः । घातः, घातकः । अमः, अमकः । बधः, बधकः । उत्कोटः, उत्कोटकः । पायः, पायकः । सिद्धिग्रहणं मिथ्याबर्हृकत्यागमकुलार्थम् ॥

## २ । हन्तेस्तः ॥

हन्तेर्नकारस्य तकारो भवति ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे । घातः, घातकः । कथं भ्रौणहत्यमिति ? रूढितः सिद्धः ॥

## ३ । न सेटोऽमन्तस्यावमिकमिचमाम् ॥

इञ् मात्रमिह स्मर्य्यते । सेटोऽमन्तस्य वमिकमिचमिवर्जितस्येचि कृतं कार्य्यं न भवति । अशमि, अतमि । ञानुबन्धे कृतीज्वद्भावाच— शमः, शमकः, शमी । तमः, तमकः, तमी । सेट् इति किम् ? अयामि,

यामः, यामकः । अचमिकमिचमामिति किम् ? अवामि, अकामि । आमिधामादाङ्पूर्वश्चमिः—आचामि, वामः, कामः, आचामः । कथम् आमः ? अम रोग इति चौरादिक इति दीर्घः । वौ श्रमेर्णमानिर्दिष्टस्या-नित्यत्वात् विश्रामः । कथम् उद्यमः ? यम चेति चौरादिको मानुब-न्धश्च । उपरम इति च दृश्यते ॥

## ४ । प्रत्ययलुकां चानाम् ॥

प्रत्यये लुग् येषां धातूनामेकदेशस्य ते प्रत्ययलुकोऽर्थात् अनामि-तनकाराणाम्, प्रत्ययलुकां धातूनां नलोपवर्जितानां यत् प्राप्तं तच्च भवति, अर्थात् तस्मिन्नेव प्रत्यये परे । समिधिता, समिधकः, अह-शदि, दृशदकः—यिन् । लोलुवः, मरीमृचः, तस्य लुगपि अस्योप-धाया दीर्घो गुणश्च न स्यात् । प्रत्ययस्य लुग् येभ्य इत्युक्तेः—मेधाद्, वेत्तीति इग्धनोर्लुकि प्रतिषेधः स्यात् । अनामिति किम् ? इन्धेर्घञि—एधः । उन्देर्मनि—ओद्म । रन्जेः—रागः । कथं कुन्चेर्निकुचितमिति ? सन्निपातलक्षणत्वाद्गुणस्य ॥

## ५ । सार्वधातुकवच्छे ॥

शानुबन्धे कृति परे सार्वधातुक इव कार्य्यं भवति । जुह्वत्, पचमानः, "कृञ श च"—क्रिया । यस्य यदुक्तं तस्य तदेव श्रुतत्वात् ॥

## ६ । ङे न गुणः ॥

ङानुबन्धे कृति परे गुणो न भवति । बिभ्यत्, बिद्न्, लुभ्यन्, कथमिह मधु लिहामाश्रिभ्वानाः ॥

## ७ । के यण्वच्च योक्तवर्जम् ॥

कानुबन्धे कृति परे यणीव कार्य्यं भवति, ये उक्तं वर्जयित्वा । कृतः, कृतवान्, गृहीत्वा, इष्टः । यणवद्भावेऽगुणत्वं सम्प्रसारणं च स्यात् । योक्तवर्जमिति किम् ? कृतः, जितः, स्मृतः, इकारागमदीर्घगुणा न स्युः ॥

## ८। जागुः कृत्यशन्तृङ्ष्योः ॥

जागर्तेः कृति परे यथैव कार्य्यं भवति, न तु शन्तृङ्ष्योः। यथा-शिषोर्ये—जागरकः, जागरितः, जागर्तिः। कृतीति किम्? जागृयात्। अशन्तृङ्ष्योरिति किम्? जाग्रत्, जागृविः, कृगृजागृभ्यः क्विः॥

## ९। गुणी क्त्वा सेड् अरुदादिक्षुधकुशक्लिश-गुधमृडमृदवदवसग्रहाम्॥

अरुदादिक्षुधादीनां क्त्वा सेड् गुणी भवति। यस्मिन् यो भवति स तस्येति विवक्षायामिन्। शयित्वा, देवित्वा, ध्वंसित्वा। क्त्वेति किम्? निकुचितिः। शीङादीनां सेड् निष्ठेवेति नियमश्च स्यात्। सेडिति किम्? कृत्वा। अरुदादिक्षुधादीनामिति किम्? "रुदविद-मुषां सनि" इत्यत्र रुदिसहचरितो विदिर्ज्ञानार्थः—रुदित्वा, विदित्वा, मुषित्वा, क्षुधित्वा, कुशित्वा। क्लिश क्लिशू—क्लिशित्वा, गुधित्वा। व्युप-धत्वाद्वा न स्यात्। मृडित्वा, मृदित्वा। वद—उदित्वा। वस निवास एव यजादित्वाद्—उषित्वा। "क्षुधिवसोश्च" इतीट्। गृहीत्वा॥

## १०। स्कन्दस्यन्दोः क्त्वा॥

अनयोः क्त्वा गुणी भवति। स्कन्दिर्—स्कन्त्वा, स्यन्दू—स्यन्त्वा। असेडर्थमिदं पुनः क्त्वाग्रहणम्। यप् गुणी माभूत्—प्रस्कद्य, प्रस्यद्य॥

## ११। व्यञ्जनादेर्व्युपधस्यावो वा॥

वश्च यश्च वी, ते उपधे यस्य स व्युपधः। व्यञ्जनादेर्धातोरुकारे-कारोपधस्यावकारान्तस्य क्त्वा सेड् गुणी भवति वा। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा, व्यञ्जनादेरिति किम्? उषित्वा, ओषित्वा। अव इति किम्? देवित्वा।

सन्श्चेति वा वक्तव्यम्—दिद्युतिषते, दिद्योतिषते। लिलिखिषति लिलेखिषति॥

## १२ । तृषिमृषिकृशिवञ्चिलुञ्चवृ तां च ॥

एषां धातूनां क्त्वा सेड् गुणी भवति वा । तृषित्वा, तर्षित्वा । मृषित्वा । मर्षित्वा । कृश तनूकरणे—कृशित्वा, कर्शित्वा । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । ऋत इति सौत्रो धातुः—ऋतित्वा, अर्तित्वा ॥

## १३ । थफान्तानां चानुषङ्गिणाम् ॥

थान्तानां फान्तानां चानुषङ्गिणां क्त्वा सेड् गुणी भवति वा । ग्रथित्वा, ग्रन्थित्वा । ग्रथित्वा, ग्रन्थित्वा । गुफित्वा, गुम्फित्वा । अनुषङ्गिणामिति किम् ? कोथित्वा, रेफित्वा । व्युपधत्वे विकल्पो न स्यात् ॥

## १४ । जान्तनशामनिटाम् ॥

जान्तनशामनिटामनुषङ्गिणां क्त्वा गुणी भवति वा । भक्त्वा, भङ्क्त्वा । रक्त्वा, रङ्क्त्वा । नष्ट्वा, नंष्ट्वा—मस्जिनशोर्झलीति नकारागमः । अनिटामिति किम् ? अञ्जित्वा ॥

## १५ । शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठा सेट् ॥

शीङादीनां निष्ठा सेड् गुणी भवति । शयितः, शयितवान् । पवितः, पवितवान् । "पूङ्क्लिशोर्वा" इतीट् । एवं धर्षितः, धर्षितवान्, क्ष्वेदितम्, मेदितम्, प्रक्ष्वेदितः, प्रस्वेदितः, प्रमेदितः—"आदनुबन्धाद् भावादिकर्मणो र्वा" इतीट् । सेडिति किम् ? पूतः, । धृष्टः । उत्तरत्र वा वचनान्नित्यमिहेति ॥

## १६ । मृषः क्षमायाम् ॥

क्षान्तौ वर्त्तमानान्मृषो धातोर्निष्ठा सेड् गुणो भवति । मर्षितः, मर्षितवान् । क्षमायामिति किम् ? अपमृषितं वाक्यमाह ॥

## १७ । भावादिकर्म्मणोर्वीदुपधात् ॥

ह्रदुपधाद्धातोर्भाव आदिक्रियायां च निष्ठा सेड् गुणी भवति वा। द्योतितमनेन, द्युतितमनेन,। प्रद्योतितः, प्रद्युतितः—आदिकर्मणि क्तः कर्त्तरि च। व्यवस्थितविभाषया गुधयनः स्यात्—गुधितम् ॥

१८। ह्लादो ह्रस्वः॥

ह्लादो दीर्घो ह्रस्वो भवति निष्ठामात्रे। प्रह्लन्नः, प्रह्लन्नवान्। प्रह्लित्तिरिति क्तौ चेष्यते ॥

१९। छादेर्घेस्मन्त्रन्क्विप्सु ॥

छादेर्घेस् मन् त्रन् क्विप् एषु परतो दीर्घो ह्रस्वो भवति। उरश्छदः, प्रच्छदः। एकोपसर्गस्यैव घे व्यवस्थितवास्मरणात्। तेन—समुपच्छादः। अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इस्—छादयतीति छदिः, छदिषी, छदींषि। मन्—छद्म, त्रन्—छाद्यतेऽनेनेति छत्रम्। क्विप्—उपच्छत् ॥

२०। दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे ॥

दीर्घान्तस्योपपदस्यानव्ययस्य खानुबन्धप्रत्ययान्ते धातौ परे ह्रस्वो भवति। वधुंमन्या दासी, ग्रामणिंमन्यो दासः। वृहद्मन्या, कालिंमन्या हरिणिंमन्येति विवक्षितकर्त्तृकर्म्मैकवस्तुप्राप्तं पुवद्भावं बाधते परत्वात्। दीर्घग्रहणं तदन्तसुखार्थमित्येके, वाङ्मन्या। उपपदस्येति किम्? पटूवी प्रियंवदा। अनव्ययस्येति किम्? दिवामन्या रात्रिः ॥

२१। नामिनोऽम् प्रत्ययवच्चैकस्वरस्य ॥

उपपदस्यानव्ययस्यैकस्वर नामिनः परोऽम्भवति खानुबन्धप्रत्ययान्ते धातौ परे, स च प्रत्य[illegible]व सान्निध्याद् द्वितीयैकवचनवत्। यथा—रविकरस्तद्धु क्रिमज्रयमिव रक इति गम्यते। नावंमन्यः, नरंमन्यः, गांमन्यः, श्रियंमन्यः। नामिन इति किम्? स्वम्मन्या। एकस्वरस्येदि किम्? [illegible] ॥

## २२ । ह्रस्वारुषोर्मोऽन्तः ॥

उपपदस्यानव्ययस्य ह्रस्वान्तस्यारुषश्च मकारोऽन्तो भवति खानुबन्धप्रत्ययान्ते धातौ परे । नाडिन्धमः, जनमेजयः, अरुन्तुदः—"संयोगादेर्धुटः" इति सलोपः । अनव्ययस्येति किम् ? सुकरः कटः ॥

## २३ । सत्यागदास्तूनां कारे ॥

सत्यादीनां कारशब्दे परे मोऽन्तो भवति । सत्यं करोतीति सत्यङ्कारः, एवम् अगदङ्कारः, अस्तुङ्कारः । उपोच्चारिपदानामपि कारे समासेऽपीच्छन्ति—सत्यस्य कारः—सत्यङ्कारः । एवमन्यत्रापि मकारवर्णागमो दृश्यते—लोकम्पृणः, भ्राष्ट्रमिन्धः, अग्निमिन्धः, भद्रङ्करणम्, उष्णङ्करणम्, मध्यन्दिनम्, श्यैनम्पाता, तैलम्पाता, क्रीडा ॥

## २४ । गिलेऽगिलस्य ॥

गिलादन्यस्य गिलशब्दे परे मोऽन्तो भवति । गिरतेः कप्रत्ययः । तिमेर्गिलः—तिमिङ्गिलः । एवं रिपुङ्गिलः । अगिलस्येति किम् ? गिलगिलः ॥

अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ! ॥

## २५ । उपसर्गादसुदुर्भ्यां लभेः प्राग् भात् खल्घञोः ॥

उपसर्गात्परस्य लभेर्भात् प्राक् मकारागमो भवति खल्घञोः परतः, न तु सुदुर्भ्याम् । ईषत्प्रलम्भः, सुप्रलम्भः, दुष्प्रलम्भः । घञि च—प्रलम्भः, विप्रलम्भः । उपसर्गादेवेति नियमात्—ईषल्लभः, लाभो वर्तते । असुदुर्भ्यामिति किम् ? सुलभः, दुर्लभः । केवलाभ्यामेवेष्यते-तेन—अतिसुलम्भः, अतिदुर्लम्भः । कथम् अतिसुलभः, अतिदुर्लभः ? प्रादिना समासः ॥

## २६ । आङो यि ॥

आङः परस्य लभेर्मात् प्राङ् मकारागमो भवति यकारादौ प्रत्यये परे । आलम्भ्या गौः ॥

## २७ । उपात् प्रशंसायाम् ॥

उपात्परस्य लभेर्मात् प्राङ् मकारागमो भवति प्रशंसायां गम्यमानायां ये परतः । उपलम्भ्यानि धनानि । प्रशंसनीयानीत्यर्थः । प्रशंसायामिति किम् ? उपलब्धुं शक्यम्—उपलभ्यम् । कथम् आलभ्य, उपलभ्यते ? लभेर्यकार इति विशेषणात् ॥

## २८ । वा कृति रात्रेः ॥

कृदन्ते परे रात्रेर्मोऽन्तो भवति वा । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः । पचादित्वादच् । रात्रिम्मन्य इति नित्यम् उपपदाश्रयत्वात् ॥

## २९ । पुरन्दरवाचंयमसर्वंसहद्विषन्तपाश्च ॥

एतेऽच्प्रत्ययान्ता निपात्यन्ते । पुरं दारयतीति पुरन्दर इन्द्रः, वाचं यच्छतीति वाचंयमो व्रत एव, सर्वं सहते सर्वंसहः, द्विषं तापयतीति द्विषन्तपः । यल्लक्षणेनानुत्पन्नं तत्सर्वं निपातनात् सिद्धम् । । भगं दारयतीति भगन्दरो रोगो रूढित एव ॥

## ३० । धातोस्तोऽन्तः पानुबन्धे ॥

"ह्रस्वोङ्णनोर्द्वे" इत्यतो ह्रस्वोऽनुवर्तते । धातोर्ह्रस्वान्तस्य पानुबन्धे कृति परे तोऽन्तो भवति । अग्निचित्, सोमसुत्, प्रकृत्य, इत्वरः । धातोरिति किम् ? उपपदस्य माभूत्—ग्रामणीः, सेनानिकुलम् । वृत्रहभ्यामिति असिद्धं बहिरङ्गमन्तरङ्ग इति । ह्रस्वान्तस्येति किम् ? आनीय, आपूय । कथम् उपेत्य ? साधनायत्तत्वात् क्रियायाः प्रत्ययकार्यमेव । अन्तग्रहणं सुखार्थम् ॥

## ३१ । ओदौड्भ्यां कृद्यः स्वरवत् ॥

ओदौड्भ्यां कृद्यः स्वरवद् भवति । लव्यम् , प्रवश्यलाव्यम् । ओदौड्भ्यामिति किम् ? चेयम् । कृद्य इति किम् ? उपोयते, प्रौयत । इह कृद्ग्रहणादन्यत्र सामान्यमवगम्यते ॥

## ३२ । जिक्ष्योः शक्ये ॥

जिक्ष्योः शक्येऽर्थे विहितः कृद्यः स्वरवद् भवति । जेतुं शक्यं—जय्यम्, क्षेतुं शक्यं—क्षय्यम् । शक्य इति किम् ? जेयम् , क्षेयम् । जिक्ष्योरिति किम् ? चेतुं शक्यः—चेयः ॥

## ३३ । क्रीञस्तदर्थे ॥

तस्यार्थो द्रव्यविनिमयः, क्रीञः परस्तदर्थे वर्त्तमानः कृद्यः स्वरवद् भवति । क्रय्या गौः । कश्चित् क्रेष्यतीति कृत्वा हट्टेऽवतारिता गौरित्यर्थः । तदर्थे इति किम् ? क्रेयं मे धान्यं नास्ति क्रय्यम् , न प्रसारितमित्यर्थः ॥

## ३४ । वेर्लोपोऽपृक्तस्य ॥

वेः कृत्संज्ञकस्यापृक्तस्य वर्णान्तरेणासंयुक्तस्य लोपो भवति । क्विप्—घृतस्पृक् । विण्—अर्धभाक् । विच्—कीलालपाः । कृत इति किम् ? उपेयिवांसमाचष्टे—उपेयिवयतीति क्विप्—उपेयिवः, उपेयिवौ । अपृक्तस्येति किम् ? क्विबादीनां विशेषकधानुबन्धानुत्सृज्येकारोपश्लिष्टतस्य वमात्रस्य लोपार्थं—तेनेह न स्यात् , जागृविः—कृगृजागृभ्यः क्विः ॥

## ३५ । य्वोर्व्यञ्जनेऽये ॥

यकारवकारयोर्व्यञ्जने परे यकारवर्जिते लोपोभवति । क्नूयी, क्नूतः, क्नूतवान् । दिदिवान्, सिषिवान् । व्यञ्जनइति किम् ? क्ष्मायिता । देविता । अय इति किम् ? प्रक्नूय्य, प्रदीव्य । कथं कण्डूः, लोलू ? वर्णाश्रयेऽपि प्रत्ययलोपलक्षणं क्वचित् । जग्ध्वा, जग्धुमित्योक्षणीयं वकारः ॥

## ३६ । निष्ठटीनः ॥

निष्ठायामिटि परे इनो लोपो भवति । हारितः, हारितवान्, लक्षितः, लक्षितवान् । इटीति किम् ? संज्ञपितः पशुः । "इवन्तर्ध" इत्यादिना सनि वेट् ।

"वेटामेकस्वरस्मृत्या संज्ञपित इडस्ति ते ।
पाचिते प्राणिनो लोप एकस्वरात्त वेट् पचेः ॥"

## ३७ । नाल्विष्णवाय्यान्तेत्नुषु ॥

आलु, इष्णु, आय्य, अन्त, इत्नु, एषु परतः इनो लोपो न भवति । स्पृहयालुः, पारयिष्णुः, स्पृहयाय्यः—श्रुदक्षिस्पृहिगृहिभ्य आय्यः । गण्डयन्तः, मण्डयन्तः—गण्डिमण्डिजिनन्दिभ्यो झच् । स्तनयित्नुः—स्तनिहृषिपुषिगदिमदिभ्य इन इत्नुः ॥

## ३८ । लघुपूर्वोऽय् यपि ॥

लघुपूर्व इन् अय् भवति यपि परे । वचनादेकवर्णव्यवधानेऽपि । प्रशमय्य, विगणय्य । लघुपूर्व इति किम् ? सम्प्रधार्य्य गतः । आपः परस्य वा वक्तव्यम्—प्राप्य गतः, प्रापय्य गतः । इङादेशस्य लाक्षणिकत्वात् अध्याप्य गतः ॥

## ३९ । मीनात्यादिदादीनामाः ॥

मीनातिमिनोतिदीङां दामागायतिपिबतिस्थास्यतिजहातीनां च यपि परे आकारो भवति । मीञ्—प्रमाय, डु, मिञ्—परिमाय, दीङ्—उपदाय । दामादीनामीत्वबाधनार्थमेव—प्रदाय, प्रधाय । मेङ्, माङ्—प्रमाय, प्रगाय । प्रपाय, प्रस्थाय । सो—अवसाय, अवहाय ॥

## ४० । क्षेर्दीर्घः ॥

क्षेर्दीर्घो भवति यपि परे । प्रक्षीय, उपक्षीय । कथं प्रक्षिप्य गतः ? क्षिप् हिंसायामिति लाक्षणिकत्वात् ॥

## ४१ । निष्ठायां च ॥

निष्ठायां च क्षेर्दीर्घो भवति । प्रक्षीणः, प्रक्षीणवान् । प्रक्षीयतेऽस्मिन्निति प्रक्षीणमिदं छात्रस्य । दीर्घ इति संज्ञापूर्वकत्वादनित्यार्थः । तेन भावकर्म्मणोर्न स्यात्—क्षितमनेन, प्रक्षितश्छात्रो भवता । आक्रोशदैन्ययोश्च वा—क्षितायुः, क्षीणायुः । दैन्ये च—क्षितकः, क्षीणकः । क्षितोऽयं, क्षीणोऽयं तपस्वी—कर्त्तृधिकरणयोरेवात्रापि ॥

## ४२ । स्फायः स्फीः ॥

निष्ठायां च स्फायः स्फीरादेशो भवति । स्फीतः, स्फीतवान् । स्फायीती वनुबन्धबलादादेशोऽयमनित्य इति—स्फातः, स्फातवान्—इडेट् प्रतिषिध्यते ॥

## ४३ । प्यायः पीः स्वाङ्गे ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गे वर्त्तमानस्य प्यायतेर्धातोर्निष्ठायां च पीर्भवति । पीनं मुखम् पीनवन्मुखम् । स्वाङ्ग इति किम् ? प्यानः स्वेदः, प्याना बुद्धिः, प्यानं मुखं शालायाः, प्यानः शोथः । कथं पीनो बाहुरथ्यायां पतितः, कथं पीनं मुखं प्रतिमायाः ? स्यादेव ।

"अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम् ॥"

पीनाङ्गयोगात् पीनो वटुरिति । कथम् पीनः श्लेष्मा, पीनो वायुरिति ? उपमानात् । आपीनोऽन्धुः, आपीनमूधः, चाङ्गोऽन्धूधसोरेव ॥

## ४४ । शृतं पाके ॥

श्रातेः श्रपयतेश्च शृतमिति निपात्यते पाकेऽर्थे । क्षीरहविषोरेव निपातनस्येष्टविषयत्वात् । शृतं क्षीरम्, शृतं हविः । अन्यहेतौ न स्यात्—क्षीरं श्रपितं देवदत्तेन यज्ञदत्तेनेति । क्षीरहविषोरेवेति किम् ? श्राणा यवागूः, श्रपिता यवागूः ॥

## ४५ । प्रस्त्यः सम्प्रसारणम् ॥

प्रपूर्वस्य स्त्यायतेर्निष्ठायां सम्प्रसारणं भवति। प्रस्तीतः, प्रस्तीतवान्। प्रेण स्त्या इति समासात्—प्रसंस्तीमः, प्रसंस्तीमवान्—प्रसन्तरङ्गत्वात् कृते सम्प्रसारणे मत्वं तु स्यात् पक्षे ॥

## ४६। द्रवघनस्पर्शयोः श्यः ॥

द्रवघने स्पर्शे चार्थे श्यायतेर्निष्ठायां च सम्प्रसारणं भवति। शीनं घृतम्, शीतो वायुः—द्रवीभूय, घनं कठिनमित्यर्थः। त्वगिन्द्रियग्राह्यो गुणविशेषः स्पर्श इति। द्रवघनस्पर्शयोरिति किम्? संश्यानो वृश्चिकः,—शीतेन संकुचित इत्यर्थः ॥

## ४७। प्रतेश्च ॥

प्रतिपूर्वस्य श्यायतेर्निष्ठायां सम्प्रसारणं भवति। प्रतिशीनः, प्रतिशीनवान्। प्रतिपूर्वोऽयं रोग एव वर्त्तते ॥

## ४८। वाभ्यवाभ्याम् ॥

अभ्यवाभ्यां परस्य श्यायतेर्निष्ठायां सम्प्रसारणं भवति वा। अभिशीनः, अभिश्यानः। अवशीनः, अवश्यानः। उभयत्र विभाषेयम्?

## ४९। न वेञ्ज्योर्य्यपि ॥

वेञ् ज्या इत्येतयोर्यपि परे सम्प्रसारणं न भवति। प्रवाय, प्रज्याय। एतौ यजादिग्रहादी ॥

## ५०। व्यश्च ॥

व्येञश्च यपि परे सम्प्रसारणं न भवति। प्रव्याय, उपव्याय। यजादिरयम् ॥

## ५१। सम्परिभ्यां वा ॥

सम्परिभ्यां परस्य व्येञः सम्प्रसारणं भवति वा यपि परे। संव्याय, संवीय। परिव्याय, परिवीय। समो न विभाषेत्यन्ये ॥

## ५२ । तद् दीर्घमन्त्यम् ॥

तत्सम्प्रसारणं दीर्घमापद्यते अन्त्यं चेत् । हूतः, संवीतः, प्रस्तीतः । मित्रहूः, संवीय,—अन्तरङ्गत्वात् तकारागमं बाधते । अन्त्यग्रहणमा-ख्यातार्थं च । तद्ग्रहणमभिव्यवस्यर्थम्, तेन—सपरस्वरायाः स्थाने सम्प्रसारणं सिद्धम् ॥

## ५३ । वः कौ ॥

वेञः क्वावेव सम्प्रसारणं दीर्घमापद्यते । ऊः, ऊवौ, ऊवः । क्वाविति किम् ? उतः उतवान् ॥

## ५४ । ध्याप्योः ॥

ध्याप्योः सम्प्रसारणं कौ परे दीर्घमापद्यते । धीः, आपीः । वच-नात् सम्प्रसारणं सिद्धम् ॥

## ५५ । पञ्चमोपधाया धुटि चागुणे ॥

पञ्चमान्तस्योपधाया दीर्घो भवति कौ धुट्यगुणे । प्रशान्, प्रतान्, शान्तः, शान्तवान्, शान्तिः, शान्त्वा । धुटीति किम् ? यवमत्य । अगुण इति किम् ? गन्ता । दीर्घ इति संज्ञापूर्वकत्वात् क्रमेः क्त्वाप्रत्यये वा—क्रन्त्वा, क्रान्त्वा ॥

## ५६ । छ्वोः शूटौ पञ्चमे च ॥

छकारवकारयो स्थाने श् ऊट् इत्येतौ भवतो यथासंख्यम् कौ धुट्यगुणे पञ्चमे च । विछ्—गोविट् । प्रछ्—पथिप्राट् । दिव्— अक्षद्यूः । पृष्टः, पृष्ट्वा । द्यूतः, द्यूत्वा, दुद्यूषति, । विश्नः, प्रश्नः । सर्व-धातुभ्यो मन्—स्योमा, अन्तरङ्गत्वाद् यत्वमेव । छस्य द्विःपाठो नैमित्तिकस्याप्यभावो वा ॥

## ५७ । श्रिव्यविमविज्वरित्वरामुपधया ॥

वणामुपधया सह वकारस्योङ् भवति कौ धुट्यगुणे पञ्चमे च ।

श्रिवु—श्रूः, श्रुवौ, श्रुवः । अव—ऊः, उवौ, उवः । मव—मूः, मुवौ, मुवः । ज्वरः—जूः, जुरौ, जुरः । त्वर—तूः, तुरौ, तुरः । श्रूतः, श्रूतवान्, श्रूतिः । ऊतिः, मूतिः, जूर्त्तिः, तूर्त्तिः । मन्—श्रोमा, अवतेरन्त्यस्वरादिलोपः—श्रोम् ॥

## ५८ । राल्लोप्यौ ॥

रेफात् परौ छकारवकारौ लोप्यौ भवतः कौ धुट्यगुणे पञ्चमे च । मुर्च्छा—मूः, मुरौ, मुरः । धुर्वी—धूः, धुरौ, धुरः । मूर्त्तिः, मूर्त्तः । निष्ठानत्वं नेष्यते । इहागुण पञ्चमानुवृत्तिर्न प्रयोजयति ॥

## ५९ । वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽञ्चातः ॥

वनतेस्तनोत्यादेः प्रतिषिद्धेटश्च पञ्चमो लोप्यो भवति धुट्यगुणे यथासम्भवम् आतश्चाद् भवति । वनु—वतः, वतवान्, वतिः, वत्वा । तनोत्यादिर्मनुबोधने पर्य्यन्तः । ततः, ततवान्, ततिः, तत्वा । प्रतिषिद्धेटश्च—हतः, हतवान् । यतः, यतवान् ? क्षणु, घृणु, तृणु, एषां न दीर्घः—क्षतम्, घृतम्, तृतमिति । पक्षे येषामिडस्ति, तेऽप्यनिट उच्यन्ते ।

## ६० । यपि च ॥

वनतितनोत्यादिप्रतिषिद्धेटां यपि च परे पञ्चमो लोप्यो भवति । वनु—प्रवत्य । तनु—प्रतत्य । षनु—प्रसत्य । हन—प्रहत्य । मन—प्रमत्य । एषामिति किम् ? प्रभ य ॥

## ६१ । वा मः ॥

प्रतिषिद्धेटां वा मकारो लोप्यो भवति यपि परे । प्राप्ते विभाषा । प्रयम्य, प्रयत्य प्रणम्य प्रणत्य ॥

## ६२ । न तिकि दीर्घश्च ॥

वनतितनोत्यादिप्रतिषिद्धेटां तिकि दीर्घो न भवति न च पञ्चमो लोप्यो भवति । वन्यात्—वन्तिः । तन्यात्—तन्तिः । यम्यात्—यन्तिः । हन्यात्—हन्तिः ॥

## ६३ । उन्देर्मनि ॥

उन्देर्मनि पञ्चमो लोप्यो भवति । ओद्म, ओद्मनी ॥

## ६४ । घञीन्धेः ॥

इन्धेर्घञि पञ्चमो लोप्यो भवति । एधः ॥

## ६५ । स्यदो जवे ॥

स्यन्देर्घञि स्यद इति दीर्घाभावो निपात्यते वेगेऽर्थे । स्यन्दू—स्यदः । अवोदहिमश्रथप्रश्रथा इति निपातयितव्याः—अवपूर्वस्य उन्देः—अवोदः, हिमपूर्वस्य प्रपूर्वस्य च श्रन्थेः—हिमश्रथः, प्रश्रथः ॥

## ६६ । रन्जर्भावकरणयोः ॥

रन्जेर्भावकरणयोर्विहिते घञि पञ्चमो लोप्यो भवति । रञ्जने रागः । भावे घञ् । रज्यतेऽनेनेति—रागः । भावकरणयोरिति किम् ? रज्यत्यस्मिन्निति—रङ्गः ॥

## ६७ । वुषघिनिणोश्च ॥

रन्जेर्वुषि घिनिणि च पञ्चमो लोप्यो भवति । शिल्पिनि वुष्—रजकः, रजकी । युजभजेत्यादिना घिनिण् रागी । चकारोऽनुक्तसमुच्चयार्थः, तेन युट्यपि—रजनम्, रजनी ॥

## ६८ । वृंहेः स्वरेऽनिटि वा ॥

वृंहेः स्वरादावनिटि पञ्चमो लोप्यो भवति वा । वर्हकः, वृंहकः । वर्हणम्, वृंहणम् । वर्हति, वृंहति । अनिटीति किम् ? वृंहितव्यम् । स्वर इति किम् ? वृंहेर्मन् दृश्यते—परिवृंहा, परिवृंढः, स्त्रियां क्तिः । कथं वृह्यते, वृंह्यते, वर्हिता ? वृंहिता । येषां प्रकृत्यन्तरमस्ति तेषां मते ञ्यञ्जनादावित्यपि स्यात् ॥

## ६९ । यमनमनतनगमां क्वौ ॥

एषां पञ्चमो ऽन्त्यो भवति क्वौ परे आतश्चाद् भवति । यम—संयत् । मन—सम्मत् । तनु—परीतत् । ह्रस्वस्य दीर्घता । गम्लृ—अगत् ॥

"हन्तेः सिच्यात्मने दृष्टः सूचनार्थे यमेरपि ।
विवाहे तु विभाषैव सिज्आशिषोर्गमेस्तथा ॥"

आहत, उपायत, उपायंस्त कन्यां छात्रः । समगत, समगंस्त । सङ्गसीष्ट, सङ्गंसीष्ट ॥

## ७० । विड्वनोरा ॥

विटि वनि च प्रत्यये परे पञ्चमस्याकारो भवति । विट्—अब्जाः, गोजाः । सनोतेः षत्वम् । वनिप्—विजावा । अग्रेगावा । ओणृ—अवावरी—वनो र च । घुणस्वावा—क्वनिप् । सानुनासिकमप्याकारमिच्छन्ति ॥

## ७१ । धुटि खनिसनिजनाम् ॥

धुडादौ प्रत्यये परे एषां पञ्चमस्याकारो भवति । खातः, खातिः । सातः, सातिः । जातः, जातिः । सनि च—सिषासति ॥

## ७२ । ये वा ॥

एषां पञ्चमस्याकारो भवति वा ये परे । प्रखाय, प्रखन्य, प्रसाय, प्रसन्य । प्रजाय, प्रजन्य । एवं खायते, खन्यते । चाखायते चङ्खन्यते । 'जा जनेर्विकरणे नित्यम्', जायते । व्यवस्थितविभाषया क्वचिद् ये न स्यात्—खान्यम्, सान्यम्, जान्यम्, तनोतेर्यणि वा वक्तव्यम्—तायते, तन्यते ॥

## ७३ । सनस्तिकि वा ॥

सनोतेस्तिकि परे पञ्चमस्याकारो भवति वा । सनुतात्—सातिः, संतिः । पुनर्वावचनाल्लोपश्च—सतिः ॥

## ७४ । स्फुरिस्फुल्योर्घञ्योतः ॥

अनयोर्घञि परे ओत आकारो भवति वा । विस्फारः, विस्फोरः । विस्फालः, विस्फोलः ॥

## ७५ । इज्जहातेः क्त्वि ॥

वा न वर्त्तते । क्त्वाप्रत्यये परे जहातेरिद् भवति । हित्वा गतः । जहातेरिति किम् ? हाङ्—हात्वा ॥

## ७६ । द्यतिस्यतिमास्थां त्यगुणे ॥

एषां तकारादावगुणे इद् भवति । दो—दितः, दितवान् । दितिः, दित्वा । सो—अवसितः, अवसितवान् । मा—मितः, मितवान् । स्था—स्थितः, स्थितवान् । अगुण इति किम् ? दाता, माता, स्थाता । तिपा निर्देशः किं ? धेट्—धीतः, धीतवान् । सनु—सातः, सातवान् ॥

## ७७ । वा छाशोः ॥

छाशोस्तकारादावगुणे इद् भवति वा । अवच्छितः, अवच्छातः । अवच्छितिः, अवच्छातिः । निशितः, निशातः । निशितिः, निशातिः । श्यतेर्व्रते नित्यं व्यवस्थितविभाषया - संशितो ब्राह्मणः, अन्यथा शिज्ञासिद्धमेव ॥

## ७८ । दधातेर्हिः ॥

दधातेस्तकारादावगुणे हिर्भवति । हितः, हितवान्, हिति, हित्वा । दधातेरिति किम् ? धेट्—धीतः, धीतवान् । वा न वर्त्तते धात्वन्तरत्वात् ॥

## ७९ । चरफलोरुदस्य ॥

अनयोरस्य तकारादावगुणे उद् भवति । चूर्त्तः, चूर्त्तिः । प्रफुल्तः । प्रफुल्तिः ॥

## ८० । दद दोऽधः ॥

दासंज्ञकस्य धेङ्वर्जितस्य तकारादावगुणे दद् भवति । दत्तः, दत्त-

वान्, दत्तिः, दत्त्वा । दासंज्ञस्येति किम् ? अवदातः । अघ इति किम् ? धेट्—धीतः, धीतवान् । दान्ते दस्य नत्वं, धान्ते धत्वं स्यात् । सन्निपातलक्षणस्य वर्णग्रहणे निमित्तत्वात् ॥

## ८१ । स्वरादुपसर्गाद् तः ॥

उपसर्गात् स्वरान्तात् परस्य दासंज्ञकस्य धेड्वर्जितस्य तकारादावगुणे प्रत्यये परे तकारो भवति । प्रत्तम्, नीत्तम्, परीत्तम्—इति कश्चिन्नामिनो ह्रस्वस्य दीर्घता । स्वरादिति किम् ? निर्दत्तम्, दुर्दत्तम् । सस्वरोऽस्वरो वायमादेशो न कश्चिद्दोष इति । कथं निदत्तम्, अवदत्तम्, प्रदत्तमिति ? वादिकर्मणि प्रादिसमासो निपातो वा ॥

## ८२ । यपि चादो जग्धिः ॥

तकारादावगुणे यपि च परेऽदो जग्धिर्भवति अग्धः, जग्धवान्, जग्धिः, जग्ध्वा, प्रजग्ध्य गतः । कथम् अन्नम् ? अदोऽनन्न इति ज्ञापकात् । अगुण इति किम् ? अत्तव्यम् ॥

"जग्धौ सिद्धेऽन्तरङ्गत्वाद् यपि चेति यदुच्यते ।
ज्ञापयत्यन्तरङ्गानां यपा भवति बाधनम् ॥ इत्यन्ये ॥"

प्रशम्य, आपृच्छ्य, प्रदीव्य, पञ्चमोपधाप्रभृतीनां दीर्घादयो न भवन्ति ॥

## ८३ । घञलोघस्लृः ॥

अदेर्घञि अलि च घस्लृर्भवति । लृकार उच्चारणार्थः । घासः । उपसर्गेऽरल्—विघसः । प्राचीति प्रघसः—अचि वक्तव्यम् ॥

## ८४ । क्तक्तवन्तू निष्ठा ॥

क्तक्तवन्तू निष्ठासंज्ञकौ भवतः । शब्दस्य नित्यत्वादन्वाख्याने शास्त्रमार्गैर्नैतरेतराश्रयदोष इति । शीर्णः, शीर्णवान् । भिन्नः, भिन्नवान् । निष्ठाप्रदेशाः—"निष्ठा" इत्येवमादयः । क्त्वा मकारान्तश्च कृत्प्रत्ययभावादसंख्यमित्यव्ययमेव ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु प्रथमः पादः समाप्तः ॥

## ८५ । धातोः ॥

धातोरिति पञ्चम्यन्तोऽनुकृतोऽविशेषे । धातोरित्ययमधिकारो वेदितव्यः । कर्तव्यम्, करणीयम् । धातोरिति किम् ? कुम्भता । कुम्भं करोतीति भावकर्मणोर्न तव्यादयः । "युष्मदि मध्यमः" इति सप्तम्युक्तं नोपपदम् । उत्सर्गः सिच्सन्विषये न स्यात् । "अथ धातोस्तोऽन्त्यपानुबन्धः" इत्यतो धातोरनुवर्त्तते, दुघूषतीत्यूड् न सिध्यति ॥

## ८६ । सप्तम्युक्तमुपपदम् ॥

धात्वधिकारेऽत्र सूत्रे सप्तम्या निर्दिष्टमुपपदसंज्ञं भवति । "कर्मण्यण्" "नाम्नि स्थश्च" इत्येवमादयः । उक्तमिति किम् ? सप्तम्यन्तमात्रे माभूत्—स्तम्बेरमः, कुरुचरः ॥

## ८७ । तत् प्राङ् नाम चेत् ॥

तदुपपदं नाम चेद् धातोः प्राग् भवति । कुम्भकारः, ग्रामस्थः । नामेति किम् ? भोक्तुमिच्छति ॥

## ८८ । तस्य तेन समासः ॥

तस्य नामोपपदस्य तेन कृदन्तेन धातुना सह समासो भवति । गोदः, जलजम्, क्रोधजम् । यथा हि प्रादयः क्रियाद्योतका उपसर्गा इति धातोः प्रागेव सिद्धास्तथोर्यादयोऽपि क्रियायोगे कृभ्वस्तिभ्यः एव प्राक् सिद्धाः । प्रकृत्य, ऊरीकृत्य, उररीकृत्य । तथा—शुक्लीकृत्य, पटपटाकृत्य—नाम्नां युक्तार्थत्वात् समासोऽपि सिद्ध एव । यथाभिधानमेते त्रयोऽपि योगा वक्ष्यमाणाभ्यां सह प्रपञ्चार्था एव । धातोरित्ययमपि वासरूपे कृत्सम्बन्धादिति ॥

## ८९ । नाव्ययेनानमा ॥

तस्य नामोपपदस्याव्ययकृदन्ते नामन्तवर्जितेन प्राग्भावसमासौ न भवतः । कृत्वालम्, अलं कृत्वा । भोक्तुं कालः, कालो भोक्तुम् । तस्येति किम् ? प्रकृत्य । अनमेति किम् ? निमूलकाषं कषति ॥

## १० । तृतीयादीनां वा ॥

"तृतीयायामुपदेशे" इत्यारभ्य यान्युपपदानि तानि तृतीयादीनि तेषामम्न्तेनापि प्राग्भावसमासो न भवति वा । मूलकेनोपदंशं भुङ्क्ते—मूलकोपदंशं भुङ्क्ते । भ्राष्ट्रादपकर्ष—भ्राष्ट्रापकर्षं धाना भक्षयति । तृतीयादीनामिति किम् ? समर्थो भोक्तुम् ॥

## ११ । कृत् ॥

अधिकारोऽयम् । सार्थ्यैरेव सम्बध्यते प्रथमान्तत्वात् , तेन वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञका वेदितव्याः । "कर्त्तरि कृतः" पाचकः, पक्त्वा । एवमन्येऽपि ॥

## १२ । वासरूपोऽस्त्रियाम् ॥

न विद्यते समानं रूपं यस्येति विग्रहः । स्त्र्यधिकारविहितं वर्जयित्वाऽसरूपकृत्प्रत्ययो बाधको वा भवति ॥

"विकल्पितेऽपवादेऽपि बाधनं तदवस्थितम् ।
उत्सर्गे न च जाभस्तद्बाधकत्वं विकल्प्यते ॥"

"स्वराद्यो" ऽपवादस्तद्विषये तव्यानीयौ—चेयम्, चेतव्यम्, चयनीयम् । एवं नन्द्यादेर्युः-नन्दनः, नन्दकः, नन्दयिता । एवमन्येऽपि । असरूप इति किम् ? घ्यणि यो न स्यात्—कार्य्यम्, कविषयेऽण् न स्यात्—गोदः—अनुबन्धोऽप्रयोगीति सारूप्यमेव । अस्त्रियामिति किम् ? चिकीर्षा—क्तिर्न स्यात् । तथा—ईषणा, श्रन्थना—युरेव । वाशब्दो व्यवस्थावाचीति—कयुट् तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति ॥

## १३ । तव्यानीयौ ॥

धातोः परौ तव्यानीयौ कृत्संज्ञकौ भवतः । कर्त्तव्यम्, करणीयम् । कृत्यत्वाद् भावे कर्मणि च स्यात् । केलिमः कर्मकर्त्तरीष्यते,—भिदेलिमा माषाः, पचेलिमास्तण्डुलाः । वास्तव्य इति कर्त्तरि दीर्घश्च रूढित्वात् ॥

## १४ । स्वराद् यः ॥

स्वरान्ताद् धातोर्यो भवति । चेय , चेतव्यम् । स्वरादिति सुख
र्थमेव

## ९५ । शकिसहिपवर्गान्ताच्च ॥

शकिसहिपवर्गान्ताच्च धातर्यो भवति । शक्यम्, सह्यम्, अप्यम्,
लभ्यम् ॥

## ९६ । आतखनोरिच्च ॥

आकारान्ताद् धातोः खनेश्च यो भवति । अनयोरन्तस्येकारो
भवति । देयम्, धेयम्, खेयम् । अत एत्वे कृतेऽसिद्धं बहिरङ्गमन्तरङ्ग
इत्यनित्येयम् ॥

## ९७ । यमिमदिगदां त्वनुपसर्गे ॥

एषामुपसर्गाभावे तु यो भवति । यम्यम्, मद्यम्, गद्यम् । अनुप-
सर्ग इति किम् ? प्रयाम्यम्, प्रमाद्यम्, प्रगाद्यम् । यमो नियमार्थं
वचनम् ॥

## ९८ । चरेराङि चागुरौ ॥

अनुपसर्गे चरेर्यो भवति आङि चागुरौ । चर्य्यम्, आचर्य्यो देशः ।
आङीति किम् ? अभिचार्य्यम् । अगुराविति किम् ? आचार्य्यो गुरुः ॥

## ९९ । पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु ॥

पण्यमिति निपात्यते विक्रेयेऽर्थे । पण्यं विक्रेयद्रव्यम्, पाय्यम-
न्यत् । नञ्पूर्वस्य वदेरवद्यमिति निपात्यते गर्ह्येऽर्थे । अवद्यं गर्ह्यम् ।
अनुद्यमन्यत्, मा भिन्न वदः क्यप् च । वृञो वर्य्या इत्यनिरोधे गम्यमाने
वृत्याऽन्या । स्त्रीलिङ्गनिर्देशादिति मतम्, वार्य्या ऋत्विजः ॥

## १०० । वह्यं करणे ॥

वह्यमिति निपात्यते करणेऽर्थे । वह्यं, शकटम् । वाह्यमन्यत् ॥

## १०१ । अर्य्यः स्वामिवैश्ययो ॥

अर्य्य इति निपात्यते स्वामिनि वैश्ये चार्थे। अर्य्यः स्वामी। अर्य्यो वैश्यः। आर्य्योऽन्यः॥

## १०२। उपसर्य्या काल्या प्रजने॥

प्राप्तः कालो यस्याः सा काल्येति संज्ञिता। प्रजनं प्रजनो गर्भग्रहणम्। प्रजने प्राप्तकाला चेत् उपसर्य्येति निपात्यते। उपस्रियत इत्युपसर्य्या गौः—ऋतुमतीत्यर्थः। उपसार्य्याऽन्या॥

## १०३। अजर्यं संगते च॥

अजर्य्यमिति निपात्यते सङ्गते कर्त्तरि। न जीर्य्यतीत्यजर्य्यं सङ्गतम्। सङ्गत इति किम्? अजरिता कम्बलः॥

## १०४। नाम्नि वदः क्यप् च॥

नाम्न्युपपदे वदेः क्यप् भवति चकाराद् यश्च। ब्रह्मणो वदनं—ब्रह्मोद्यम्, ब्रह्मवद्यम्। ब्रह्मणोद्यते कथा—ब्रह्मोद्या, ब्रह्मवद्या। नाम्नीति किम्? वाद्यम्, अनुवाद्यम्॥

## १०५। भावे भुवः॥

नाम्न्युपपदे भावे भुवः क्यप् भवति। ब्रह्मभूयं गतः—ब्रह्मत्वं गत इत्यर्थः। नाम्नीति किम्? भव्यम्, प्रभव्यम्। भावग्रहणमुत्तरार्थमिह सुखार्थ च॥

## १०६। हनस्त च॥

नाम्न्युपपदे हन्तेर्भावे क्यप् भवति। तकारश्चान्तादेशः। ब्रह्मणो हननम् ब्रह्महत्या। भाव इति किम्? श्वघात्यो मृगः। नाम्नीति किम्? घातः, उपघातः—हन्तेर्भावे घ्यण् न दृश्यते। यपि सति तोऽन्तो नास्ति क्यपो ह्यनुबन्धकत्वात्॥

## १०७। वृसृदृजुषीण्शासुस्तुगुहां क्यप्॥

नाम्नि भावे चेति निवृत्तम्। एषां क्यप् भवति। वृञ्—वृत्यः,

वृञ्स्तु—वार्य्या ऋत्विजः । इक्—आद्दत्यः । जुषी—जुष्यः । इण्—
इत्यः । इङ्स्तु—उपेयम् । शास्तोऽत्वनुबन्धः सुखार्थः—शिष्यः, स्तुत्यः,
गुह्यः । अवश्यस्तुत्यः इति पुनः क्यप् ग्रहणात् । "कथम् प्रनिवार्य्यो
गत्यर्थः स्वभावश्च देहिनाम्" । इति ? सम्भकेरन्यत्रापि, वृञ
इष्टो वा ॥

## १०८ । ऋदुपधाच्चाकृपिचृतेः ॥

ऋदुपधाद् धातोः कॢपिचृतिवर्जिताद् क्यप् भवति । वृत्यम्,
वृध्यम् । अकॢपिचृतेः किम् ? विकल्प्यम्, विचर्त्यम् । ऋदिति तपरः
सुखार्थः ॥

## १०९ । भृञोऽसंज्ञायाम् ॥

भृञोऽसंज्ञायां क्यप् भवति । भरणम्—भृत्यम् । भ्रियत इति
वा—भृत्यः । असंज्ञायामिति किम् ? भार्य्या नाम क्षत्रिया, भार्य्या
वधूः । ननु च संज्ञायामपि स्त्रियां क्यबस्ति, न तस्य भावे विधानात् ॥

## ११० । ग्रहोऽपिप्रतिभ्यां वा ॥

अपिप्रतिभ्यां परात् ग्रहेः क्यप् भवति वा । अपिगृह्यम्, अपिग्रा-
ह्यम्, प्रतिगृह्यम्, प्रतिग्राह्यम् ॥

## १११ । पदपक्ष्ययोश्च ॥

पक्षे भवः पक्ष्यो वर्गः । पदपक्ष्योरर्थयोर्ग्रहेः क्यप् भवति ।
गृह्यं पदं, यत् स्वरेण न सन्धीयते । अवगृह्यं पदं, यस्यावग्रहः क्रियते ।
पक्षे—ऽर्जुनगृह्या सेना । चकाराद् अस्वैरिणि बाह्यायां चार्थे गृह्यका
इति, परवश्यका इत्यर्थः । ग्रामगृह्या स्त्री, ग्रामबाह्येत्यर्थः ॥

## ११२ । वौ नीपूञ्भ्यां कल्कमुञ्जयोः ॥

वावुपपदे नीपूञ्भ्यां कल्कमुञ्जयोरर्थयोः क्यप् भवति यथा-
संख्यम् । विनीयः कल्कः । विनेयमन्यत् । विपूयो मुञ्जः, विपव्यम-
न्यत् ॥

## ११३ । कृवृषिमृजां वा ॥

कृञादिभ्यो विभाषया क्यप् भवति । कृत्यम्, कार्यम् वृष्यम्, वर्ष्यम् । मृज्यम्, मार्ग्यम् । दुहिशंसिभ्यां क्यबपि—दुह्यम्, दोह्यम् । शस्यम्, शंस्यम् । "कृत्ययुटोऽन्यत्रापि" इति वचनात् । तथा मृषोद्यमिति क्यबेव । तथा पाणिसमवाभ्यां सृजो घ्यणयोश्च—पाणिसर्ग्या समवसर्ग्या रज्जुः । तथा समो वा भृञः क्यप्—सम्भृत्यः सम्भार्य्यः । तथा तकिचतिपतिशसि यजिभ्यो य एव—तक्यम्, चत्यम्, पत्यम्, शस्यम्, यज्यम् । तथा गुहो घ्यणपि—गुह्यम्, गोह्यम् । तथा जयतेर्हलौ क्यबेव—जित्या हलिः, महद्धलं हलिरुच्यते ॥

## ११४ । सूर्य्यरुच्याव्यथ्याः कर्त्तरि ॥

एते निपात्यन्ते कर्त्तरि । षु प्रेरणे—सुवति लोकान्, सरति वेति सूर्य्यः । रोचत इति—रुच्यः । न व्यथत इत्यव्यथ्यः ॥

## ११५ । भिद्योद्ध्यौ नदे ॥

एतौ नदे कर्त्तरि निपात्येते । भिनत्ति कूलानीति—भिद्यो नदः । उज्झत्युदकमित्युद्ध्यो नदः । कथं भेद्यो नदः इति कर्मविवक्षायाम् ॥

## ११६ । पुष्यसिध्यौ नक्षत्रे ॥

एतौ निपात्येते नक्षत्रे कर्त्तर्यधिकरणे वा । पुष्णाति कार्य्याणि पुष्यन्त्यस्मिन्निति वा—पुष्यः । साधयति कार्य्याणि सिध्यन्त्यस्मिन्निति वा—सिध्यः, पुष्य एव ॥

## ११७ । युग्यं पत्रे ॥

युग्यमिति निपात्यते पत्रे वाहनेऽर्थे । युज्यतेऽनेनेति युज्यत इति वा युग्यम् ॥

## ११८ । कृष्टपच्यकुप्ये संज्ञायाम् ॥

एतौ निपात्येते संज्ञायाम् । कुप्ये त्वन्ते स्वयमेव—कुपव्यापोहयः, गुप्यत इति कुप्यम् सुवर्णरजताभ्यामन्यत् ॥

## ११९ । ऋवर्णव्यञ्जनान्ताद् घ्यण् ॥

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोर्घ्यण् भवति । कृ—कार्य्यम्, शॄ—शार्य्यम्, पाक्यम्, वाक्यम् । णकार इज्वद्भावार्थः । घकारः सामान्याभिघातार्थः ॥

## १२० । आसुयुवपिरपिलपित्रपिदभिचमां च ॥

आङ्पूर्वात् सुनोतेर्यौत्यादिभ्यश्च घ्यण् भवति । आसाव्यम्, याव्यम्, वाप्यम्, राप्यम्, लाप्यम्, अपत्राप्यम्, दन्भुरिह कृतनलोपः—अवदाभ्यम्, आचाम्यम् ॥

## १२१ । उवर्णादावश्यके ॥

अवश्यं भाव आवश्यकम् । उवर्णान्ताद् धातोरवश्यं भावे गम्यमाने घ्यण् भवति । नाव्यम्, लाव्यम्, अवश्यम् लाव्यम् अवश्यलाव्यम्,—अवश्यमः कृत्ये मस्य लुक् लव्यमन्यत् ॥

## १२२ । पाधोर्मानसामिधेन्योः ॥

पा धा इत्येतयोर्मानसामिधेन्योरर्थयोर्यथासंख्यं घ्यण् भवति । पाय्यं मानम्, वचनात् स्वार्थे त्यप्रति पेयमन्यत् । दधात्यग्निमिति धाय्या सामिधेनी, समिदाधानमन्त्रः । उपचारात् ऋग्विषयेऽपि वर्त्तते वा धाय्याः शंसन्ति, धेयमन्यत् ॥

## १२३ । प्राङोर्नियोऽसम्मतानित्ययोः स्वरवत् ॥

प्राङोरुपपदयोर्नियो धातोरसम्मतानित्ययोर्यथासंख्यं घ्यण् भवति स च स्वरवत् । प्रणाय्यश्चौरः, असम्मत इत्यर्थः । आनाय्यो दक्षिणाग्निः—यो गार्हपत्यादानीय प्रणीयते, स चानित्यो दक्षितः । कथं ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिन इति ? सम्यगापीति वचनात् ॥

## १२४ । सन्निकुण्डपः क्रतौ ॥

संपूर्वाच्चिनोतेः कुण्डपूर्वाच्च पिबतेः क्रतावभिधेये ण्यण् भवति । स च स्वरवत् । सञ्चीयतेऽसौ सञ्चाय्यः क्रतुः । कुण्डैः पीयते असौ कुण्डपाय्यः क्रतुः—ससोमको हि यागः क्रतुरर्थात् सोमः पीयतेऽस्मिन्नित्यभिधानादधिकरणेवा ॥

## १२५ । राजसूयश्च ॥

क्रतावभिधेये राजसूयश्च निपात्यते । षुञ् अभिषवे, राज्ञा सोतव्यो राजा वास्मिन् सूयत इति राजसूयः क्रतुः ॥

## १२६ । सान्नाय्यनिकाय्यौ हविर्निवासयोः ॥

एतौ हविर्निवासयोर्यथासंख्यं निपात्येते । सान्नाय्यम् हविः,—विशिष्टमेव यत् । सन्नेयमन्यत् । निकाय्यो निवासः, निचेयमन्यत् ॥

## १२७ । परिचाय्योपचाय्यावग्नौ ॥

एतावग्न्यावर्थे निपात्येते । परिचीयतेऽसौ परिचाय्योऽग्निः । उपचीयत इत्युपचाय्योऽग्निः ॥

## १२८ । चित्याग्निचित्येच ॥

एतावग्न्यावर्थे निपात्येते । चीयत इति—चित्योऽग्निः, अग्नेश्चयनम्—अग्निचित्या भावे । समूह्य इत्यूहिना सिद्धम् , अस्यापि क्वचिद् वहत्यर्थे प्रयोगः । संवाह्य इति चाग्नौ भवत्येव ॥

## १२९ । अमावस्या वा ॥

अमेह सहार्थे । अमापूर्वाद् वसतेर्ण्यणि कालाधिकरणे दीर्घाभावो निपात्यते वा । सहवसतोऽस्यां चन्द्रार्काविति अमावस्या, अमावास्या तिथिः । बहुलग्रहणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् ।

## १३० । ते कृत्याः ॥

ते तव्यादयः कृत्यसंज्ञका भवन्ति । कृत्यप्रदेशाः "भावकर्मणोः कृत्यक्तखलर्थाः" इत्येवमादयः ॥

## १३१ । वुण्तृचौ ॥

धातोः परौ वुण्तृचौ भवतः । कर्त्तरि कृतः । पाचकः, पक्ता । कथं गले चुप्यत इति गलेचोपकः, पादाभ्यां ह्रियते पादहारकः ? निपातनात् ॥

## १३२ । अच् पचादिभ्यश्च ॥

सर्वे धातवः पचादिषु पठ्यन्ते । तेभ्यः पचादिभ्योऽच् भवति । पचः, पठः, भवः । पचादिग्रहणं बाधकबाधनार्थम्, तेन श्वपचः, आरमरः इत्यण् न स्यात् । देवः, सर्पः, मेष इति को न स्यात् । पचमन्येऽप्यनुसर्त्तव्याः ॥

## १३३ । नन्द्यादेर्युः ॥

नन्द्यादेर्नामगणनिर्दिष्टाद् युर्भवति । नन्दिवासिमदिदूषिसाधिशोभिवर्धिभ्य इनन्तेभ्योऽसंज्ञायाम् । नन्दयतीति नन्दनः, एवं वासनः, मदनः, दूषणः, साधनः, शोभनः, वर्धनः । सहितपिदमः संज्ञायामनिनन्तात्सहनः, तपनः, दमनः । एवं जल्पनः, दर्पणः, रमणः, चन्दनः, संहर्षणः, सङ्कर्षणः, जनार्दनः, मधुसूदनः, पवनः, लवणः । नामगणनिपातनाण्णत्वम् । विभीषणः । चित्तविनाशनः—कुलदमनः—कर्मपूर्वाणामविषयेऽपि स्यात् ॥

## १३४ । ग्रहादेर्णिन् ॥

ग्रहादेर्नामगणनिर्दिष्टाण्णिन् भवति । गृह्णातीति ग्राही, स्थायी, मन्त्री, विभावी । याचिव्रजवदवसो नञ्पूर्वात्—अयाची, अव्राजी, अवादी, अवासी । स्वराग्तादपि त्वकर्तृकात्—अकारी धर्मस्य वाकातपः । विषयी देशे । विभावी, अभिभावी । भूतेऽर्थे—परिभवी परिभावी—पक्षे ह्रस्वत्वं निपातनात् । कथम् उत्साही, उद्गाही, सम्मर्दी, निवेशी ? अत्यर्थ इना सिद्धम् । एवम् अभ्याहारी, संव्याहारी, अपराधी, उपराधी ॥

## १३५। नाम्युपधप्रीकॄगॄज्ञां कः ॥

नाम्युपधात् प्रीणातेः किरतेर्गिरतेर्जानातेश्च को भवति। विक्षिपः विलिखः, प्रियः, उत्किरः, गिरः, गिलः, ज्ञः ॥

## १३६। उपसर्गे त्वातो डः ॥

उपसर्गे उपपदे त्वाकारान्ताद्धातोर्डो भवति। सुग्लः, सुम्लः। प्रह्व—डे सति सम्प्रसारणमुव् च न स्यात्। गोसन्दाय इति कथं? वाबाध्यात्। ॥

## १३७। धेड्दृशिपाघ्राध्मःशः ॥

उपसर्गे उपपदे पञ्चभ्यः शो भवति। उद्धयः, उत्पश्यः, उत्पिबः साहचर्यात् पिबतेः। धेटष्टकारः सुखार्थः। उज्जिघ्रः, उद्धमः। कथं पश्यः? अन्यत्रापीति वचनात्। तथा व्याजिघ्रतीति—व्याघ्रः ॥

## १३८। साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां त्वनुपसर्गे ॥

एषामनुपसर्गाभावे शो भवति। साहयतीति—साहयः। एवं सातयः। विदिसामान्यं—वेदयः। उदेजृ—उदेजयः। चेतयतीति—चेतयः। धृञ् धृङ् धारयः। पॄ—पारयः। लिम्पतीति—लिम्पः। विन्दतीति—विन्दः। साहचर्याच्च विदि अवयवे, विन्दुरिति निपातनाद्वा। कथं निलिम्पा नाम देवाः? अन्यत्रापीति वचनात्। तथा गां विन्दतीति गोविन्दः, अरविन्द इत्यत्र न स्यात्। ददः, दधः इति ददधयोरचा सिद्धम् ॥

## १३९। वा ज्वलादिदुनीभुवो णः ॥

ज्वलादिभ्यो दुनोतेर्नयतेर्भवतेश्चानुपसर्गे णो भवति वा। ज्वलः, ज्वालः, चलः, चालः। कसपर्यन्ता ज्वलादयो वृत्करणात्। दवः, दावः, नयः, नाय इति केचिदिच्छन्ति। भवः, भावः। अनुपसर्ग इति किम्? प्रज्वलः, प्रदवः, प्रणयः, प्रभवः ॥

## १४० । समाङो स्रुवः ॥

समाङोरुपपदयोः स्रवतेर्णो भवति । वा न स्मर्यते । संस्रावः, आस्रावः । समाङोरिति किम्? स्रवः, परिस्रवः ॥

## १४१ । अवे हृसोः ॥

अव उपपदे हरतेः स्यतेश्च णो भवति । अवहारः, अवसायः । अव इति किम्? हरः, विहरः ॥

## १४२ । दिहिलिहिश्लिषिश्वसिव्यध्यतीण्-श्यातां च ॥

एषां णो भवति देहः, लेहः श्लेषः । के प्राप्ते वचनम् । श्वासः, व्याधः, अत्यायः । उपसर्गे डवाधकं श्याग्रहणम्—अवश्यायः । श्यायः, धायः । प्रत्याय इत्यपि दृश्यते । अवतार इति चकारात् ॥

## १४३ । ग्रहेर्वा ॥

ग्रहेर्वा णो भवति । ग्राहो जलचरः, ग्रहः सूर्य्यादिः ॥

## १४४ । गेहे त्वक् ॥

ग्रहेर्गेहेऽभिधेये त्वग् भवति । गृह्णातीति गृहम्, गृहाः ।

## १४५ । शिल्पिनि वुष् ॥

शिल्पिन्यभिधेये वुष् भवति । अभिधानात् नृतिखनिरञ्जिभ्य एव । नर्त्तकः, नर्त्तकी । खनकः खनकी । रजकः, रजकी । शिल्पं विज्ञानकौशलम्, इनन्तश्च निकृष्टेऽभिधानात् ॥

## १४६ । गस्थकः ॥

गायतेः शिल्पिन्यभिधेये थकः प्रत्ययो भवति । गाथकः ॥

## १४७ । ण्युट् च ।

गायतेः शिल्पिन्यभिधेये ण्युट् च भवति । गायनः, गायनी । एतौ प्रत्ययावशिल्पिन्यपि दृश्येते ॥

## १४८ । हः कालव्रीह्योः ॥

जहातेः काले व्रीहौ चार्थे ण्युट् भवति । जहाति भावानिति हायनः संवत्सरः । जहत्युदकमिति हायना व्रीहयः । कालव्रीह्योरिति किम् ? हाता ॥

## १४९ । आशिष्यकः ॥

आशंसायां गम्यमानायां धातोरकः प्रत्ययो भवति । जीवतात् जीवकः, नन्दतात् नन्दकः ॥

## १५० । प्रुसृल्वां साधुकारिणि ॥

एषां साधुकारिण्यर्थेऽकः प्रत्ययो भवति । साधु प्रवते साधुप्रवकः, प्रवकः, सरकः, लवकः । साधुकरणं शिल्पमेव । एतत् स्त्रियामप्यायं प्रपञ्चार्थम् । साधुकारिणीति किम् ? प्रोता ॥

इति दौर्गसिंह्यां वृत्तौ कृत्सु द्वितीयः पादः समाप्तः ॥

---

## १५१ । कर्मण्यण् ॥

कर्मसंज्ञोपपदे धातोरण् भवति । कुम्भं करोतीति कुम्भकारः, एवं काण्डकारः, शरलावः, वेदाध्यायः । आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीत्यनभिधानाद्वाक्यमेव । महान्तं घटं करोतीति सापेक्षत्वात् । अघटं घटं करोतीति घटीकार इति च्व्यन्ते प्रागवस्था-र्थमात्रापेक्षे त्वण् विधीयते ॥

## १५२ । ह्वावामश्च ॥

एभ्यः कर्मण्युपपदेऽण् भवति । कापवाद्रः । स्वर्गह्वायः, तन्तु-वायः, धान्यमायः । वातिरकर्मकः । मीनातिमिनोत्योः के वृद्धिस्थे मारूपाभावः ॥

## १५३ । शीलिकामिभक्ष्याचरिभ्यो णः ॥

पयः कर्मण्युपपदे णो भवति । शीङिमच्नौ चुरादाविमन्तौ । मांसशीला, कर्मेरितक्, मांसकामा, मांसभक्षा । कल्याणमाचरति—कल्याणाचारा स्त्री । अपि हि स्त्रियामी स्यात् । शील्यत इति—शीलम् । मांसं शीलमस्याः—मांसशीला । कल्याणप्रतीक्षा । दुःखक्षमेति यथानभिधानादण् नास्ति तथेहापि । यद्येवम् अग्मोऽभिगमोऽस्याः—अग्मोऽभिगमेति स्यात्, अग्मोऽभिगामी चेष्यते । समासेऽप्यभिधानं चेत् कष्टमिति वचनम् ॥

## १५४ । आतोऽनुपसर्गात् कः ॥

कर्मण्युपपदे आकारान्तादनुपसर्गाद्धातोः को भवति । गोदः, अङ्गुलित्रः । अनुपसर्गादिति किम् ? गोसन्दायः—उपसर्गैर्व्यवधानत्वेऽप्यण् । ब्रह्मज्यः, मित्रह्वः—अन्यतोऽपि चेति डः ॥

## १५५ । नाम्नि स्थश्च ॥

नाम्न्युपपदे तिष्ठतेराकारान्ताच्च धातोः को भवति । अनुपसर्गादिति न वर्तते । कच्छेन पिबतीति कच्छपः, द्वाभ्यां पिबतीति द्विपः, समे तिष्ठतीति समस्थः, ग्रामे सन्तिष्ठतीति ग्रामसंस्थः ॥

## १५६ । तुन्दशोकयोः परिमृजापनुदोः ॥

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदिभ्यां को भवति यथासंख्यम् । तुन्दं परिमार्ष्टि—तुन्दपरिमृजः, अलस एवाभिधीयते । तुन्दपरिमार्जोऽन्यः । शोकमपनुदति—शोकापनुदः आनन्दकर एव । अन्यत्र शोकापनोदो धर्मकथक एव ॥

## १५७ । प्रे दाज्ञः ॥

कर्मणि प्रे चोपपदे दाज्ञाभ्यां को भवति । प्रपाप्रदः, पथिप्रज्ञः । दारूपमिह गृह्यते, न संज्ञा, ज्ञासाहचर्यात्, तेन—स्तनौ प्रधायतीति, स्तनप्रधायाः ॥

## १५८ । समि ख्यः ॥

कर्मणि सभि चोपपदे वञ्चिको धातोः को भवति । गां सन्दने— गोसन्दः । सोपसर्गत्वाद् वचनम् । मूलानि विभुजतीति मूलविभुजो रथः, नखमुचानि धनूंषि, अभिधानात् प्राकन एव कः । तथा काकेभ्यो गुहितव्याः—काकगुहास्तिलाः—कर्म्मण्यपि दृश्यते ॥

## १५९ । गः ष्टक् ॥

कर्मण्युपपदेऽनुपसर्गाद् गायतेष्टग् भवति । मधुरं गायतीति मधुरगी । सामगी । अनुपसर्गादिति किम् ? सामसङ्गायः । चडनुबन्धो नद्यादेः प्रयोगार्थः ॥

## १६० । सुरासीध्वोः पिबतेः ॥

सुरासीध्वोः कर्मणोरुपपदयोरनुपसर्गात् पिबतेष्टग् भवति । सुरापी, सीधुपी, । सुरासीध्वोरिति किम् ? क्षीरपा ब्राह्मणी । पिबतेरिति किम् ? सुरापा स्त्री । अनुपसर्गादिति किम् ? सुराप्रपायः ॥

## १६१ । हृञोऽज् वयोऽनुद्यमनयोः ॥

अनुपसर्गादिति न स्मर्यते । कर्म्मण्युपपदे हरतेर्वयसि गम्यमानेऽनुद्यमाने च वर्त्तमानाद् अज् भवति । ऊर्ध्वं यमनम् उद्यमनम्, ततोऽन्यद् अनुद्यमनम् । वयोग्रहणमुद्यमनार्थं सम्भाव्यमानं चात्र वयो गम्यते । कवचहरः क्षत्रियकुमारः । अस्थिहरः श्वा । अंशहरो दायादः । वातहरं तैलम् । उद्यमने तु—भारहारः । अणोऽपवादोऽयम् ॥

## १६२ । आङि ताच्छील्ये ॥

कर्म्मण्युपपदे आङि ताच्छील्ये गम्यमाने हृञोऽज् भवति । फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् । पुष्पाण्याहर्त्तुं शीलमस्येति पुष्पाहरो विद्याधरः । ताच्छील्य इति किम् ? भाराहरः ॥

## १६३ । अर्हश्च ॥

ताच्छील्यमाक् च न स्मर्यते । कर्मण्युपपदेऽर्हतेरज् भवति । पूजार्हा स्त्री ॥

## १६४ । धृञः प्रहरणे चादण्डसूत्रयोः ॥

दण्डसूत्रवर्जिते प्रहरणवाचके कर्मण्युपपदे धृञोऽञ् भवति । वज्रं धरतीति वज्रधरः, एवं चक्रधरः । अदण्डसूत्रयोरिति किम् ? दण्डधारः, सूत्रधारः । सूत्रप्रतिषेधादप्रहरणेऽपि—भूधरः, जटाधरः ॥

## १६५ । धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु-ग्रहेर्वा ॥

एषु कर्मसूपपदेषु ग्रहेरञ् भवति वा । धनुर्गृह्णातीति धनुर्ग्रहः, धनुर्ग्राहः । दण्डग्रहः, दण्डग्राहः । त्सरुग्रहः, त्सरुग्राहः । लाङ्गलग्रहः । लाङ्गलग्राहः, अङ्कुशग्रहः, अङ्कुशग्राहः । यष्टिग्रहः, यष्टिग्राहः । तोमर-ग्रहः, तोमरग्राहः । घटग्रहः, घटीग्रहः, पचादित्वादच् । घटग्राहः, घटीग्राहः इत्यणपि । तथा सूत्रग्रह इति धारणे । अन्यत्र सूत्रग्राहः । पचादिप्रपञ्चार्थं प्रकरणमिदम् ॥

## १६६ । स्तम्बकर्णयो रमिजपोः ॥

स्तम्बकर्णयोर्नाम्नोरुपपदयो रमिजपिभ्यां यथासंख्यमञ् भवति । स्तम्बे रमते—स्तम्बेरमो हस्ती । कर्णे जपतीति कर्णेजपः सूचक उपा-[illegible] । तथा [illegible] ॥

## १६७ । शम्पूर्वेभ्य संज्ञायाम् ॥

शम्पूर्वेभ्यो धातुभ्यः संज्ञायां गम्यमानायामञ् भवति । शं करो-तीति शङ्करः, शं भवतीति शम्भवः, शंवरः, शंवदः । शं पूर्वो येभ्यो धातुभ्य इति बहुव्रीहिणा कृञो हेत्वादिष्वपि टो बाध्यते—तेन शङ्करा नाम परिव्राजिका ॥

## १६८ । शीङोऽधिकरणे च ॥

अधिकरणे च नाम्न्युपपदे शेतेरञ् भवति । खे शेते—खशयः । [illegible] पार्श्वाभ्यां करणे—पार्श्वेन शेते—पार्श्वशयः । एव पृष्ठशयः,

उदरशयः, दिग्धेन सह शेते—दिग्धसहशयः इति समासद्वयम्। उत्ता-नादिषु कर्तृषु—उत्तानः शेते—उत्तानशयः॥

## १६९। चरेष्टः॥

अधिकरणे नाम्न्युपपदे च चरेष्टो भवति। कुरुषु चरतीति कुरु-चरः। कुरुचरी। चकारादन्यत्रापि भवति—भिक्षां चरतीति भिक्षाचरः भिक्षाचरी। सेनया चरतीति सेनाचरः, सेनाचरी। आदाय चरतीति आदायचरः॥

## १७०। पुरोऽग्रतोऽग्रेषु सर्त्तेः

एषूपपदेषु सर्त्तेष्टो भवति। पुरः सरतीति पुरः सरः, पुरःसरी। अग्रतःसरः, अग्रतःसरी—आद्यादित्वात् तस्। अग्रेसरः, अग्रेसरी—एकारान्तमव्ययं निपातनादलुग् वा॥

## १७१। पूर्वे कर्त्तरि॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टो भवति। पूर्वः सरतीति पूर्व-सरः, पूर्वसरी—कस्मात् पूर्व इत्यविवक्षैव। कर्त्तरीति किम्? पूर्वं सरतीति पूर्वसारः॥

## १७२। कृञो हेतुताच्छील्यानुलोम्येष्वशब्द-श्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु॥

अशब्दादिषु कर्म्मसूपपदेषु हेतौ ताच्छील्ये आनुलोम्ये च गम्य-माने कृञष्टो भवति। प्रतीतशक्तिकं कारणं हेतुरिह गृह्यते कृञोऽभिन्नत्वात्। यशस्करी विद्या। ताच्छील्ये—श्राद्धकरः। आनुलोम्यमनुकूलता—वचनकरः। अशब्दादिष्विति किम्? शब्दकारः, श्लोककारः, कलहकारः, गाथाकारः, वैरकारः, चाटुकारः, सूत्रकारः, मन्त्रकारः, पदकारः। हेत्वानुलोम्ययोरविवक्षा स्थितैव। ताच्छील्ये स्यादिति वर्जनम्। कथं कुम्भादिकरणशीलाः—कुम्भकारादय इत्यभिधानात्॥

१७३ । तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिविबलिभक्तिक्षेत्रजङ्घाधन्वररुःसंख्यासु च ॥

अहेत्वाद्यर्थमिदम् । तदाद्यादिषु कर्म्मसूपपदेषु कृञष्टो भवति । तच्छब्दस्य सकारान्तत्वोऽयम् । तत्करोतीति तत्करः, तस्कर इति रूढित्वात् तस्य सकारः । एवं यत्करः, आदिकरः, अन्तकरः, अनन्तकरः, कारकरः, बहुकरः, बाहुकरः, अहस्करः, दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, नान्दीकरः, किङ्करः, लिपिकरः, लिविकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, धनुष्करः, अरुष्करः, एककरः, द्विकरः, त्रिकरः, चतुष्करः । किंयत्तद्बहुषु स्त्रियामीमेव कर्त्तव्यः । चकाराद्—रजनीकरः, क्षपाकरः, क्षणदाकरः, इत्यादयोऽप्यनुसर्तव्याः ॥

१७४ । भृतौ कर्मशब्दे ॥

कर्म्मशब्दे कर्म्मण्युपपदे कृञष्टो भवति भृतौ गम्यमानायाम् । भृतिः—कर्म्ममूल्यम् । कर्म्मकरो भृतकः, कर्म्मकरी दासी । भृताविति किम् ? कर्म्मकारः । शब्दग्रहणं प्रत्ययार्थम् । कर्म्मस्यादिति ॥

१७५ । इः स्तम्बशकृतोः ॥

स्तम्बशकृतोः कर्म्मणोरुपपदयोः कृञ इर्भवति । स्तम्बकरिर्व्रीहिरेव, स्तम्बकारोऽन्यः । शकृत्करिर्वत्स एवाभिधानात् । शकृत्कारोऽन्यः ॥

१७६ । हरतेर्दृतिनाथयोः पशौ ॥

दृतिनाथयोः कर्म्मणोरुपपदयोर्हरतेरिर्भवति पशौ कर्त्तरि । दृतिहरिः पशुः, नाथहरिः पशुः ॥

१७७ । फलेमलरजःसु ग्रहेः ॥

एषु कर्म्मसूपपदेषु ग्रहेरिर्भवति । फलानि गृह्णातीति फलेग्रहिः,

सूत्रनिपातनादेत्वम् । मलं गृह्णातीति मलग्रहिः, रजो गृह्णातीति रजोग्रहिः ॥

## १७८ । देववातयोरापेः ॥

देववातयोः कर्म्मणोरुपपदयोराप्नोतेरिर्भवति । देवानाप्नोतीति देवापिः, वातानाप्नोतीति वातापिः, विशिष्ट एव रूढित्वात् ॥

## १७९ । आत्मोदरकुक्षिषु भृञः खिः ॥

एषु कर्म्मसूपपदेषु भृञः खिर्भवति । आत्मानमेव बिभर्त्ति—आत्मम्भरिः, एवम् उदरम्भरिः, कुक्षिम्भरिः ॥

## १८० । एजेः खश् ॥

कर्म्मण्युपपदे एजयतेः खश् भवति । अङ्गमेजयः, जनमेजयः—खानुबन्धान्मोऽन्तः । शानुबन्धे सार्वधातुकत्वाद् विकरण इनो गुणः स्यात् ।

## १८१ । शुनीस्तनमुञ्जकूलास्य पुष्पेषु धेटः ॥

एषु कर्म्मसूपपदेषु धेटः खश् भवति । शुनीं धयतीति शुनिन्धयः, स्तनौ धयतीति स्तनन्धयः, एवं मुञ्जन्धयः, कूलन्धयः, आस्यन्धयः, पुष्पन्धयः । मुञ्जादिषु केचिन्नेच्छन्ति । प्रकृतावानर्थक्याद् धेटष्टकारो नद्याद्यर्थो विज्ञायते—शुनिन्धयी, स्तनन्धयी ॥

## १८२ । नाडीकरमुष्टिपाणिनासिकासु ध्मश्च ॥

एषु कर्म्मसूपपदेषु धमतेर्धेटश्च खश् भवति । नाडिन्धमः, नाडिन्धयः, करन्धमः, करन्धय इति नेच्छन्त्येके । मुष्टिन्धमः, मुष्टिन्धयः, पाणिन्धमः, पाणिन्धय इति नेच्छन्त्येके । नासिकन्धमः, नासिकन्धयः। शुनीस्तनघटीखारीवातेषु धमतेरित्येके—शुनिन्धमः, स्तनन्धमः, घटिन्धमः, खारिन्धमः, वातन्धमः ॥

## १८३ । विध्वरुस्तिलेषु तुदः ॥

एषु कर्म्मसूपपदेषु तुदतेः खश् भवति । विधुन्तुदः, अरुन्तुदः, तिलन्तुदः ॥

१८४ । असूर्य्योग्रयोर्दृशः ॥

असूर्य्योग्रयोः कर्म्मणोरुपपदयोर्दृशः खश् भवति । न सूर्यं पश्यन्ति असूर्य्यम्पश्यानि मुखानि, असूर्य्यम्पश्या राजदाराः—सूर्य्यमपि न पश्यन्तीत्यर्थः । दृशिना सह सम्बद्धस्य नञः सूर्य्येण सह समासो गमकत्वात् । उग्रम्पश्यः ॥

१८५ । ललाटे तपः ॥

ललाटे कर्म्मण्युपपदे तपतेः खश् भवति । ललाटं तपतीति ललाटन्तपः ॥

१८६ । मितनखपरिमाणेषु पचः ॥

एषु कर्म्मसूपपदेषु पचतेः खश् भवति । मितम्पचा ब्राह्मणी, नखम्पचा यवागूः, प्रस्थम्पचो माणवकः । द्रोणम्पचा स्थाली । प्रस्थादय एव परिमाणाऽन्यत्राभिधीयन्ते, न कालः संख्या च, तेन मासं पचति, एकं पचतीति वाक्यमेव ॥

१८७ । कूल उद्रुजोद्वहोः ॥

कूले कर्म्मण्युपपदे उद्रुजोद्वहोः खश् भवति । कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः ॥

१८८ । वहेलिहाभ्रं लिहपरन्तपेरम्मदाश्च ॥

एते खश् प्रत्ययान्ता निपात्यन्ते । वहंलिहो गौः, अभ्रंलिहो वायुः, परं तापयतीति परंतपः । इरया माद्यतीति—इरम्मदो हस्ती । चकाराद्—वातमजन्तीति वातमजा मृगाः, शर्धं जहतीति शर्धञ्जहा माषाः ॥

१८९ । वदेः खः प्रियवशयोः ॥

प्रियवशयोः कर्म्मणोरुपपदयोर्वदेः खो भवति । प्रियंवदः, वशंवदः । खपरार्थमिह प्रक्रियालाघवार्थं च खः क्रियते ॥

## १९० । सर्वकूलाभ्रकरीषेषु कषः ॥

एषु कर्म्मसूपपदेषु कषतेः खो भवति । सर्वङ्कषः खलः, कूलङ्कषा नदी, अभ्रङ्कषो गिरिः, करीषङ्कषा वात्या ॥

## १९१ । भयार्त्तिमेघेषु कृञः ॥

एषु कर्म्मसूपपदेषु कृञः खो भवति । भयं करोतीति भयङ्करः, अभयङ्करः—भयेन तदन्तविधिरिष्टः । ऋतिङ्करः, मेघङ्करः ॥

## १९२ । क्षेमप्रियमद्रेष्वण् च ॥

एषु कर्म्मसूपपदेषु कृञः खो भवति अण् च । क्षेमङ्करः, क्षेमकारः । प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । वेति सिद्धेऽण् ग्रहणं हेत्वादिष्वपि टो बाधनार्थम् । एष्विति किम् ? भद्रकारः ॥

## १९३ । भावकरणयोस्त्वाशिते भुवः ॥

आशितशब्द उपपदे भवतेर्भावे करणे च खो भवति । आशनमाशितम्, आशितस्य भवनम्—आशितम्भवम्, आशितं भवत्यनया—आशितम्भवा पञ्चपूली ॥

## १९४ । नाम्नि तॄभृवृजिधारितपिदमिसहां संज्ञायाम् ॥

नाम्न्युपपद एभ्यः संज्ञायां खो भवति । रथेन तरतीति रथन्तरं साम । विश्वं बिभर्त्ति विश्वम्भरा अवनिः । पतिं वृणीते पतिंवरा कन्या । धनं जितवान् । धनञ्जयोऽर्जुनः । वसु धारतीति वसुन्धरा पृथ्वी । अभिधानाद् ह्रस्वः । शत्रुं तपतीति शत्रुन्तपः । अरिं दाम्यति दमयति वा अरिन्दमः । शत्रुं सहते शत्रुंसहः । नाम कर्म्म च यथासम्भवं संज्ञात्वाद् गम्यते । नाम्नीति सुखार्थमेव ॥

## १९५ । गमश्च ॥

नाम्न्युपपदे संज्ञायां गमश्च खो भवति । सुतङ्गमः, भुजाभ्यां गच्छतीति भुजङ्गमः, मितं गच्छतीति मितङ्गमो हस्ती, पूर्वङ्गमाः पन्थानः, हृदयङ्गमा वाचः ॥

## ११६ । उरोविहायसोरुरविहौ च ॥

उरोविहायसोरुपपदयोर्गमश्च संज्ञायां खो भवति तयोरुरविहौ च यथासंख्यं भवतः । उरसा गच्छतीत्युरङ्गमः, विहायसा गच्छतीति विहङ्गमः ॥

## ११७ । डोऽसंज्ञायामपि ॥

नाम्न्युपपदे गमेर्डो भवति संज्ञायामसंज्ञायामपि उरोविहायसोरुरविहौ च यथासंख्यं भवतः । भुजगः, तुरगः, प्लवगः, पतगः, अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, सर्वत्रगः, पन्नगः, ग्रामगः, गुरुतल्पगः, सुगः, दुर्गः, निर्गो देशः । उरगः, तीरगः, पीठगः, उरगः, विहगः ॥

## ११८ । विहङ्गतुरङ्गभुजङ्गाश्च ॥

एते डप्रत्ययान्ता निपात्यन्ते संज्ञायामेव । विहायसा गच्छतीति विहङ्गः, तुरो गच्छतीति तुरङ्गः, भुजाभ्यां गच्छतीति भुजङ्गः, चकारात्—पतो गच्छतीति पतङ्गः, प्लवेन गच्छतीति प्लवङ्गः, प्रवेण गच्छतीति प्रवङ्गः ॥

## ११९ । अन्यतोऽपि च ॥

गमेरन्यस्मादपि संज्ञायामसंज्ञायामपि नाम्न्युपपदे डो भवति । वारि चरतीति वार्चो हंसः, गिरौ शेते—गिरिशः, वरानाहन्ति—वराहः, परिखन्यते—परिखा—कर्म्मण्यपि दृश्यते ॥

## २०० । हन्तेः कर्मण्याशीर्गत्योः ॥

कर्म्मण्युपपदे आशिषि गतौ च वर्त्तमानाद् हन्तेर्डो भवति । शत्रुं वध्यात्—शत्रुहः, क्रोशं हन्ति—क्रोशहः । कर्म्मण्येव, निरपेक्षत्वात् कर्मग्रहणं सुखार्थम् ॥

## २०१ । अपात् क्लेशतमसोः ॥

क्लेशतमसोः कर्मणोरुपपदयोरपात्परस्य हन्ते र्डो भवति । क्लेशापहः, तमोऽपहः । कथं सुखापहः, दुःखापहः, ज्वरापहः, वातपित्तकफापहः, विषाग्निदर्पापह ? अन्यतोऽपि चेति सिद्धं, प्रपञ्चार्थं डविधानम् । कथं दार्वाघाटः, चार्वाघाटः, वर्णसङ्घाटः ? घटतेर्भविष्यति । चार्वाहन्ति—चार्वाघाटः, एवं वर्णसङ्घाटः—दार्वाघाटोऽपि तर्हि स्यात् ? परसज्ञायामिष्यत एव ॥

## २०२ । कुमारशीर्षयोर्णिन् ॥

शिरःपर्य्यायः शीर्षशब्दः । कुमारशीर्षयोः कर्मणोरुपपदयोर्हन्ते र्णिन् भवति । कुमारघाटी, शीर्षघाटी ॥

## २०३ । टग् लक्षणे जायापत्योः ॥

लक्षणयोगाल्लक्षणम् । जायापत्योः कर्मणोरुपपदयोर्हन्तेर्लक्षणवति वर्त्तरि टग् भवति । जायाघ्नो ब्राह्मणः, पतिघ्नी वृषली ॥

## २०४ । अमनुष्यकर्तृकेऽपि च ॥

कर्मण्युपपदेऽमनुष्यकर्तृकेऽपि धात्वर्थे वर्त्तमानाद् हन्तेष्टग् भवति । जायाघ्नस्तिलकः, । पतिघ्नी पाणिरेखा, श्लेष्मघ्नं त्रिकटुकम् । पित्तघ्नं घृतम्, वातघ्नं तैलम् । अमनुष्यकर्तृक इति किम् ? आखुघातः शूद्रः, ब्राह्मणघातो वृषलः । कथं चौरघातो गजः, शत्रुघातो वृषभः ? अपिशब्दात् । कृतघ्नः खलः, शत्रुघ्नः शूर इति च भवति ॥

## २०५ । हस्तिबाहुकपाटेषु शक्तौ ॥

एषु कर्मसूपपदेषु शक्तौ गम्यमानायां हन्तेष्टग् भवति । हस्तिघ्नः, बाहुघ्न इति मतम्, कपाटघ्नः । नगरे स्वहस्त्यविवक्षणात्—नगरघ्नोऽग्निः, नगरघातो हस्तीचेत् ॥

## २०६ । पाणिघटाडघौ शिल्पिनि ॥

एतौ शिल्पिनि कर्त्तरि निपात्येते । पाणिभ्यां पाणौ वा हन्ति—

पाणिघः, ताडं हन्ति—ताडघः । शिल्पिनीति किम् ? पाणिघातः, ताडघातः, राजानं हन्ति—राजघ इत्यप्यधिकारात् ॥

## २०७ । नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः स्युट् करणे ॥

अभूततद्भावे वर्त्तमानेषु नग्नादिषूपपदेषु कृञः स्युड् भवति करणे कारके । अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करणं द्यूतम्, एवं पलितङ्करणं तैलम्, प्रियङ्करणं शीलम्, अन्धङ्करणः शोकः, स्थूलङ्करणं दधि, सुभगङ्करणं रूपम्, आढ्यङ्करणं वित्तम् । अनग्नङ्करणमित्यादि तदन्तविधिना । अभूततद्भाव इति किम् ? आढ्यं करोति—तैलेनाभ्यञ्जयतीत्यर्थः—उत्पादार्थेऽप्यभूततद्भावस्याविवक्षितत्वात् । व्यक्तेर्विवक्षितत्वाच्च्व्यन्तेषु न भवति, उत्तरत्राप्येवं । नग्नीकरोत्यनेन युद्धपि नैवाविशेषात् ॥

## २०८ । भुवः खिष्णुखुकञौ कर्त्तरि ॥

अभूततद्भावे नाग्नादिषूपपदेषु भुवः खिष्णुखुकञौ कर्त्तरि भवतः । नग्नम्भविष्णुः, नग्नम्भावुकः । पलितम्भविष्णुः, पलितम्भावुकः । प्रियम्भविष्णुः, प्रियम्भावुकः । अन्धम्भविष्णुः, अन्धम्भावुकः । स्थूलम्भविष्णुः, स्थूलम्भावुकः । सुभगम्भविष्णुः, सुभगम्भावुकः । आढ्यम्भविष्णुः, आढ्यम्भावुकः । अनग्नम्भविष्णुः, अनग्नम्भावुक इत्यादि तदन्तविधिना च्व्यन्तेषु न भवति—आढ्यीभविता । ताच्छीलिकत्वाभावास्त्यभूततद्भाव इति न पराबपोष्णा कञो । इकारः सुखार्थः । तथा कर्त्तरीति ॥

## २०९ । भजो विण् ॥

कर्म्मण्युपपदे भजो विण् भवति । अर्धभाक्, पादभाक् । उपसर्गेऽपि केचित्—अर्धप्रभाक् ॥

## २१० । सहश्छन्दसि ॥

नाम्न्युपपदे सहश्छन्दसि संज्ञायां विण् स्यात् स च लोके प्रयुज्यत इति वचनम्। तुराषाट्। "तुरासाहं पुरोधाये" ति॥

## २११। वहश्च॥

नाम्न्युपपदे वहेश्छन्दसि संज्ञायां विण् भवति। प्रष्ठवाट्, प्रष्ठौही—वाहेर्वाशब्दस्यौविति। इदमपि पूर्ववत्॥

## २१२। अनसि डश्च॥

अनस्युपपदे वहेर्विण् भवति, अनसश्च डो भवति। अनो वहतीति—अनड्वान्। अनडुही रूढित्वात्॥

## २१३। दुहः को घश्च॥

कर्म्मण्युपपदे दुहः को भवति, घश्चान्तादेशः। कामदुघा गौः॥

"गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्य्यते बुधैः।

दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥"

## २१४। विट् क्रमिगमिखानिसनिजनाम्॥

नाम्न्युपपद एभ्यो विड् भवति॥

"अग्रेगा उदधिक्राश्च गोषाश्च विषखास्तथा।

श्रियं ददतु राजेन्द्र! तवाब्जा सहिता इमे॥"

छन्दसि संज्ञात्वेन विश्रुता लोके प्रयुज्यन्त इति मतम्॥

## २१५। मन्त्रे श्वेतवहुक्थशंसपुरोडाशावयजिभ्यो विण्॥

एभ्यो विण् भवति मन्त्रे। श्वेतैरुह्यते—श्वेतवाः इन्द्रः, उक्थान्युक्थैर्वा शंसति—उक्थशाः यजमानः, पुरो दाशत्येनम्—पुरोडाः—दस्य डत्वं निपातनात्। पुरो दश्यत इति वा आकारान्तश्च निपात्यते। सदा पुरोडाशपवित्रिताधर इति। अवयजते अवयाः। विरामे व्यञ्जनादौ चैषामन्तस्य डस्—श्वेतवोभ्याम्। पुरोडोभ्याम्। उक्थशोभ्याम्,

मदन्तपदे पुरोडाशाभ्याम् । स्वरादौ तु—श्वेतवाहौ, उक्थशंसौ, अवयाजौ । मन्त्रे रूढित्वाद् यथादर्शनं गम्यते । संज्ञात्वाल्लोके प्रयुज्यन्त इति मतम् ॥

## २१६ । आतो मनक्वनिब्वनिब्विचः ॥

आकारान्ताद्धातोर्मन् क्वनिप् वनिप् विच् इत्येते प्रत्यया भवन्ति । मन्—शोभनं ददाति सुदामा । अश्व इव तिष्ठति—अश्वत्थामा । क्वनिप् । सुपीवा, सुधीवा । वनिप —घृतपावा, भूरिदावा । विच्—कीलालपाः ॥

## २१७ । अन्येभ्योऽपि दृश्यन्ते ॥

अन्येभ्योऽपि धातुभ्य एते प्रत्यया दृश्यन्ते । मन—सुशर्मा, क्वनिप्—प्रातरित्वा, वनिप्—विजावा, विच्—रिश रुश हिंसायाम्—रेट्, रोट् । दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## २१८ । क्विप् च ॥

धातोः क्विप् च दृश्यते । उखायाः स्रंसते—उखास्रत्, पर्णानि ध्वंसते—पर्णध्वत्, दिव—अक्षद्यूः, ऋक्, प्रत्यङ्, ऊः, कीः, गीः, लूः ॥

## २१९ । वहे पञ्चम्यां भ्रंशेः ॥

वहे पञ्चम्यन्त उपपदे भ्रंशेः क्विप् भवति । वहाद् भ्रश्यति—वहभ्रट् ॥

## २२० । स्पृशोऽनुदके ॥

अनुदके नाम्न्युपपदे स्पृशः क्विप् भवति । घृतं स्पृशतीति घृतस्पृक्, मन्त्रेण स्पृशतीति मन्त्रस्पृक् । अनुदक इति किम् ? उदकस्पर्शः ॥

## २२१ । अदोऽनन्ने ॥





अनन्ने नाम्न्युपपदेऽदः क्विब् भवति । शस्यमत्ति—शस्यात्, आममत्ति—आमात् । अनन्न इति किम् ? अन्नादः । कणाद इत्यपि दृश्यते ।

## २२२ । क्रव्ये च ॥

क्रव्ये चोपपदेऽदः क्विब् भवति । पुनर्वचनात् पक्के—क्रव्यात्, अपक्केऽण्येव—क्रव्यादाः राक्षसाः । चतुःसूत्रीयं प्रपञ्चार्थेति ॥

## २२३ । ऋत्विग्दधृक्स्रग्दिगुष्णिहश्च ॥

एते क्विबन्ता निपात्यन्ते । ऋतौ यजतीति—ऋत्विक् कृदित एव धृषो द्विर्वचनम्—दधृक्, सृजेर्मृतः परोऽत्, कर्मणि क्विप्—सृजति तामिति स्रक् । दिशेः कर्मणि क्विप्—दिशति तामिति दिक्, ऊर्ध्वं स्निह्यति—उष्णिक्, उदो दलोपः, षत्वं निपातनात् । गत्वं च हृगादित्वात् ॥

## २२४ । सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि ॥

एषामुपसर्गेऽनुपसर्गेपि नाम्न्युपपदेऽपि क्विब् भवति । उपसीदति—उपसत्, सत्, सभासत् । द्विषः साहचर्यात् सूरदादिः,—प्रसूते—प्रसूः, सूः, अण्डसूः । विद्विट्, द्विट्, मित्रद्विट्, प्रध्रुक्, ध्रुक्, मित्रध्रुक्, प्रधुक्, धुक्, गोधुक् । प्रयुक्, युक्, अश्वयुक् । संवित्, वित्, वेदवित् । लाभार्थोऽपि दृश्यते । प्रभित्, भित्, काष्ठभित् । प्रच्छित्, छित्, रज्जुच्छित् । अभिजित्, जित्, अरिजित् । प्रणीः, नीः, सेनानीः । विराट्, राट्, गिरिराट् । प्रपञ्चार्थमिदम् ॥

## २२५ । कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च ॥

त्यदादावुपमान उपपद उपमेयेऽर्थे कर्मणि दृशष्टक्सकौ च भवतः, क्विप् च । स्य इव दृश्यते—स्यादृशः, स्यादृशी, स्यादृक्षः, स्यादृक् । स इव दृश्यते—तादृशः, तादृशी, तादृक्षः, तादृक् । एषु समानस्य स इति

सदृक्षः, सदृशी, सदृसः, सदृक् । "आ सर्वनाम्नः" अन्यादृशः, अन्यादृशी, अन्यादृक्षः, अन्यादृक् । त्यदादाविति किम् ? वृक्ष इव दृश्यते । उपमान इति किम् ? स दृश्यते । कर्मणीति किम् ? स इव पश्यति ॥

## २२६ । नाम्न्यजातौ णिनिस्ताच्छील्ये ॥

तच्छब्देन धात्वर्थो निर्दिश्यते । तदेव शीलं यस्य कर्तुरिति विग्रहः । अजातिवाचके नाम्न्युपपदे धातोस्ताच्छील्ये गम्यमाने णिनिर्भवति । उष्णभोजी, धर्मविभाषी । नाम्नीति किम् ? उपभोक्ता, सम्भोक्ता । कथम् उद्‌भासारी, प्रत्यासारी, ब्रह्मवादी ? साधौ च—साधु ददातीति साधुदायी, साधुकारीति वक्तव्यमेव । अजाताविति किम् ? ब्राह्मणानामन्त्रयिता ॥

"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥
प्रागुत्पत्तिविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥" इत्यन्ये ।

तथा कुमारवादीति भवितव्यमेवाजातित्वात् ॥

## २२७ । कर्तर्य्युपमाने ॥

उपमानेऽर्थे नाम्नि कर्तृवाचिन्युपपदे धातोर्णिनिर्भवति । आत्यर्थं मताच्छील्याभीक्ष्ण्यार्थं च । उष्ट्र इव क्रोशति—उष्ट्रक्रोशी, ध्वाङ्क्ष इव रौति—ध्वाङ्क्षरावी । कर्त्तरीति किम् ? शालीनिव कोद्रवान् भुङ्क्ते । उपमान इति किम् ? उष्ट्रः क्रोशति । उपपदवाच्यः कर्त्ता णिन्यर्थस्य कर्तुरुपमानं व्याख्यम्—उष्ट्रस्येव क्रोशनमस्येति वाक्ये अन्तरङ्गसम्बन्धेऽपि गौणत्वमिति ॥

## २२८ । व्रताभीक्ष्ण्ययोश्च ॥

व्रतमिति शास्त्रविहितो नियमः । आभीक्ष्ण्यं पौनःपुन्यम् आसेवा वा । नाम्न्युपपदे व्रताभीक्ष्ण्ययोर्गम्यमानयोर्धातोर्णिनिर्भवति । अश्राद्ध-

भोजी, अलवणभोजी । अर्थित्वात् प्रवृत्तौ नियमः, सति भोजनेऽश्राद्ध-मेव भुङ्क्ते, न श्राद्धमिति । आभीक्ष्ण्ये—क्षीरपायिण उशीनराः सौवीरपायिनो वाह्लीकाः—तत्रान्यत्पेयं नास्तीति रुचिं विना क्षीरे तात्पर्य्य-मिति शीलादन्यदाभीक्ष्ण्यम् ॥

## २२९ । मनः पुंवच्चात्र ॥

कर्म्मण्युपपदे मन्यतेर्णिनिर्भवति । अस्मिंश्च णिनिप्रत्ययान्ते धातौ पर उपपदस्य पुंवच्चोपतिष्ठते यथासम्भवम् । पटुं मन्यते—पटुमानी, पट्वीं मन्यते—पटुमानिनी । पुंवच्चेति पुंवद्भावादिशास्त्रमत्राभिमतम्, तेन—खट्वामानिनी, ब्रह्मबन्धूमानिनी, द्रोणीमानिनीति सिद्धम् ॥

## २३० । खश्चात्मने ॥

कर्म्मण्युपपदे आत्मार्थो यो मन्यतिस्तस्माण्णिनिर्भवति खश्च । विदुषीमात्मानं मन्यते—विद्वन्मानिनी, विदुषिंमन्या । विद्वन्मानी, विद्वन्मन्यः । पट्वीमात्मानं मन्यते—पटुमानिनी, पट्विंमन्या, पटु-मानी । पटुम्मन्यः । तुल्याधिकरणत्वाण्णिनिपुंवद्भावः । तादर्थ्यमत्रार्थ-द्वारेणात्मशब्दः कर्म्मभूतो वाक्ये सुखार्थः । कारकशक्तिभेदाद्भेद इति एक एव कर्त्ता कर्म्म च स्यात्, यथा—पीयमानं मधु मदयति—बाह्यो-ऽनात्मात्मवचनात् ॥

## २३१ । करणेऽतीते यजः ॥

करणवाचिन्युपपदेऽतीते क्रियायां वर्त्तमानाद् यजतेर्णिनिर्भवति । अग्निष्टोमयाजी, वाजपेययाजी । अग्निष्टोमाख्यैर्यागैः स्वर्गाख्यं फलं भावितवानित्यर्थः । स्वर्गशब्दस्तु वृत्तावन्तर्भूतो न प्रयुज्यते, यदि विशेषव्यापारः सामान्यव्यापारस्य करणं कथम् अग्निहोत्रं जुहुयात् स्वर्गकामः ? अपौरुषेयाणि वेदवाक्यानीति । अतीत इति किम् ? अग्निष्टोमेन यजति । करण इति किम् ? ग्रामे यजति स्म । अविवक्षित-करणात् ।

## २३२ । कर्मणि हनः कुत्सायाम् ॥

कर्म्मण्युपपदेऽतीते वर्त्तमानाद् हन्तेः कुत्सायां गम्यमानायां णिनि-र्भवति । पितृघाती, मातृघाती, कुत्सायामिति किम् ? चौरं हतवान् । एकेन हतवान् पितृव्यमिति सापेक्षत्वात् । कर्म्मग्रहणं सुखार्थम् ॥

## २३३ । क्विब् ब्रह्मभ्रूणवृत्रेषु ॥

ब्रह्मादिषु कर्म्मसूपपदेष्वतीते वर्त्तमानाद् हन्तेः क्विब् भवति । ब्रह्महा, भ्रूणहा, वृत्रहा । ब्रह्मादिष्वेव हन्तेरेवातीत एव क्विबेवेति चतु-र्विधोऽत्र नियमः । तेन गां हतवान्, ब्रह्माधीतवान्, ब्रह्म हन्ति, ब्रह्म हतवान्—अतो नाण् । विनियमोऽपि दृश्यते—मधुहा, अहिहा, गोत्रहा, ब्रह्मघ्नः, वृत्रस्य हन्तुः, ब्रह्मवित् ॥

## २३४ । कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥

एषु कर्म्मसूपपदेष्वतीते वर्त्तमानात् कृञः क्विब् भवति । सुष्ठु कृतवान्—सुकृत् । पुण्यकृत्, पापकृत्, कर्मकृत्, मन्त्रकृत्, पदकृत् । स्वादिषु कृञ एवातीत एव क्विबेवेति त्रिविधोऽत्र नियमः । तेन—मन्त्रा-नधीतवान्, कर्म करोति, कर्म्म कृतवान्—अतो नाण् । शास्त्रकृत्, सूत्रकृदिति भवत्येव ॥

## २३५ । सोमे सुञः ॥

सोमे कर्म्मण्युपपदेऽतीते वर्त्तमानात् सुञः क्विब् भवति । सोमं सुतवान्—सोमसुत् । चतुर्विधोऽत्रापि नियमः, तेन—सुरां सुतवान्, सोमं विक्रीतवान्, सोमं सुनोति, सोमं सुतवान्—अतो नाण् । अन्येभ्यः क्विबभावेऽण् स्यादेव ॥

## २३६ । चेरग्नौ ॥

अग्नावुपपदेऽतीते वर्त्तमानाच्चिनोतेः क्विब् भवति । अग्निं चित-वान्—अग्निचित् । चतुर्विधोऽत्रापि नियमः—तेन पुष्पं चितवान्,

अग्निं हुतवान्, अग्निं चिनोति, अग्निं चितवान्—अतो भाष्य् । आग्न्येयं त्विष्टकानां रचनाविशेषे गम्यमाने कर्मण्यपि दृश्यत एव—श्येन इव चीयते स्म—श्येनचित् । रथचक्रमिव चीयते स्म—रथचक्रचित् । इयमपि खतुः सूत्री प्रपञ्चार्था ॥

## २३७ । विक्रिय इन् कुत्सायाम् ॥

कर्मण्युपपदे विपूर्वादतीते वर्त्तमानात् क्रीणातेः कुत्सायां गम्यमानायामिन् भवति । सोमं विक्रीतवान्—सोमविक्रयी । तैलविक्रयी । अण्न्तादिना सिद्धं कुत्सायामण् बाधनार्थं वचनम् ॥

## २३८ । दृशेः क्वनिप ॥

कर्मण्युपपदेऽतीते वर्त्तमानाद् दृशेः क्वनिब् भवति । मेरुं दृष्टवान्—मेरुदृश्वा । अतीते क्विबादीनां बाधकमिदम् ॥

## २३९ । सहराज्ञोर्युधः ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्त्तमानाद् युध्यतेः क्वनिब् भवति । सह युध्यते स्म—सहयुध्वा । राजानं युध्यते स्म—राजयुध्वा । अन्तर्भूतेऽर्थः सकर्मकः—राजानं योधितवानित्यर्थः ॥

## २४० । कृञश्च ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्त्तमानात् कृञः क्वनिब् भवति । सह करोति स्म—सहकृत्वा, राजकृत्वा ॥

## २४१ । सप्तमीपञ्चम्यन्ते जनेर्डः ॥

सप्तम्यन्ते पञ्चम्यन्ते चोपपदेऽतीते वर्त्तमानाज्जनेर्डो भवति । जले जातम् जलजम्, सरसिजम्, बुद्धिजम्, बुद्धिजः, संस्कारजः, क्रोधजम्, ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम् । कथम् अश्वजातः, हस्तिनो जात इति प्रायः पञ्चम्यामजातावेव दृश्यते ॥

## २४२ । अन्यत्रापि च ॥

अन्वक्लिन्नुपक्रदेऽतीते वर्त्तमानाज्जनेर्डो भवति । न जातोऽजः, द्विर्जातो द्विजः, प्रजा, अभिजः, परिजः, पुमांसमनुजाता कन्या पुमनुजा । स्त्रियमनुजातः स्त्र्यनुजः ॥

## २४३ । निष्ठा ॥

अतीते वर्त्तमानाद्धातोर्निष्ठाप्रत्ययो भवति । कृतः, कृतवान्, शयितः, शयितवान् ॥

## २४४ । ङ्वनिप् सुयजोः ॥

अतीते वर्त्तमानयोः सुयजोर्ङ्वनिप् भवति । सुतवान्—सुत्वा । इष्टवान्—यज्वा । ङकारोऽगुणार्थः ॥

## २४५ । जीर्य्यतेरन्तन् ॥

अतीते वर्त्तमानाज्जीर्य्यतेरन्तृन् भवति । जरन्, जरती । ऋकारो नकरागमोच्चारणार्थः ॥

इति दौर्गसिंह्यां वृत्तौ कृत्सु तृतीयः पादः समाप्तः ॥

---

## २४६ । क्वन्सुकानौ परोक्षावच्च ॥

अतीते वर्त्तमानाद्धातोः क्वन्सुकानौ भवतः । तौ च परोक्षेव व्यपदिश्येते । पेचिवान्, पाचयाञ्चकृवान्, ओषाम्बभूवान्, शिशीर्वान्, दिदीर्वान्, जजागर्वान्, बभज्वान्, ररज्वान्, यणि इष्टत्वादेवेट् आगतेर्गुणोऽनुषङ्गलोपश्च । व्यतिपेचानः, चक्राणः । अतीताधिकारः किम् ? भुसदवसामतीतमात्रे क्वन्सुरभिधातव्यः । उपशुश्राव । उपाश्रौषीत्, उपाशृणोत्—उपशुश्रुवान्, उपससाद, उपासदत्, उपासीदत्—उपसेदिवान्, अनूवास, अन्ववात्सीत्, अन्ववसत्—अनूषिवान् । तथा इणो नञ्पूर्वाच्चाभ्यातेः । ईयिवान्, समीयिवान्, उपेयिवान्, अनाश्वान् । तथा अनुपूर्वाद् वचेः कानः कर्त्तर्य्येव—अनूचानः । अतीताभिधायिनोऽपि पूर्ववत् प्रयोक्तव्याः । भुवोत्पाद्य एवामी भाषायां नास्ति ॥

## २४७ । वर्त्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः ॥

वर्त्तमानक्रियायां वर्त्तमानाद्धातोः शन्तृङानशौ भवतः अप्रथमैकाधिकरणे आमन्त्रित विषये च—प्रथमान्तेन चेच् शन्तृङानशोः सामानाधिकरण्यं न भवतीत्यर्थः । पचन्तं पचमानं छात्रं पश्य, पचता पचमानेन छात्रेण कृतमित्यादि । आमन्त्रित विषयेच—हेपचन् हेपचमान । अप्रथमैकाधिकरणामन्त्रितयोरिति किम् ? पचति छात्रः । नञा निर्दिष्टस्यानित्यत्वात्—जुहोति, जुह्वत् । तथा मायोगे त्वाक्रोशे । मा पचन्, मा पचमानः । आनश्च क्रियापेक्षायाम्—पचन्नास्ते, पचमानस्तिष्ठति । सत्तायांवा—सन् गुणः, अस्ति गुणः, विद्यमानो ब्राह्मणः, विद्यते ब्राह्मणः ॥

## २४८ । लक्षणहेत्वोः क्रियायाः ॥

"आ भूताद्" वर्त्तमानाधिकारः । क्रियाया लक्षणे हेतौ चार्थे वर्त्तमानाद्धातोः शन्तृङानशौ भवतः । तीष्ठन्तोऽनुशासति गणकाः, शयाना भुञ्जते यवनाः । हेतौच—अर्जयन् वसति, अधीयानो वसति । लक्षणं चिह्नम्, जनको हेतुः । लक्षणहेत्वोरिति किम् ? पचति च, पठतिच । क्रियाया इति किम् ? यः कम्पते सोऽश्वत्थः, यदुत्प्लवते तत्कम्बु ॥

## २४९ । वेत्तेः शन्तुर्वन्सुः ॥

वेत्तेःपरस्य शन्तुर्वन्सुर्भवति वा । विद्वान्, विद्वांसौ । विदन्, विदन्तौ । तिब् निर्देशः सुखार्थः—वेत्तेरेवा नन्तरः शन्तृङिति ॥

## २५० । आनोऽत्रात्मने ॥

अत्र परेषु वन्सुप्रभृतिषु मध्ये आन आत्मनेपदसंज्ञो भवति इतरः परस्मैपदमर्थात् । अधीयमानम्, स्वोयमानम्, शेचमानः, चकाणः

शक्तिवभूवानः । आत्मनेपदत्वाद् भावकर्म्मणोः कर्त्तरि रुचादिभ्यश्च भवति ॥

## २५१ । ई तस्यासः ॥

आसः परो य आनस्तस्यादेरीर्भवति । आसीनः । तस्येति रूप-मात्रानुकर्षणार्थम्, तेन शानङोऽपि—कतीहोदासीनाः सन्ति ॥

## २५२ । आन्मोऽन्त आने ॥

अकारात् परो य आनस्तस्मिन् परेऽकारान्तस्य मकारोऽन्तो भवति । पचमानः, यजमानः, क्रियमाणः, करिष्यमाणः ॥

## २५३ । पूङ्यजोःशानङ् ॥

पुङो यजश्च शानङ् भवति । पवते—पवमानः, यजते—यज-मानः । आभ्यां कर्त्तर्य्येवानः स्थित्यर्थं वचनमित्येके, भावकर्म्मणोरा-त्मना भाव्यमिति । प्रथमैकाधिकरणप्रपञ्चार्थमित्यन्ये । बहिष्पवमानं मध्यन्दिनमित्यनवयवार्थे एवायं संज्ञाशब्दः ॥

## २५४ । शक्तिवयस्ताच्छील्ये ॥

शक्त्यादिषु गम्यमानेषु धातोः शानङ् भवति । कतीह निघ्नानाः, कतीह कवचमुद्वहमानाः, कतीह नुदमानाः । अभिधानाद् वासरूपः शन्तृङ् न स्यात् ॥

## २५५ । इङ्धारिभ्यां शन्तृङकृच्छ्रे ॥

इङो धारेश्च शन्तृङ् भवति अकृच्छ्रे गम्यमाने । अधीयन् पारायणम् । धारयन्नुपनिषदम् । इङ आनशि प्राप्ते धारेरुभयप्राप्तौ वावचनम् । वासरूपोऽपि नेष्टव्य एव । अकृच्छ्र इति किम्? कृच्छ्रेणाधीते ॥

## २५६ । द्विषः शत्रौ ॥

द्विषः शत्रौ कर्त्तरि शन्तृङ् भवति । द्विषन्, द्विषन्तौ । शत्राविति किम्? द्वेष्टि पतिं भार्य्या ॥

## २५७ । सुञो यज्ञसंयोगे ॥

यज्ञफलेन संयोगविषये वर्त्तमानात् सुञः शन्तृङ् भवति । सुन्वन्तो यजयानाः । संयोगग्रहणं फलवत्कर्तृ प्रतिपत्त्यर्थम् । यज्ञसंयोग इति किम् ? सुनोति सुराम् ॥

## २५८ । अर्हः प्रशंसायाम् ॥

प्रशंसायां गम्यमानायामर्हतेः शन्तृङ् भवति अर्हन् भवान् विद्याम् । प्रशंसायामिति किम् ? अर्हति चौरो बधम् ॥

## २५९ । तच्छीलतद्धर्मतत्साधुकारिष्वा केः ॥

"आ केः" किपमभिव्याप्य तच्छीलादिषु कर्तृष्वितः प्रत्यया वेदितव्याः ॥

## २६० । तृन् ॥

तच्छीले तद्धर्मे तत्साधुकारिणि च कर्त्तरि धातोस्तृन् भवति । तृजाद्यपवादः । वदिता जनापवादान्, मुण्डयितारः श्राविष्ठायना वधूमूढाम्, साधु गच्छति गन्ता खेलम्—साधुः कुशलार्थे पवाद ॥

## २६१ । भ्राज्यलङ्कृञ्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रपेनामिष्णुच् ॥

एभ्य इष्णुच् भवति तच्छीलादिषु कर्तृषु । तृणोऽपवादः । भ्राजिष्णुः, अलङ्करिष्णुः—अलं भूषणपर्य्याप्तिवारणेषु, मण्डने युमपि बाधते । भविष्णुः, सहिष्णुः, रोचिष्णुः, वर्त्तिष्णुः, वर्धिष्णुः, चरिष्णुः, प्रजनिष्णुः, अपत्रपिष्णुः । इनन्तानां छन्दसीत्येके—धारयिष्णुः, निराकरिष्णुरिति वक्तव्यम् ॥

## २६२ । मदिपतिपचामुदि ॥

उदुपपदे एभ्य इष्णुच् भवति तच्छीलादिषु कर्तृषु । उन्मदिष्णुः, उत्पतिष्णुः, उत्पचिष्णुः, यथासंख्यं नास्ति ॥

## २६३ । जिभुवोः स्नुक् ॥

आभ्यां स्नुग् भवति तच्छीलादिषु कर्तृषु । जिष्णुः, भूष्णुः ॥

## २६४ । ग्लाम्लास्थाक्षिपचिपरिमृजां स्नुः ॥

एभ्यः स्नुर्भवति तच्छीलादिषु कर्तृषु । ग्लास्नुः, म्लास्नुः, स्थास्नुः, क्षेप्णुः, पक्ष्णुः, परिमार्ष्णुः, ॥

## २६५ । त्रसिगृधिधृषिक्षिपां क्नुः ॥

एभ्यः क्नुर्भवति तच्छीलादिषु कर्तृषु । त्रस्नुः, गृध्नुः, धृष्णुः, क्षिप्नुः ॥

## २६६ । शमामष्टानां घिनिण् ॥

शमादीनामष्टानां घिनिण् भवति तच्छीलादिषु कर्तृषु । शाम्यतीति शमी, एवं दमी, तमी, श्रमी, भ्रमी, क्षमी, क्लमी, उन्मादी । अष्टानामिति किम् ? असिता ॥

## २६७ । युजभजभुजद्विषद्रुहदुहदुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरञ्जाभ्याङ्हनां च ॥

एभ्यो घिनिण् भवति तच्छीलादिषु कर्तृषु । युजिर युज योगी । भज भागी । भुज भुजो, भोगी । द्विष द्वेषी । द्रुह द्रोही । दुह दोही । दुष दोषी । आङ् क्रीड आक्रीडी । त्यज त्यागी । अनुरुध अनुरोधी । आङ् यम आयामी । आङ् यस् आयासी । रञ्ज रागी, अभ्याङ् हन् अभ्याघाती ॥

## २६८ । समि सृजिपृचिज्वरित्वराम् ॥

सम्युपपद एभ्यो घिनिण् भवति तच्छीलादिषु । संसर्गी, सम्पर्की, सञ्ज्वरी, सन्त्वरी । मानुबन्धत्वाद् ह्रस्वः ॥

## २६९ । वौ विचकत्थस्रन्भुकषलषाम् ॥

वावुपपदे एभ्यो घिनिण् भवति तच्छीलादिषु । विवेकी, विकत्थी, विश्रम्भी, विकाषी, विलापी ॥

## २७० । प्रे द्रुमथवदवसलपाम् ॥

प्र उपपदे एभ्यो घिनिण् भवति तच्छीलादिषु । प्रद्रावी, प्रमाथी, प्रवादी । वस निवास एव—प्रवासी । प्रलापी ॥

## २७१ । परौ सृदहोः ॥

परावुपपदे सृदहोर्घिनिण् भवति तच्छीलादिषु । परिसारी, परिदाही । अस्तिविवक्षायामिना सिद्धम् । घिनिण् किमर्थः ? यथा—प्रयामोऽस्यातीति प्रयामी, प्रयासी, विसारी, विदाही, विवादी, अनुवादी, संवादी, विवादी, सञ्चारी, व्यभिचारी, विघाती, विद्रावी, रोगीत्यादयः । तच्छीलादिविवक्षायां तृन् माभूदिति वचनम् ॥

## २७२ । क्षिपरटवदवादिदेविभ्यो वुण् च ॥

परावुपपदे एभ्यो वुण् भवति घिनिण् च तच्छीलादिषु । परिक्षेपकः, परिक्षेपी, परिराटकः, परिराटी । परिवादकः, परिवादी । परिवादयतीत्यर्थेऽप्येवम् । परिदेवत इति परिदेवकः, परिदेवी । वदिदेविभ्यां घिनिणेवेत्येके । वुण् ग्रहणं ताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापनार्थम् ॥

## २७३ । निन्दहिंसक्लिशखादानेकस्वरविनाशिव्याभाषासूयां वुञ् ॥

एभ्यो वुञ् भवति तच्छीलादिषु । निन्दकः, हिंसकः, क्लेशकः, खादकः, गणकः, दरिद्रायकः—अनेकस्वरादित्यन्येके । विनाशयतीति विनाशकः, व्याभाषकः, असूयकः—कण्ड्वादिभ्योऽसूयादेर्वानेकस्वरादिति । पुनर्वुञ् ग्रहणं प्रकृतोऽपि घिनिण् न स्यादिति ॥

## २७४ । देविक्रुशोश्चोपसर्गे ॥

उपसर्गे उपपदे देवयतेः क्रुशश्च वुञ् भवति तच्छीलादिषु । आदेवकः, परिदेवकः—क्रीड़ायामेवाभिधानम्, आक्रोशकः । उपसर्ग इति किम्? देवयिता, क्रोष्टा ॥

## २७५ । क्रुधिमण्डिचालिशब्दार्थेभ्यो युः ॥

एभ्यो युर्भवति तच्छीलादिषु । अर्थशब्दः प्रत्येकमभिसम्बध्यते । क्रुध्यर्थात्—क्रोधनः । कोपनः । मण्ड्यर्थात्—मण्डनः, भूषणः । चल्यर्थात्—चलनः, कम्पनः । शब्दार्थात्—शब्द इति लिङ्गमिनन्तं, चौरादिकमित्येके । शब्दनः । रवणः । कथम् पठिता विद्याम्? अभिधाना-चलिशब्दार्थाभ्यामकर्मकाभ्यामिति ॥

## २७६ । रुचादेश्च व्यञ्जनादेः ॥

रुचादेर्गणाद् व्यञ्जनादेर्युर्भवति तच्छीलादिषु । येभ्य आत्मनेभावः श्रूयते, ते रुचप्रकारा गणे ङानुबन्धवर्जिता इति । रोचनः, वर्त्तनः, वर्धनः रुचादेरिति किम्? भविता, शयिता । व्यञ्जनादेरिति किम्? एधिता । आदिग्रहणं किम्? जुगुप्सनः, तितिक्षणः, मीमांसनः, बीभत्सन इत्यत्रापि स्यात्—एभ्योऽन्ये रुचादयो व्यञ्जनान्ता इति । कथम् वसिता वस्त्रम्? अभिधानादिहाप्यकर्मकेभ्य एव ॥

## २७७ । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदाम् ॥

एभ्यो युर्भवति तच्छीलादिषु । जु इति सौत्रो धातुर्गतौ—जवनः, चङ्क्रमणः, दन्द्रमणः—"यस्यानि" इति यलोपः । सरणः, गर्धनः, ज्वलनः, शोचनः, अभिलषणः, प्रपतनः, प्रपदनः । चलनार्थानां ग्रहणं सकर्म्मकार्थम् । प्रतिपदिभ्यामुकञा बाधितत्वाद् युप्राप्त्यर्थं वचनम् । तीच्छालिकेषु वासरूपविधिर्नास्तीति । समावेशोऽपि दृश्यते, चेद् यथा विकस्पी, विकत्थन इति, भासुरम्, भास्वरम्, भासनमिति, जागरिता, जागरूक इति, वर्धिष्णुः, वर्धन इति, अपलषिता, अपलाषुकः, अपलषण इति—एवं सति सकर्मकार्थमित्येके ॥

## २७८ । न यान्तसूददीपदीक्षाम् ॥

यकारान्तानां सूददीपदीक्षां च युर्न भवति तच्छीलादिषु । यान्तानां क्रुध्यादित्वात् सूददीपदीक्षां च हनादित्वाद्युः प्राप्तः प्रतिषिध्यते । क्नोयिता, क्ष्मायिता, वयिता, सूदिता, दीपिता, दीक्षिता । अरिसूदन इति नन्द्यादित्वात् । दीपे रो युं बाधत एव—दीपिग्रहणं वासरूपविधिरपि लक्ष्यत इति ज्ञापनार्थम्, तेन तृन्नपि स्यात्—दीपिता, दीप्र इति । तथा कामुकः, कमनः, कम्र इति ॥

## २७९ । शॄकमगमहनवृषभूस्थालषपतपदामुकञ् ॥

एभ्य उकञ् भवति तच्छीलादिषु । शारुकः, कामुकः आगामुकः, आघातुकः, वर्षुकः, प्रभावुकः, उपस्थायुकः, अपलाषुकः, प्रपातुकः, प्रपादुकः ॥

## २८० । वृङ्भिक्षिलुण्टिजल्पिकुट्टां षाकः ॥

एभ्यः षाको भवति तच्छीलादिषु । वराकः, वराकी, भिक्षाकः, भिक्षाकी, लुण्टाकः लुण्टाकी, जल्पाकः, जल्पाकी, कुट्टाकः, कुट्टाकी । वृञस्तु—वरिता । षकारो नद्याद्यर्थः ॥

## २८१ । प्रे जुसुवोरिन् ॥

प्र उपपदे जवतेः सवतेश्च इन् भवति तच्छीलादिषु । प्रजवी, षु प्रसवे, प्रसवी ॥

## २८२ । जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथां च ॥

एभ्य इन् भवति तच्छीलादिषु । जि—जयी, इण्—प्रत्ययी, दृङ्—आदरी, क्षि—क्षयी, विश्रि—विश्रयी, परिभू—परिभवी, टुवम—वमी, अभ्यम—अभ्यमी । न व्यथत इति—अव्यथी । तच्छीलादिविवक्षायां तृन् मा भूदिति वचनम् ॥

## २८३ । दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलुः ।

एभ्य आलुर्भवति तच्छीलादिषु । दय—दयालुः, पतिगृहिस्पृहयश्चुरादाविनन्ताः—पतयालुः, गृहयालुः, स्पृहयालुः, श्रत्पूर्वोधाञ्—श्रद्धालुः, तन्द्रा इति सौत्रो धातुः—तन्द्रालुः । निपूर्वोद्रा—निद्रालुः । शयालुरिति वक्तव्यम् । कथं हृदयालुः ? हृदयमस्यास्तीति विवक्षायामालुस्तद्धितो रूढ़ितः ॥

## २८४ । शदिसदिधेड्दासिभ्यो रुः ॥

एभ्यो रुर्भवति तच्छीलादिषु । शद्रुः, सद्रुः, धारुः । ददाति, दयते, यच्छति, द्यतिवा—दारुः, षिञ् बन्धने—सेरुः ॥

## २८५ । सृदिघसां मरक् ॥

एभ्यो मरग् भवति तच्छीलादिषु । सिसर्त्ति सरतिवा—सृमरः, अद्मरः, गुकारपाठपिवचनात्—सृरणः, श्रुत्वरः । घस्मरः, घस्लृ प्रकृत्यन्तरम् ॥

## २८६ । मिदिभासिभञ्जां घुरः ॥

एभ्यो घुरो भवति तच्छीलादिषु । मेद्यतीति मेदुरः, भासत इति भासुरः । भज्यते स्वयमेवेति कर्मकर्त्तर्येवाभिधानात्—भङ्गुरं काष्ठम् यस्तु परं भनक्ति ततस्तृन्नेव—भङ्क्ता ॥

## २८७ । छिदिभिदिविदां कुरः ॥

एभ्यः कुरो भवति तच्छीलादिषु । छिदुरम्, भिदुरम्, वेत्तीति विदुरः । छिदिभिदोः कर्मकर्त्तर्येवाभिधानात् । केचित्कर्मकर्त्तर्यपि—दोषान्धकारभिदुरोद्दतारिपक्षच्छिदुर इति ॥

## २८८ । जागुरूकः ॥

जागर्त्तेरूको भवति तच्छीलादिषु । जागरूकः ॥

## २८९ । चेक्रीयितान्तानां यजिजपिदंशिवदाम् ॥

चेक्रीयितान्तानामेषामूको भवति तच्छीलादिषु । यायजूकः,

जञ्जपूकः, दन्दशूकः, यायजूकः। सासहिवावहिचाचलिपापतयोऽपि चेक्रीयितान्ताः किप्रत्यये सति निपात्यन्ते ॥

## २९० । तस्य लुगचि ॥

तस्य चेक्रीयितस्य लुग् भवति तच्छीलादिषु अचि परे। लोलुवः, पोपुवः। व्यञ्जनान्तात् सिद्ध एव। केचिद्योगं विभजन्ति, तेन बोभवीति, रारटीति सिद्धम् ॥

## २९१ । ततो यातेर्वरः ॥

ततश्चेक्रीयितान्तात् यातेर्वरो भवति तच्छीलादिषु। यायावरः वरे विषयभूतेऽस्य च लोपे यस्य व्यञ्जने लोपः स्यात् ॥

## २९२ । कसिपिसिभासीशस्थाप्रमदां च ॥

एषां वरो भवति तच्छीलादिषु। कस्वरः, पेस्वरः, भास्वरः, ईश्वरः, स्थावरः, प्रमद्वरः ॥

## २९३ । सृजीण्नशांक्वरप् ॥

एषां क्वरप् भवति तच्छीलादिषु। सृत्वरः, जित्वरः, इत्वरः, नश्वरः, क्वरप् नद्यादौ—सृत्वरी ॥

## २९४ । गमस्त च ॥

गमः क्वरप् भवति तच्छीलादिषु तकारश्चान्तादेशः। गत्वरः, गत्वरी ॥

## २९५ । दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः ॥

एषां रो भवति तच्छीलादिषु। दीप्रः, कम्प्रः, नञ् पूर्वोऽजसु मोक्षो—अजस्रः, हिंस्रः, कम्रः, स्मेरः, नम्रः,। युरपि दृश्यते—कम्पनः, कमनः, ॥

## २९६ । सनन्ताशंसिभिक्षामुः ॥

सनन्तस्याशंसेर्भिक्षश्च उर्भवति तच्छीलादिषु। चिकीर्षुः, आशंसुः

शमिः इच्छायामिति न्याय्यः पाठः—आशंसुः, भिक्षु । अन्तग्रहणं सनु दान इति शङ्का निरासार्थम् ॥

## २९७ । विन्दिच्छू च ॥

विन्दुरिच्छुरिति निपात्येते तच्छीलादिषु । अभिधानाद् विद्ज्ञाने—विन्दुः, इषु इच्छायाम्—इच्छुः । कथम् विदि अवयवे—विन्दुः ? स्तोकपर्य्यायः संज्ञाशब्द औणादिक इति ॥

## २९८ । आदृवर्णोपधालोपिनां किर्द्वे च ॥

आदन्तस्य ऋवर्णान्तस्य उपधालोपिनश्च किर्भवति तच्छीलादिषु । तत्सन्नियोगे च द्वे स्तो भवतः । डुधाञ्—दधिः, ऋवर्णान्तस्य—चक्रिः, सस्रिः । उपधा लोपिनश्च जनी जन—जज्ञिः । एते भाषायां रूढाः, अन्ये प्रयोगादनुसर्त्तव्याः ॥

## २९९ । तृषिधृषि स्वपां नजिङ् ॥

एषां नजिङ् भवति तच्छीलादिषु । तृष्णक्, धृष्णक्, स्वप्नक् । धृषेर्नेच्छन्त्यके ॥

## ३०० । शृवन्द्योरारुः ॥

शृणातेर्वन्दते आरुर्भवति तच्छीलादिषु । शरारुः, वन्दारुः ॥

## ३०१ । भियो रुग्लकौ च ॥

बिभेते रुग्लुकौ च भवतस्तच्छीलादिषु । भीरुः, भीलुः, भीरुकः, भीलुकः—को बहुलार्थ एव ॥

## ३०२ । क्विब् भ्राजिपृधुर्वोभासाम् ॥

एषां क्विब् भवति तच्छीलादिषु । विभ्राट्, विभ्राजौ, पूः, पुरौ धूः, धुरौ, भाः, भासौ । ताच्छीलिकबाधनार्थं पुनः क्विब् वचनम् ॥

## ३०३ । द्युतिगमोर्द्वे च ॥

द्युतेर्गमेश्च क्विप् भवति तच्छीलादिषु, द्वे चोक्ती भवतः। दिद्युत्, जगत् ॥

## ३०४। भुवो डुर्विशंप्रेषु ॥

विशंप्रेषूपपदेषु भुवो डुर्भवति। विभुः, शम्भुः, प्रभुः। डकारोऽन्त्यस्वरादिलोपार्थः ॥

## ३०५। कर्मणि धेटः ष्ट्रन् ॥

कर्मणि कारके धेटो धातोः ष्ट्रन् भवति। षकारो नद्याद्यर्थः। धयति तामिति धात्री स्तनदायिनी, आमलकी चोच्यते। केचिद् दधातेरपीच्छन्ति—दधाति तां भैषज्यार्थमिति धात्री। संज्ञाशब्दत्वाद् विशेषाभावः ॥

## ३०६। नीदाप्शसुयुयुजस्तुतुदासिसिचमिहपतदंशनहां करणे ॥

एषां करणे कारके ष्ट्रन् भवति। नीञ्—नेत्रम्, दाप् लवने दात्रम्, शसु हिंसायाम्—शस्त्रम्, यु—योत्रम्, युजिर—योक्त्रम्, ष्टुञ्—स्तोत्रम्, तुद—तोत्त्रम्, षिञ् सेत्रम्—षिच सेक्त्रम्, मिह—मेढ्रम्, पत्लृ—पत्त्रम्। दन्श—दंष्ट्रा, सदैव स्त्रियामादा। नह—नद्ध्री ॥

## ३०७। हलशूकरयोः पुवः ॥

पूञः पूङो वा करणे ष्ट्रन् भवति, तच्चेत् करणं हलशूकरयोरवयवः स्यात्। हलस्य पोत्रम्, शूकरस्य पोत्रम्, मुखमित्यर्थः। सर्वधातुभ्यः ष्ट्रन्नित्यस्य प्रपञ्चार्थम्।

## ३०८। अर्तिलूधूसूखनिसहिचरिभ्य इत्रन् ॥

एभ्यः करण इत्रन् भवति। अरित्रम्, लवित्रम्, धूविधूनने—धवित्रम्। षु प्रेरणे—सवित्रम्, खनित्रम्, सहित्रम्, चर गत्यर्थः चरित्रम्।

## ३०९ । पुवः संज्ञायाम् ॥

पूञः पूङो वा करण इत्रन् भवति संज्ञायां गम्यमानायाम् । पवित्रं यज्ञोपवीतम्, पवित्रा नाम नदी ॥

## ३१० । ऋषिदेवतयोः कर्त्तरि ॥

पुव ऋषौ देवतायां च कर्त्तरि इत्रन् भवति । पुनातीति—पवित्रोऽयमृषिः, पवित्रोऽयमग्निः । केचित् करणमनुवर्त्य यथासंख्यसम्बन्धमिच्छन्ति विवक्षायां को विशेष इति ॥

## ३११ । ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः ॥

मतिरिच्छा, बुद्धिर्ज्ञानम्, पूजा सत्कारः । ञ्यनुबन्धेभ्यो मतिबुद्धिपूजार्थेभ्यश्च वर्त्तमाने क्तो भवति, भावे कर्मणि कर्त्तरि च यथासम्भवम् । ञिमिदा—मिन्नः, ञिक्ष्विदा—क्ष्विण्णः । मत्यर्थात्—राज्ञां मतः, राज्ञामिष्टः । बुद्ध्यर्थात्—राज्ञां बुद्धः, राज्ञां ज्ञातः । पूजार्थात्—राज्ञां पूजितः, राज्ञामर्चितः । अन्यत्रापीति वचनात्—

"शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ॥"

तथा सुप्तः, शयितः, आसितः, लिप्तः, स्निग्धः, तृप्त इत्यादयः । वर्त्तमाने भूतो भावी च क्रियाक्षणोऽस्त्येव, विवक्षा गरीयसीति वचनम् ॥

## ३१२ । उणादयो भूतेऽपि ॥

उणादयः प्रत्यया वर्त्तमाने भूतेऽपि भवन्ति । केचिद् वर्त्तमाने—करोतीति कारुः । वातीति वायुः । केचिद् भूतेऽपि—वृत्तं तदिति वर्त्म, भसितं तदिति भस्म । प्रकृतिप्रत्ययावगमो व्युत्पत्तावपि-कल्पित एव ॥

## ३१३ । भविष्यति गम्यादयः ॥

गमीत्येवमादयः शब्दा औणादिका भविष्यति काले साधवो भवन्ति। गमादिभ्यो भविष्यत्कालवृत्तिभ्य इन् स्यादित्यर्थः। ग्रामं गमी, ग्राममागामी, भावी। श्वस्तनीविषयेऽपि भवन्ति—श्वो ग्रामं गमी, पदार्थश्वस्तने—श्वो ग्रामं गन्तेति प्राप्तम्॥

## ३१४। वुण्तुमौ क्रियायां क्रियार्थायाम्॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्त्तमानाद्धातोर्वुण्तुमौ भवतः। पाचको व्रजति, पक्तुं व्रजति—पक्ष्यामीति कृत्वा व्रजतीत्यर्थः। क्रियायामिति किम्? भिक्षिष्य इत्यस्य जटा। क्रियार्थायामिति किम्? धावतस्ते पतिष्यति दण्डः। वुण्ग्रहणं तृजादिनिवृत्त्यर्थम्—तुम्भावमेवाभिधत्ते॥

## ३१५। भाववाचिनश्च॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्त्तमानाद्धातोर्भाववाचिनश्च प्रत्यया भवन्ति। पाकाय व्रजति, पक्तये व्रजति, पचनाय व्रजति। तुमि नित्यप्राप्ते वचनं, वासरूपविधिरत्र प्रकरणे नास्तीति॥

## २१६। कर्मणि चाण्॥

क्रियायां क्रियार्थायां कर्मणि चोपपदे भविष्यत्यर्थे वर्त्तमानाद्धातोरण् भवति। काण्डलावो व्रजति, गोदायो व्रजति, गोसंख्यायो व्रजति, सामगायो व्रजति, सुरापायो व्रजति॥

## ३१७। शन्त्रानौ स्यसंहितौ शेषे च॥

शान्तृङ्सहचरित आन इह गृह्यते। क्रियायां क्रियार्थायां कर्मणि चोपपदे शेषे च भविष्यत्यर्थे वर्त्तमानाद्धातोः शन्तृङानशौ स्येन संहितौ भवतः। करिष्यन् व्रजति, करिष्यमाणो व्रजति। कटं करिष्यन् व्रजति, कटं करिष्यमाणो व्रजति। शेषे च—करिष्यन्, करिष्यमाणः, हे करिष्यन्, हे करिष्यमाणः॥

इति दौर्गसिंह्यां वृत्तौ कृत्सु चतुर्थः पादः समाप्तः॥

## ३१८ । पदरुजविशस्पृशोचां घञ् ॥

एषां घञ् भवति । "घानुबन्धश्चञोः कगौ" इति कत्वगत्वार्थः, अनुबन्ध इज्वद्भावार्थः, । पद्यते, पत्स्यते, अपादि, पेदे वा—पादः । एवं रोगः, वेशः, स्पर्शो नाम उपव्याधिश्च । शोकः ॥

## ३१९ । सृ स्थिरव्याध्योः ॥

सर्त्तेः स्थिरे व्याधौ च कर्त्तरि घञ् भवति । सरति कालान्तरमिति—सारः, स्थिरोऽर्थः । अतीसारो व्याधिः—ह्रस्वस्य दीर्घता । सरन्त्यनेनेति—सारो बलम्, विसरन्त्यनेनेति—विसारो मत्स्यः—संज्ञाशब्दात् करण एव सिद्धः । यद्येवं पद्यतेऽनेनेति पादो भविष्यति ? सत्यम् प्रपञ्चार्थं पदिग्रहणम् ॥

## ३२० । भावे ॥

सर्वस्माद्धातोर्भावे घञ् भवति । पाकः, पाकौ, पाकाः भवत्यर्थः क्रियासामान्य, इह हि सिद्धताख्यः सत्त्वभूत इति द्विवचन बहुवचनेस्तः ॥

## ३२१ । अकर्त्तरि च कारके सञ्ज्ञायाम् ॥

कर्तृवर्जिते कारके भावे च संज्ञायां गम्यमानायां घञ् भवति । प्रकुर्वन्ति तमिति—प्राकारः, प्रास्यत इति—प्रासः, आहरन्ति तमित्याहारः, प्रसीदन्त्यस्मिन् नयनमनांसीतिप्रासादः, दीर्य्यन्त एभिरिति दाराः, जीर्य्यतेऽनेनेति जारः । अकर्त्तरीति किम् ? नदतीति नदः, शोषः । असंज्ञायामपि—दायोदत्तः, लाभो लब्धः । कारक ग्रहणं प्रसज्य नञ् समासज्ञापनार्थम् ॥

## ३२२ । सर्वस्मात् परिमाणे ॥

परिमेयत्वात् परिमाणम् । परिमाणविषये वर्त्तमानात्सर्वस्माद्धातोर्घञ् भवति—कर्तृवर्जिते कारके भावे च संज्ञायां गम्यमानायाम् । संख्याप्रस्थादिर्वा परिमाणम् । एकस्तण्डुलनिश्चायः, द्वौ शूर्पनिष्पावौ,

प्रत्यर्थनिश्चयः, द्रोणावन्नायः, अञो बाधकत्वात् सर्वस्मान्भविष्यति, सर्वस्मादिति ज्ञापयति—धात्वाश्रितः प्रत्ययो घञा बाध्यते, न त्वर्थाश्रित इति—तेन एका तिलोच्छ्रितिः, द्वे श्रुती तिलस्य—किरेव, एकं लवणम्, द्वे प्रस्थाने—युट् सिद्धः। कथम् एको निश्चयः? अप्यधिकारात्॥

## ३२३। इङाभ्यां च॥

इङ आकारान्ताच्च धातोर्घञ् भवति। अञोऽपवादः। भावेऽकर्तरि च कारके संज्ञायामित्यविशेषेऽधिकारो द्रष्टव्यः। अध्ययनम् अधीयते वा अध्यायः। उपेत्याधीयते यस्मात्—उपाध्यायः, उपाध्याया, उपाध्यायी—इङो घञ् नद्यादौ विभाषयेति। आकारान्ताच्च—दायः, धायः॥

## ३२४। उपसर्गे रुवः॥

उपसर्ग उपपदे रौतेर्घञ् भवति। संरावः, उपरावः। उपसर्ग इति किम्? रवः। सांराविणमित्यत्र इनुण् बाधकः॥

## ३२५। समि दुवः॥

सम्युपपदे दुनोतेर्घञ् भवति। सन्द्रावः। समीति किम्? द्रवः॥

## ३२६। युद्रुवोरुदि च॥

उद्युपपदे समि च युद्रुभ्यां घञ् भवति। उद्यावः, उद्द्रावः, संयावः सन्द्राव एवेति केचित्। उदि चेति किम्? यवः, द्रवः। अप्यधिकाराद्—यावः, द्रावः। दाव इति च स्यात्। तथा शारो वायुः, शारः शरत्नः, नीशारः प्रावरणम्—इस्वस्य दीर्घता॥

## ३२७। श्रिनीभूभ्योऽनुपसर्गे॥

एभ्योऽनुपसर्गे घञ् भवति। श्रायः, नायः, भावः। अनुपसर्ग इति किम्? प्रश्रयः, प्रणयः, प्रभवः, कथं प्रकृष्टो भावः—प्रभावः। अनुगतो

भावः—अनुभावः, विगतो भावः—विभावः । अभ्यधिकारात् नय इति च ॥

३२८ । श्रुश्रुभ्यां वौ ॥

वावुपपदे आभ्यां घञ् भवति । विस्रावः, विश्रावः ॥

३२९ । स्तृश्च प्रथनेऽशब्दे ॥

प्रथनं विस्तीर्णता । स्तृणातेर्वावुपपदे घञ् भवति प्रथनेऽभिधेये, तच्चेत् प्रथनं शब्दविषये न स्यात् । पटस्य विस्तारः । अशब्द इति किम् ? वाक्यस्य विविस्तरः । प्रथन इति किम् ? तृणस्य विस्तरः ॥

३३० । प्रे चायज्ञे ॥

प्रे चोपपदे स्तृणातेर्घञ् भवति यज्ञादन्यत्र । प्रस्तारः । यज्ञे तु—बर्हिःप्रस्तरः ॥

३३१ । छन्दो नाम्नि च ॥

छन्दसां संज्ञाविषये स्तृणातेर्घञ् भवति । प्रस्तारपङ्क्तिः, विष्टारपङ्क्तिः, आस्तारपङ्क्तिः ॥

३३२ । प्रे द्रुस्तुश्रुवः ॥

प्र उपपदे एभ्यो घञ् भवति । प्रद्रावः, प्रस्तावः, प्रश्रावः । कथं भावः ? अभ्यधिकारात् ॥

३३३ । नियोऽवोदोः ॥

अवोदोरुपपदयोर्नियो घञ् भवति । अवनायः, उन्नायः । कथम् इयतो नयः—उन्नयः, अभ्यधिकाराद् वा ॥

३३४ । निरभ्योः पूल्वोः ॥

निरभ्योरुपपदयोर्यथासंख्यं पूल्वोर्घञ् भवति । निष्पावः, अभिलावः ॥

३३५ । यज्ञे समि स्तुवः ॥

सम्युपपदे स्तौतेर्घञ् भवति यज्ञविषये । समेत्य स्तुवन्ति यस्मिन्—संस्तावो देशः । संस्तवोऽन्यः ॥

## ३३६ । उन्न्योर्गिरः ॥

उन्न्योरुपपदयोर्गिरतेर्घञ् भवति । उद्गारः, निगारः । उन्न्योरिति किम् ? गरः ॥

## ३३७ । किरो धान्ये ॥

उन्न्योरुपपदयोर्धान्यविषये वर्त्तमानात् किरतेर्घञ् भवति । उत्कारो धान्यस्य, निकारो धान्यस्य । धान्य इति किम् ? पुष्पोत्करः, पुष्पनिकरः । किरतेरिति किम् ? कॄञ् हिंसायाम्—धान्यनिकरः ॥

## ३३८ । नौ वृञः ॥

नावुपपदे वृञो धातोर्घञ् भवति धान्येऽभिधेये । नीवारा व्रीहयः । ह्रस्वस्य दीर्घता ॥

## ३३९ । उदि श्रिपुवोः ॥

उदुपपदे श्रिपूङ्भ्यां घञ् भवति । उच्छ्रायः, उत्पावः । कथम् उच्छ्रयः ? अप्यधिकारात् ॥

## ३४० । ग्रहेश्च ॥

उदुपपदे ग्रहेश्च घञ् भवति । उद्ग्राहः । भाषायामपीति मतम् ॥

## ३४१ । अवन्योराक्रोशे ॥

अवन्योरुपपदयोराक्रोशे गम्यमाने ग्रहेर्घञ् भवति अवग्राहस्ते वृषल । निग्राहस्ते वृषल । आक्रोश इति किम् ? अवग्रहः पदस्य, निग्रहश्चौरस्य ॥

## ३४२ । प्रे लिप्सायाम् ॥

प्र उपपदे लिप्सायां ग्रहेर्घञ् भवति । पात्रप्रग्राहेण चरति भिक्षुः । लिप्सायामिति किम् ? प्रग्रहः ॥

### ३४३ । समि मुष्टौ ॥

सम्युपपदे ग्रहेर्घञ् भवति मुष्टावर्थे । संग्राहो मल्लस्य । मुष्टाविति किम् ? संग्रहः । अङ्गुलीनां रचनाविशेषो मुष्टिरिह गृह्यते । पक्षः शाकसंग्राहः । "सर्वस्मात्परिमाणे" इति सिद्धम् ॥

### ३४४ । परौ यज्ञे ॥

परावुपपदे यज्ञविषये ग्रहेर्घञ् भवति । उत्तरपरिग्राहः । यज्ञ इति किम् ? परिग्रहः ॥

### ३४५ । वावे वर्षप्रतिबन्धे ॥

अव उपपदे ग्रहेर्घञ् भवति वा वर्षप्रतिबन्धेऽर्थे । अवग्राहो वर्षस्य अवग्रहो वा ॥

### ३४६ । प्रे रश्मौ ॥

प्र उपपदे ग्रहेर्घञ् भवति वा रश्मावर्थे । प्रग्राहः, प्रग्रहो वा । रश्मिरिह रज्जुरुच्यते ॥

### ३४७ । वाणिजां च ॥

वणिजां च सम्बन्धिनि तुलासूत्रेऽर्थे प्र उपपदे ग्रहेर्घञ् भवति वा । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण वा चरति वणिक् ॥

### ३४८ । वृणोतेराच्छादने ॥

प्र उपपदे वृणोतेराच्छादनेऽर्थे घञ् भवति वा । प्रावारः, प्रावरः । आङ् पूर्वोऽयम् ॥

### ३४९ । आङि रुप्लुवोः ॥

आङ्युपपदे रौतेः प्लवतेश्च घञ् भवति वा आरावः, आरवः । आप्लावः, आप्लवः ॥

### ३५० । परौ भुवोऽवज्ञाने ॥

पराउपपदे भवतेर्घञ् भवति वा अवज्ञानेऽर्थे। परिभावः, परिभवः। अवज्ञान इति किम्? सर्वतो भवनं परिभवः॥

## ३५१। चेस्तु हस्तादाने॥

हस्तादानविषये चिनोतेर्घञ् भवति। पुष्पप्रचायः। हस्तादानग्रहणं प्रत्यासन्नोपलक्षणम्। तेन वृक्षाग्रे फलप्रचयं करोति। अप्यधिकारात् स्तेये न स्यात्—हस्तेन फलप्रचयं करोति चौरः॥

## ३५२। शरीरनिवासयोः कश्चादेः॥

चिनोतेः शरीरनिवासे चार्थे घञ् भवति, आदेश्च को भवति। चीयतेऽसौ—कायः शरीरम्, निचीयतेऽस्मिन्निति निकायो निवासः। अप्यधिकाराच्चितिराश्योरपि—आचीयतेऽसौ—आकायश्चितिः, गोमयनिकायः। कथं काष्ठनिचयः? बहुत्वमात्रविवक्षयेति॥

## ३५३। सङ्घे चानौत्तराधर्ये॥

प्राणिनां समूहः सङ्घ उच्यते। अनौत्तराधर्ये सङ्घे चार्थे चिनोतेर्घञ् भवति, कश्चादेः। वैयाकरणनिकायः। अनौत्तराधर्य्य इति किम्? शूकरनिचयः॥

## ३५४। परिन्योर्नीणोर्द्यूताभ्रेषयोः॥

परिन्योरुपपदयोर्यथासंख्यं नी इण्भ्यां घञ् भवति द्यूतविषयेऽभ्रेषे चार्थे। अभ्रेषोऽचलनम्, यथाप्राप्तकरणमित्यर्थः। परिणायेन शारीन् हन्ति—सर्वतो नयनेनेत्यर्थः। न्यायोऽत्र न्यायः॥

## ३५५। व्युपयोः शेतेः पर्य्याये॥

व्युपयोरुपपदयोः पर्य्यायविषये वर्त्तमानाच्छेतेर्घञ् भवति। तव राजविशायः, तव राजोपशायः, तव राजनि शयितुं पर्य्याय इत्यर्थः। अस्मादेव ज्ञापकात् परिपूर्वाद्दिणः क्रमेऽर्थे घञ् भवति॥

## ३५६। अभिविधौ भावे इनुण्॥

अभिविधौ गम्यमाने धातोरिनुण् भवति । साङ्कोटिनं सांराविणं वर्त्तते, क्रिययेवाभिव्याप्तिः, इनुणन्तात् स्वार्थेऽण् । युद्वपि दृश्यते—संकुटनं वर्त्तते ॥

## ३५७ । कर्मव्यतीहारे णच् स्त्रियाम् ॥

क्रियाविनिमये गम्यमाने धातोर्णज् भवति स्त्रियांभावे । व्यावक्रोशी, व्यावभाषी—णजन्तात् स्वार्थेऽण् , क्वचिदधिकारात् तत्र क्रियाव्यतीहारेण वृद्धिरागमः, कथंव्यतीचा, व्यवकुष्टिरिति ? अस्त्यधिकाराद्वासरूपता ॥

## ३५८ । स्वरवृद्गमिग्रहाम् अल् ॥

स्वरान्ताद् वृद्गमिग्रहिभ्यश्चाल् भवति । घञोऽपवादः । चयः क्षयः, भवः, लवः । वृङ् वृञ् वा—वरः, दृङ्—दरः, गमः, ग्रहः । वृद्गोरेवेति नियमादन्येभ्य ऋकारान्तेभ्यो घञेव—कारः, हारः । दीर्घाद्नेव—कृ करः, गॄ गरः, । भीतिर्भयमित्यलेव । न युडादयोऽपीति । वशः, रण इति रूढित्वादल् ॥

## ३५९ । उपसर्गेऽदेः ॥

उपसर्गे उपपदेऽदेरल् भवति । प्रघसः, विघसः—घञ्लोघैस्लृः । उपसर्ग इति किम् ? घासः ॥

## ३६० । नौ ण च ॥

नावुपपदेऽदेरल् भवति ण च । निघसः, न्यादः ॥

## ३६१ । मदेः प्रसमोर्हर्षे ॥

प्रसमोरुपपदयोर्मदेरल् भवति हर्षेऽर्थे । प्रमदः कन्यानाम्, सम्मदः कोकिलानाम् ॥

## ३६२ । व्यधजपोश्चानुपसर्गे ॥

अनुपसर्गे व्यधिजपिभ्यां मदेश्चाल् भवति । व्याधः, जपः, मदः, अनुपसर्ग इति किम् ? आव्याधः, उपजापः, प्रमादः ॥

### ३६३ । स्वनहसोर्वा ॥

अनुपसर्गे आभ्यामल् भवति वा । स्वनः, स्वानः । हसः, हासः । अनुपसर्ग इति किम् ? प्रस्वानः, प्रहासः ॥

### ३६४ । यमः सन्न्युपविषु च ॥

अनुपसर्गे सन्न्युपविषु च यमेरल् भवति वा । यमः, यामः । संयमः, संयामः । नियमः, नियामः । उपयमः, उपयामः । वियमः, वियामः ॥

### ३६५ । नौ गदनदपठस्वनाम् ॥

नावुपपदे एभ्योऽल् भवति वा । निगदः, निगादः । निनदः, निनादः । निपठः, निपाठः । निस्वनः, निस्वानः । "स्वनहसोर्वा" इति वचनादनुपसर्गे इह न वर्त्तते ॥

### ३६६ । क्वणो वीणायां च ॥

नावुपपदेऽनुपसर्गे च वीणाविषये क्वणतेरल् भवति वा । क्वणः, क्वाणः, निक्वणः, निक्वाणः, चकारे सति वीणाग्रहणं सोपसर्गार्थम् प्रक्वणो वीणायाः प्रक्वाणः ॥

### ३६७ । पणः परिमाणे नित्यम् ॥

पणतेरल् भवति नित्यंपरिमाणेऽर्थे पणः—शाकादीनामपि परिमिता मुष्टिः पण उच्यते । परिमाण इति किम् ? दाश्याः पाणः ॥

### ३६८ । समुदोरजः पशुषु ॥

समुदोरुपपदयोः पशुषु वर्त्तमानादजेरल् भवति । समजः पशूनाम्, समूह इत्यर्थः । उदजः पशूनाम्, प्रेरणमित्यर्थः । पशुष्विति किम् ? समाजश्छात्राणाम्, उदाजः खगानाम् ॥

### ३६९ । ग्लहोऽक्षेषु ॥

अक्षविषये वर्त्तमानाद् ग्रहेरलि लत्वं निपात्यते अक्षाणां ग्लहः

गत्याहिः—प्रकृत्यन्तरमित्येके—तदाप्रगच्छाद इति घञि प्रत्युदाहरणम् ॥

## ३७० । सर्तेःप्रजने ॥

प्रजने गर्भग्रहणे वर्त्तमानात् सर्त्तेरल् भवति । गवामुपसरः, उपसारोऽन्यः ॥

## ३७१ ह्वो हुश्चाभ्युपनिविषु च ॥

एषूपपदेषु ह्वयतेरल् भवति हुरादेशश्च । अभिहवः, उपहवः, निहवः, विहवः ॥

## ३७२ । आङि युद्धे ॥

आङ्युपपदे ह्वयतेरल् भवति युद्धेऽर्थे हुरादेशश्च । आहूयन्ते यस्मिन् योद्धारः स आहवः । कथम् आहूयन्ते पानाया गावो यस्मिन् स आहावो जलाधारः ? अन्यत्रापीति घञि च हुरादेशः ॥

## ३७३ । भावेऽनुपसर्गस्य ॥

अनुपसर्गस्य ह्वयतेरल् भवति भावे हुरादेशश्च । हवः । अनुपसर्गस्येति किम् ? प्रह्वायः ॥

## ३७४ । हन्तेर्वधिश्च ॥

अनुपसर्गस्य हन्तेरल् भवति भावे वधिरादेशश्च । हननं वधः । अन्यधिकाराच्च घातः । अनुपसर्गस्येति किम् ? विघातः ॥

## ३७५ । मूर्तौ घनिश्च ॥

मूर्तिः काठिन्यम् । मूर्त्यर्थे हन्तेरल् भवति घनिरादेशश्च । दध्नो घनः, घनं दधीत्यभेदात् ॥

## ३७६ । प्राद् गृहैकदेशे घञ् च ॥

प्राद् हन्तेरल् भवति घञ् च घनिरादेशश्च गृहैकदेशेऽर्थे । प्रघणः, प्रघाणः—गृहस्य द्विधाकृतस्य द्वारप्रकोष्ठाभ्यां यो बहिर्भूतः । तत्रापीति णत्वमावश्यत्वम् ॥

## ३७७ । अन्तर्घणोद्घनौ देशात्याधानयोः ॥

एतावलन्तौ निपात्येते देशात्याधानयोर्यथासंख्यम् । अन्तर्हन्यते यस्मिन् सोऽन्तर्घणो देशः, ऊर्ध्वं हन्यते यस्मिन् स उद्घनः—यस्योपरि काष्ठानि हन्यन्ते तदत्याधानम् ॥

## ३७८ । करणेऽयोविद्रुषु ॥

एषूपपदेषु हन्तेरल् भवति करणे घनिरादेशश्च । अयो हन्यतेऽनेनेति अयोघनः, विहन्यतेऽनेनेति विघनः, एवं द्रुघणः—संज्ञायां णत्वम् ॥

## ३७९ । परौ डः ॥

परावुपपदे हन्तेर्डो भवति करणे घनिरादेशश्च । परिहन्यतेऽनेनेति परिघः, लत्वे पलिघः ॥

## ३८० । नौ निमिते ॥

नावुपपदे हन्तेर्डो भवति घनिरादेशश्च निमिते वस्तुनि । निर्विशेषेण हन्यन्ते ज्ञायन्ते वा निघाः वृक्षाः, निघाः शालयः, सर्वतो निमिता आरोहतः परिणाहतश्च । निमित इति किम् ? निघातः ॥

## ३८१ । समुदोर्गणप्रशंसयोः ॥

समुदोरुपपदयोर्हन्तेर्डो भवति । घनिरादेशश्च गणे प्रशंसायाम् । संहननं संहन्यते यस्मिन्नवयवो वा—सङ्घः, उत्कृष्टं हन्यते ज्ञायत इति—उद्घो मनुष्यः । प्रशस्त इत्यर्थः ॥

## ३८२ । उपात् क आश्रये ॥

उपाद् हन्तेः को भवति आश्रये गम्यमाने घनिरादेशश्च । कृष्णोपघ्न वसति ॥

## ३८३ । स्तम्बेऽच्च ॥

स्तम्ब उपपदे हन्तेरज् भवति कप्रत्यये घनिरादेशश्च । स्तम्बो

हन्यतेऽनेनेति—स्तम्बघ्नः स्तम्बघ्नो दण्डः, स्तम्बघ्नो यष्टिः—पुंस्त्वमेव । केचित् स्त्रियामाहुः—स्तम्बघ्ना यष्टिरिति । अप्यधिकारात् स्थास्नापिबतिव्यधिहनिभ्यः कः स्यात्—आखूः वर्त्तते । प्रस्नात्यस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यामिति प्रपा । अविध्यतेऽनेनेत्याविधः, विहन्यतेऽनेनेति विघ्नः । आयुध्यतेऽनेनेत्यायुधं शस्त्रम् चापकादेव ॥

## ३८४ । ट्वनुबन्धादथुः ॥

ट्वनुबन्धाद्धातोरथुर्भवति भाव एव । टुवेपृ—वेपथुः । टुओश्वि—श्वयथुः । टुदु—दवथुः । टुवम—वमथुः । वेपद्दव इति वासरूपत्वात् ॥

## ३८५ । ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते ॥

ड्वनुबन्धाद्धातोस्त्रिमग् भवति तेन धात्वर्थेन निर्वृत्तेऽर्थे । डुपचष्, पाकेन निर्वृत्तम्—पक्त्रिमम्, डुकृञ्, करणेन निर्वृत्तम्—कृत्रिमम् । निर्वृत्तमिति कर्तरि कर्मणि वा । तेनेति यथायोगं तृतीया ॥

## ३८६ । याचिविच्छिप्रच्छियजिस्वपिरक्षियतां नङ् ॥

एभ्यो नङ् भवति । याञ्चा, विश्नः, प्रश्नः यज्ञः, स्वप्नः, रक्ष्णः, यत्नः ॥

## ३८७ । उपसर्गे दः किः ॥

उपसर्गे उपपदे दासंज्ञकात् किर्भवति । आदिः, निधिः । अप्यधिकाराद् अन्तर्धिः ॥

## ३८८ । कर्मण्यधिकरणे च ॥

कर्मण्युपपदे दासंज्ञकादधिकरणे च किर्भवति । वालधिः, जलधिः । उपसर्गैरव्यवधानतैव—पयोनिधिः ।

## ३८९ । स्त्रियां क्तिः ॥

स्त्रीलिङ्गे भावेऽकर्त्तरि च कारके संज्ञायां क्तिर्भवति । कृतिः, बुद्धिः, इज्यतेऽनयेति इष्टिः, एवं श्रुतिः, स्तुतिः—करणेऽपि ॥

## ३९० । सातिहेति यूतिजूतयश्च ॥

एते क्तिप्रत्ययान्ता निपात्यन्ते स्त्रियाम् । सिनोतेः, सनोतेर्वा—सातिः, हिनोतेर्हेतिः, यौतेर्यूतिः, जवतेर्जूतिः ॥

## ३९१ । भावे पचिगापास्थाभ्यः ॥

एभ्यो भावे स्त्रियां क्तिर्भवति । पचेः षानुबन्धत्वादङि प्राप्ते पक्तिः, तथा—"आतश्चोपसर्गे" सङ्गीतिः । प्रपीतिः, संस्थितिः । अप्यधिकारात् संस्था, व्यवस्था ॥

## ३९२ । व्रज्यजोः क्यप् ॥

भावे स्त्रियामाभ्यां क्यप् भवति । व्रज्या, इज्या । इष्टिरित्यपि भावे ॥

## ३९३ । समाजासनिसदनिपातिशीङ्सुविद्यटिचरिसनिभृञिणां संज्ञायाम् ॥

एभ्यः संज्ञायां भावे क्यप् भवति स्त्रियाम् । समज्या, आस्या, निषीदन्त्यस्यामिति निषद्या, निपतन्त्यस्यामिति निपात्या, शेरतेऽस्यामिति शय्या—अधिकरणेऽपि । सवनं सुत्या, विद्या, करणेऽपि । अटेश्चक्रीडितान्तादेवाभिधानाद् अटाट्या । परिपूर्वादेव चरेः परिचर्य्या, मन्या, भृत्या, इत्या । अप्यधिकारात्—आसुतिः, भृतिः, समितिः । भाव इति किम् ? भार्य्या । संज्ञायामिति किम् ? संवित्तिः ॥

## ३९४ । कृञः श च ॥

कृञः शो भवति क्तिः क्यप् च । क्रियत इति क्रिया । भावे च—कृतिः, कृत्या ॥

## ३९५ । सर्त्तेर्यश्च ॥

अभिधानात् परिपूर्वात् सर्तेर्यो भवति । परिसर्य्या । चकारात् क्तिश्च परिसृतिः ॥

## ३९६ । इच्छा ॥

इषेरिच्छेति निपात्यते । इच्छा ॥

## ३९७ । शंसिप्रत्ययादः ॥

शनसुर्निष्ठायामनिडिति वचनम् । शनसेः प्रत्ययान्ताच्च धातोर-प्रत्ययो भवति स्त्रियाम् । प्रशंसा, पिपतिषा । इशब्दो यिन् इशदा, घटाटा, कण्डूया । कण्डूतिरपीत्येके ॥

## ३९८ । गुरोश्च निष्ठासेटः ॥

गुरुमतो धातोर्निष्ठायां सेटोऽप्रत्ययो भवति । ईहा, ईक्षा, जागरा । गुरोरिति किम् ? निगृहीतिः । निष्ठासेट इति किम् ? नीतिः, राद्धिः ॥

## ३९९ । षानुबन्धभिदादिभ्यस्त्वङ् ॥

षानुबन्धेभ्यो भिदादिभ्य स्त्वङ् भवति । जृष्—जरा, डुपचष्—पचा, क्षिष्—क्षिया, घटादयः षानुबन्धाः—घटा, व्यथा, कृप कृपाया-मिति निर्देशात्—कृपा । उपलब्धिरिति ज्ञापकात्, क्षान्तिरित्यपि स्यात् । भिदादिभ्यो नाम गणनिर्दिष्टेभ्य इति—भिदा विदारणे, भित्तिर-न्या । छिदा द्विधाकरणे, छित्तिरन्या, गुहा पर्वतैकदेशे, गूढिरन्या प्रा-क्पूर्वदेः—आरा शस्त्री, अर्तिरन्या । धृञ् प्रपाते—धारा, धृतिरन्या । क्षिप्—क्षिपा, त्रिप—त्रिपा, गुध—गोधा, हृञ्—हारा, कृञ्—कारा, लिख—लेखा । रत्वं चादेः—रेखा । ऊनचुदपीडमृगयतिभ्य इनन्तेभ्यो-यो प्राप्ते वचनम् ऊना चूडा—दीर्घत्वं ह्रस्वं च स्यात् । पीडा, मृगया । वशा, रुजा, मृजा गुणवृद्ध्यादिकमर्थविशेषश्च गणपाठसामर्थ्यात् ॥

## ४०० । भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितो-लिदोलिभ्यश्च ॥

एभ्य इनन्तेभ्योऽङ् भवति । भियो हेतुभये षान्तः । भीषणं भीषा, चिति स्मृत्याम्—चिन्ता, पूज पूजायाम्—पूजा, कथ वाक्य-

प्रबन्धे—कथा, कुबिच्छादने—कुम्बा, चर्च अध्ययने—चर्चा, स्पृह ईप्सायाम्—स्पृहा, तुल उन्मादने—तोला, दुल उत्क्षेपे—दोला। कथं तुला? तुलया सम्मित इति निर्देशात्।

४०१। आतश्चोपसर्गे ॥

उपसर्गे उपपद आकारान्ताद्धातोरङ् भवति। संस्था, उपदा, उपधा। अन्तःपूर्वाच्च वक्तव्यम्—अन्तर्धा। कथं श्रद्धा? "आश्रद्धा" इति निर्देशात्। अप्यधिकारात् प्रमितिः॥

४०२। ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः॥

एभ्यो युर्भवति। ईष गतिहिंसादानेषु—ईषणा, श्रन्थना, उपासना, वन्दना। आसिसहचरितो वेत्तिः—वेदना, कारणा। चुरादौ घट्ट चलने—घट्टना। भौवादिकस्य केरनभिधानात्॥

४०३। कीर्त्तोषोः क्तिश्च॥

कीर्त्तयतेरिषेश्च क्तिर्युश्च भवति। कीर्त्तिः, सङ्कीर्त्तना। इष गतौ, इष आभीक्ष्ण्ये वा—अन्विष्टिः, परीष्टिः, अन्वेषणा, पर्य्येषणा। इषु इच्छायामिति सानुबन्धः—इष्टिः॥

४०४। रोगाख्यायां वुञ्॥

व्याधेराख्यायां धातोर्वुञ् भवति। प्रवाहिका, प्रच्छर्दिका, विचर्चिका। अप्यधिकारात्—शिरोऽर्दनम् शिरोऽर्त्तिः॥

४०५। संज्ञायां च॥

संज्ञायां च विषये धातोर्वुञ् भवति। उद्यानपुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्यानपुष्पभञ्जिका क्रीडा। क्रीडायां नित्यसमास एव। पुष्पभञ्जिका क्रीडेत्येवार्थवती संज्ञा। एवं वारणपुष्पप्रचायिका॥

४०६। पर्य्यायार्हर्णोत्पत्तिषु च॥

एषुवर्त्तमानाद्धातोर्वुञ् भवति। भवतः शायिका, अर्हति भवा-

निखुमद्रिकाम्, भृशो पायसभोजिका मे धारयसि । चकारादुत्तौ च—इक्षुभक्षिका मे उपपादि । न च भवति, चिकीर्षा जिहीर्षा मे उत्पद्यते । भावमात्रे च दृश्यते—का नाम शायिका ग्रन्थेष्वधीयमानेषु, का नामासिका ग्रन्थेषु गच्छत्स्विति ॥

## ४०७ । प्रश्नाख्यानयोरिञ् च वा ॥

प्रश्न आख्याने च गम्यमाने धातोरिञ् वुञ् च भवति । वाग्रहणाद् यथाप्राप्तम् । कां त्वं कारिमकार्षीः ? कां कारिकां ? कां कृतिं ? कां क्रियां ? कां कृत्याम् ? सर्वां कारिमकार्षं, सर्वां कारिकां, सर्वां कृतिं, सर्वां क्रियां, सर्वां कृत्याम् ॥

## ४०८ । नञ्यन्याक्रोशे ॥

नञ्युपपदे आक्रोशे गम्यमाने धातोरनिर्भवति । अकरणिस्ते वृषल ! भूयात् । एवम् अजीवनिः । नञीति किम् ? मृतिस्ते वृषल ! भूयात् । सम्पदादिभ्यः क्विप् भावे कारके चान्यत्रापीति—बहुलत्वात् स एव सम्पत्, प्रतिपत्, विपत् । सम्पत्तिरित्यपि स्यात् । सम्पदादिराकृतिगणोऽयम् । इकिश् तिपो धातोः स्वरूपेऽर्थे ज्ञापकादेव सिद्धाः । अकारः, ककार इत्युणादिषु, कारशब्देन वा समासः, यथा—एवङ्कारः, ओंकारः, चीत्कारः, शीत्कारः, स्फीत्कारः, स्फुटकारः, वषट्कारः, स्वाहाकार इत्यादि । रादिफः, रेफ इत्यौणादिकः ॥

## ४०९ । कृत्ययुटोऽन्यत्रापि च ॥

कृत्या युट् च यस्मिन्नर्थे विहितास्ततोऽन्यत्रापि च भवन्ति लक्ष्यतः । स्नानीयं चूर्णम्, दानीयो ब्राह्मणः, समावर्तनीयो गुरुः, प्रवचनीय उपाध्यायः, करणादिषु भवन्त्यमी—भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्याः कर्त्तर्य्यपि भवन्ति । आङ्पूर्वयोः प्लुङ्पच्योर्यणिति । राजभिर्भुज्यन्ते—राजभोजनाः शालयः । राजाच्छादनानि वासांसि । अवसेचनम्, अवस्रावणम्, दानम् एते कर्मणि । प्रस्कन्दनम्, प्रपतनमि-

स्यपादाने । अपिशब्दोऽत्र बहुलार्थ इति—ष्ठिवुसिव्योर्दीर्घश्चवा । निष्ठी-वनम्, निष्ठेवनम् । निषीवणं, निषेवणम् । करोतीति कारणम् ॥

## ४१० । नपुंसके भावे क्तः ॥

नपुंसके भावेऽर्थे क्तो भवति । शयितम्, स्थितम्, भवता कृतम्, प्राप्तमनेनेत्यविवक्षितकर्मत्वात् । युटा बाधितो नपुंसके क्तो यथा स्या-दिति वचनम्, वासरूपत्वेन्न घञादयोऽपि स्युरिति ॥

## ४११ । युट् च ॥

नपुंसके भावे युट् च भवति । स्थानम्, गमनम् ॥

## ४१२ । करणाधिकरणयोश्च ॥

करणेऽधिकरणे च युट् भवति नपुंसके । इध्मव्रश्चनम्, पलाश-शातनम् । अधिकरणे च—गोदोहनी घटी । शक्तुधानी स्थाली ॥

## ४१३ । पुंसि संज्ञायां घः ॥

करणाधिकरणयोः पुंसि संज्ञायां घो भवति । स्वरान्तात्—उर-श्छाद्यतेऽनेनेति—उरश्छदः, कुर्वन्त्यनेनेति करः । शृणन्त्यनेनेति शरः । अधिकरणेऽपि—लीयन्तेऽस्मिन्निति लयः, निलीयन्तेऽस्मिन्निति निलयः, विषियवन्त्यस्मिन्निति विषयः ॥

## ४१४ । गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमाश्च ॥

एते घप्रत्ययान्ता निपात्यन्ते । गावश्चरन्त्यस्मिन्निति गोचरः, प्रत्या-सत्तिलक्षणत्वात् । एवं सञ्चरः । वहन्त्यनेनेति वहो वृषभस्य । व्रजन्त्य-स्मिन्निति व्रजः, विपूर्वोऽत्र—व्यजन्त्यनेनेति व्यजः, क्रामन्त्यनेनेति क्रमः । आपणायन्तेऽनेनेति आपणः । निगच्छन्त्यनेनेति निगमः । चकारात्—भजन्त्यस्मिन्निति भगः, निकषन्त्यनेनेति निकषः ॥

## ४१५ । अवेस्तॄतोर्घञ् ॥

अव उपपदे तॄस्तॄभ्यां घञ् भवति । अवतारः । अवतरन्त्यनेनेति

अभिविधितिति वा अवतारः, अवस्तृणन्त्यनेनेति अभिमञ्जिति वा अव-
स्तारः ॥

## ४१६ । व्यञ्जनाच्च ॥

व्यञ्जनान्ताश्च घापवादं घञ् भवति । लिखन्त्यनेनेति—लेखः,
विदन्त्यनेनेति—वेदः, अपमृजन्त्यनेनेति अपामार्गः—ह्रस्वस्य दीर्घता,
आचरन्त्यनेनेति—आचारः, एवम् आ[illegible]सः, चकारात्—अध्यायः,
न्यायः, उद्यावः, संहारः, आधारः, आनाय इति च ॥

## ४१७ । उदङ्कोऽनुदके ॥

उदञ्चतेर्घञ्युदङ्क इति निपात्यतेऽनुदकविषये । ऊर्ध्वमञ्चन्त्यनेने
ति—उदङ्कः, घृतोदङ्कः । अनुदक इति किम् ? उदकोदञ्चनः—घेरव-
विशेषाद् युट् ॥

## ४१८ । जालमानायः ॥

आनाय इति निपात्यते जालं चेत् । आनीयन्तेऽनेनेति । आनायो
मत्स्यानाम् , आलम्ब्यतेऽनेनेति आलम्बनः—घोऽपि दृश्यते । आलम्बनः—
घञपि । आल इत्यन्यतोऽपि चेति डः । करणेऽपि—आलम्बः, आलम्ब-
निकः, आलम्बनिकवक इति डट्इकट्इकन्वका औणादिका इति ॥

## ४१९ । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥

कृच्छ्रं दुःखं दुःसोऽर्थः । अकृच्छ्रं सुखमितरयोरर्थः । एषूपपदेषु
कृच्छ्राकृच्छ्रार्थेषु धातोः खल् भवति भावे कर्मणि च । ईषद् अनायया-
सेन क्रियते—ईषत्करः कटो भवता । दुःखेनायासेन क्रियते—दु-
ष्करः । सुखेनानायासेन क्रियते—सुकरः । कृच्छ्राकृच्छ्रार्थेष्विति किम् ?
ईषल्लभ्यं धनम्—कृपणात्मना मित्यर्थः ॥

## ४२० । कर्तृकर्मणोश्च भूकृञोः ॥

ईषदादिषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु कर्तृकर्मणोश्च भूकृञोः खल्

भवति । खानुबन्धबलात् कर्तृकर्मणोरेवायमन्तर्थेम् । ईषदाढ्ये न भूयते—ईषदाढ्यम्भवं भवता, दुराढ्यम्भवम्, स्वाढ्यम्भवम्, ईषदाढ्याः क्रियते—ईषदाढ्यङ्करो भवान् । दुराढ्यङ्करः, स्वाढ्यङ्करः । यदेषदाढ्य एव सन् किञ्चित् क्रियते तदा न भवति । करोतेरिहाभूतप्रादुर्भावार्थत्वात् । यथासङ्ख्याद् ईषदाढ्योऽनुभूयत इत्यत्र न भवति ॥

## ४२१ । आद्भ्यो युदरिद्रातोः ॥

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेष्वाकारान्तेभ्यो युर्भवति अदरिद्रातेः । ईषत्पानः, सुपानः, दुष्पानः, अदरिद्रातेरिति किम् ? ईषद्दरिद्रः ॥

## ४२२ । शासुयुधिदृशिधृषिमृषांवा ॥

ईषदादिषूपपदेषु कृच्छ्राकृच्छार्थेष्वेषां युर्भवति वा । ईषच्छासनः, ईषच्छासः, दुःशासनः, दुःशासः, सुशासनः, सुशासः, ईषद्योधनः, ईषद्योधः, दुर्योधनः । दुर्योधः, सुयोधनः, सुयोधः, ईषद्दर्शनः, ईषद्दर्शः, दुर्दर्शनः, दुर्दर्शः । सुदर्शनः, सुदर्शः । ईषद्धर्षणः, ईषद्धर्षः, दुर्धर्षणः, दुर्धर्षः, सुधर्षणः, सुधर्षः, ईषन्मर्षणः, ईषन्मर्षः, दुर्मर्षणः, दुर्मर्षः, सुमर्षणः, सुमर्षः, वाग्रहणात् स्त्र्यधिकारादपरेषु न वासरूपविधिरिति ॥

## ४२३ । इच्छार्थेष्वेककर्तृकेषु तुम् ॥

इच्छार्थेषु धातुष्वेककर्तृकेषूपपदेषु धातोस्तुमेव भवति, नतु "बुण्तुमौ क्रियायां क्रियार्थायामिति इच्छति" भोक्तुम्, भोक्तुं कामयते । एक कर्तृकेष्विति किम् ? भिन्नकर्तृकेषु विधिर्मा भूत्—राज्ञो भोजनमिमिच्छति । इच्छन् करोतीत्यपि स्यात् । इच्छार्थेष्विति किम् ? पाचको व्रजति ॥

## ४२४ । कालसमयवेलाशक्त्यर्थेषु च ॥

एषू पोपादिषू पपदेषु धातोस्तुमेव भवति । कालोभोक्तुम्, भोक्तुं कालः, समयो भोक्तुम्, वेला भोक्तुम्, समर्थो भोक्तुम्, भोक्तुं शक्तः, प्रभुर्भोक्तुम्, पर्याप्तो भोक्तुम्, अलं भोक्तुम् । भवतेर्वृत्तेर्वा नाप-

र्थस्य प्रतीयमानत्वात्—यथा भोक्तुं मनः, गन्तुं कामः, श्रोतुं, श्रोत्रम्, द्रष्टुं चक्षुः, योद्धुं धनुः, वक्तुं जडः, उच्चारयितुं वक्तु शक्तमिति । तथा शक्त्यर्थात्—शक्नोति भोक्तुम्, पारयति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम्, ग्लायति भोक्तुम्, घटते भोक्तुम्, आरभते भोक्तुम्, आलभते भोक्तुम्, प्रक्रमते भोक्तुम्, उत्सहते भोक्तुम्, अर्हति भोक्तुम्, अस्ति भोक्तुम्, विद्यते भोक्तुम्. क्रियायां क्रियार्थायामिति तुम् सिद्ध एव । वृत्त्यभिधानाद् द्रष्टव्यः ॥

## ४२५ । अर्हतौ तृच् ॥

अर्हत्यर्थविशिष्टाद्धातोस्तृच् भवति । कन्यायाः खलु भवान् वोढा, अध्येता खलु भवाञ् शास्त्रस्य । प्रयोगतश्चेति अर्हे शकौ च सप्तमी सा बाधिका यथा स्यादिति वचनम्—भवान् खलु कन्यामुद्वहेत । अर्हः शक्त इत्यर्थः ॥

## ४२६ । शकि च कृत्याः ॥

शकनं शक् । शक्त्यर्थविशिष्टादर्हत्यर्थविशिष्टाच्च धातोः कृत्या भवन्ति । भवता खलु कन्या वोढव्या, वहनीया वाह्या उद्वोढेति च ।

## ४२७ । प्रैष्यातिसर्गप्राप्तकालेषु ॥

प्रैष्यादिषु गम्यमानेषु धातोः कृत्या भवन्ति । प्रेषितस्त्वं—भवता ग्रामो गन्तव्यः, गमनीयः गम्यः । अतिसर्गोऽनुमतिः—गुरुणानुज्ञातस्त्वं—भवता कटः कर्तव्यः, करणीयः, कार्य्यः, कृत्यः. प्राप्तस्ते कालः कटकरणे—कर्त्तव्यः, करणीयः, कृत्यः, कार्य्यः कटो भवता । ऊर्ध्वं मुहूर्त्तात् कटः कर्त्तव्य इत्यपि वक्तव्यम् । प्रैष्यादिषु पञ्चमीसप्तम्युक्ता सा बाधिका स्यादिति वचनम् ॥

## ४२८ । आवश्यकाधमर्णयोर्णिन् ॥

अवश्यं भावे गम्यमानेऽधमर्णे च कर्त्तरि धातोर्णिन् भवति । अवश्यं दायी, अवश्यं कारी । अधमर्णे च—शतं दायी, सहस्रं दायी, दायी मे शतं भवान् ॥

## ४२९ । तिक्कृतौ संज्ञायामाशिषि ॥

आशीर्विषये संज्ञायां गम्यमानायां धातोस्तिक्कृतौ भवतः । तनुतात्—तन्तिः, देवायैनं देयात्—देवदत्तः, एवं यज्ञदत्तः, वीरो भूयादिति वीरभूतिः— मित्रभूतिः । अग्निरस्य भूयादित्यग्निभूतिः । संज्ञाशब्दा यथाकथञ्चिद् व्युत्पाद्याः ॥

## ४३० । धातुसम्बन्धे प्रत्ययाः ॥

धात्वर्थानां सम्बन्धे विशेषणविशेष्यभाव लक्षणे स्वं कालं त्यक्त्वा विशेष्यस्य धात्वर्थस्य काले कृत्संज्ञकाः प्रत्ययाः साधवो भवन्ति, न तु त्यादयः साध्यविहितत्वात् । सूत्रं त्विदं सुखार्थमेव । अग्निष्टोमयाजी पुत्रोऽस्य जनिता । अग्निष्टोमयाजीति—भूते णिनिः । जनितेत्यनेन सम्बन्धे भविष्यति साधुर्भवति । एवं कृतः कटः श्वो भविता, भावि कृत्यमासीत्—भविष्यति विहितो णिनिर्भूते सिद्धः । प्रकरणाद् कृतो लब्धाः, प्रत्ययग्रहणं सामान्यार्थम्—गोमानासीत्, गोमान् भवितेति । गोमानिति वर्तमाने मन्तुः आसीदित्यनेन सम्बन्धेऽतीते सिद्धः भवितेत्यनेन भविष्यतीति ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु पञ्चमः पादः समाप्तः ॥

---

## ४३१ । अलङ्खल्वोः प्रतिषेधयोः क्त्वा वा ॥

अलङ्खलुशब्दयोः प्रतिषेधार्थयोरुपपदयोर्धातोः क्त्वा भवति वा । अलं कृत्वा, खलु कृत्वा, अलं भोजनेन, खलु भोजनेन । अलङ्खल्वोरिति किम् ? मा कार्षीः । प्रतिषेधार्थयोरिति किम् ? अलङ्कारो निष्कस्य, खलु दानं कन्यायाः—निश्चयेऽत्र खलुशब्दः ॥

## ४३२ । मेङः ॥

मयतेः क्त्वा भवति वा । अपूर्वकालार्थं वचनम् । अपमाय

अपमित्य, याचते—यपीत्थं नेष्यते । न याचेः क्त्वा अभिधानाच्च । अपमातुं याचते । याचित्वापमयते ॥

## ४३३ । एककर्तृकयोः पूर्वकाले ॥

एककर्तृकयोर्धात्वर्थयोर्मध्ये यः पूर्वक्रियाकालस्तस्मिन् वर्त्तमाना-द्धातोः क्त्वा भवति । शक्तिशक्तिमतोरभेदविवक्षयैककर्तृकता । भुक्त्वा व्रजति । द्विवचनस्यातन्त्रत्वात् परापेक्षया वा—भुक्त्वा पीत्वा व्रजति । एककर्तृकयोरिति किम् ? भुक्तवति गुरौ शिष्यो व्रजति । पूर्वकाल इति किम् ? पचति च पठति च । कथम् अक्षिणी निमील्य हसति, मुखं व्यादाय स्वपिति ? मुहूर्त्तादिकालस्य विवक्षितत्वात् । कथं मृतं दृष्ट्वा दुःखं भवति, प्रियं दृष्ट्वा सुखं स्यात् ? भिन्नकर्तृकत्वाच्चिन्त्यमेमत् ॥

## ४३४ । परावरयोगे च ॥

परस्यावरेण योगेऽवरस्य च परेण योगे सति धातोः क्त्वा भवति । अप्राप्य नदीं पर्वतः, परनदीयोगेनावरदेशस्थः पर्वतो विशि-ष्यते । अतिक्रम्य पर्वतं नदी, अवरपर्वतयोगेन परदेशस्था नदी विशि-ष्यते । भवतेः सर्वत्र सम्भवादेककर्तृकता पूर्वकालता च दुःखप्रति-पत्तिगम्येति वचनम् ॥

## ४३५ । णम् चाभीक्ष्ण्ये द्विश्च पदम् ॥

एककर्तृकयोर्धात्वर्थयोः पूर्वकाले वर्त्तमानाद्धातोर्णम् भवति क्त्वा चाभीक्ष्ण्ये पदं च द्विर्भवति । भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति । द्विश्च पदमिति सुखार्थमेवेदम्—लुनीहि लुनीहीति लोकतो दर्शनात् । यदयं भुङ्क्ते ततो व्रजति—यच्छब्दप्रयोगे ततः शब्देन क्रम-स्याभिधानात् क्त्वा न भवति, आभीक्ष्ण्याभावाच्च णम् न स्यात् । यदयं पुनःपुनर्भुङ्क्ते ततो व्रजति—पुनः पुनः शब्देनाभीक्ष्ण्यस्याभि-धानात्, यदयं भुक्त्वा गच्छति ततोऽधीत इति भोजनगमनयोः क्रमे क्त्वा, गमनाध्ययनयोस्तु क्रमस्य ततःशब्देनाभिधानात् ॥

## ४३६ । विभाषाग्रेप्रथमपूर्वेषु ॥

एषूपपदेषु विभाषा धातोर्णम् भवति । अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति, प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति, पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति । पूर्वं भुङ्क्ते ततो व्रजतीति ततःशब्देन क्रमस्याभिधानात् ॥

## ४३७ । कर्मण्याक्रोशे कृञः खमिञ् ॥

कर्मण्युपपदे कृञः खमिञ् भवति आक्रोशे गम्यमाने । चौरंकारमाक्रोशति । करोतिरिहोच्चारणे, आक्रोशेन क्रियैव कर्म । आक्रोश इति किम् ? साधु कृत्वा स्तौति । खानुबन्धो मागमार्थः ॥

## ४३८ । स्वादौ च ॥

स्वाद्वर्थे स्वादुः । तस्मिन्नुपपदे कृञः खमिञ् भवति । स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते, स्वादाविति किम् ? रूपमिदमदीर्घान्ततां गमयति, तेन—स्वादूकृत्य स्वाद्वीं कृत्वा भुङ्क्ते यवागूम् ॥

## ४३९ । अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् ॥

एषूपपादेषु कृञः खमिञ् भवति सिद्धाप्रयोगश्चेत् करोतिर्वर्तते । यस्मादन्यथादयः शब्दाः प्रकारमाचक्षते, उक्तेष्वपि प्रयोगाविर्भावायेति करोतिः प्रयुज्यते । अन्यथाकारं भुङ्क्ते, एवङ्कारं भुङ्क्ते, कथङ्कारं भुङ्क्ते, इत्थंकारं भुङ्क्ते । सिद्धाप्रयोगश्चेदिति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ॥

## ४४० । यथातथयोरसूयाप्रतिवचने ॥

"ओस्येत्वं सूत्रत्वात्" असूयाऽक्षमा, तदर्थे प्रतिवचनम् । यथातथयोः कृञः खमिञ् भवति असूयाप्रतिवचने गम्यमाने—सिद्धाप्रयोगश्चेत् करोतिर्भवति । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं

तवानेन । असूयाप्रतिवचन इति किम् ? यथा कृत्वाहं मोदये, तथा कृत्वाहं शिरो भोदये किं तवानेन ॥

## ४४१ । दृशो णम् साकल्ये ॥

साकल्यविशिष्टे कर्मण्युपपदे दृशो णम् भवति । कन्यादर्शं वरयति—यां यां कन्यां पश्यति, तां सर्वां वरयतीत्यर्थः । विदेर्वक्तव्यम्—ब्राह्मणवेदं भोजयति—यं यं ब्राह्मणं जानाति लभते विचारयति तं सर्वं भोजयतीत्यर्थः । साकल्य इति किम् ? कं दृ ब्राह्मणं दृष्ट्वा भोजयति ॥

## ४४२ । यावति विन्दजीवोः ॥

यावदित्यनिर्दिष्टार्थवाची । यावदित्युपपदे विन्दतेर्जीवतेश्च णम् भवति । यावद्वेदं भुङ्क्ते—यावद् यावन्तं वा लभते तावत् तावन्तं वा भुङ्क्त इत्यर्थः, यावज्जीवमधीते—यावज्जीवति तावदधीत इत्यर्थः ॥

## ४४३ । चर्मोदरयोः पूरेः ॥

पूरिरिनन्त एव सकर्मकः । चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णम् भवति । चर्मपूरं ददाति, उदरपूरं भुङ्क्ते ॥

## ४४४ । वर्षप्रमाण ऊलोपश्च वा ॥

कर्मण्युपपदे पूरयतेर्णम् भवति वर्षप्रमाणे गम्यमाने, पूरयतेरूलोपश्च वा । गोष्पदपूरं वृष्टो देवः, गोष्पदप्रवृष्टो देवः ॥

## ४४५ । चेलार्थे क्नोपेः ॥

चेलार्थे कर्मण्युपपदे क्नोपयतेर्णम् भवति वर्षप्रमाणे गम्यमाने । चेलक्नोपं वृष्टो देवः, वस्त्रक्नोपं वृष्टो देवः, वसनक्नोपं वृष्टो देवः ॥

## ४४६ । निमूलसमूलयोः कषः ॥

निमूलसमूलयोः कर्मणोरुपपदयोः कषतेर्णम् भवति । निमूलकाषं कषति, समूलकाषं कषति,—निमूलं समूलं कषतीत्यर्थः ॥

## ४४७ । शुष्कचूर्णरुक्षेषु पिषः ॥

एषु कर्मसूपपदेषु पिषेर्णम् भवति । शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रुक्षपेषं पिनष्टि, शुष्कं पिनष्टीत्यर्थः ॥

## ४४८ । जीवे ग्रहः ॥

जीवे कर्मण्युपपदे ग्रहेर्णम् भवति । जीवग्राहं गृह्णाति—जीवं गृह्णातीत्यर्थः ॥

## ४४९ । अकृते कृञः ॥

अकृते कर्मण्युपपदे कृञो णम् भवति । अकृतकारं करोति—अकृतं करोतीत्यर्थः ॥

## ४५० । समूले हन्तेः ॥

समूले कर्मण्युपपदे हन्तेर्णम् भवति । समूलघातं हन्ति—समूलं हन्तीत्यर्थः ॥

## ४५१ । करणे ॥

करणवाचिन्युपपदे हन्तेर्णम भवति । पादघातं भूमिं हन्ति—पादेन हन्तीत्यर्थः । मुष्टिघातं चौरं हन्ति—मुष्टिना चौरं हन्तीत्यर्थः । परमपि हिंसार्थानामेककर्मकादिति वचनं बाधते करणस्य व्यक्तित्वात् ॥

## ४५२ । हस्तार्थे ग्रहवर्तिवृताम् ॥

हस्तार्थे करणे उपपदे एषां णम् भवति । हस्तेन गृह्णाति—हस्तग्राहं गृह्णाति, एवं करग्राहं गृह्णाति हस्तेन वर्तयति—हस्तवर्तं वर्तयति । हस्तेन वर्तते—हस्तवर्तं वर्तते ॥

## ४५३ । स्वार्थे पुषः ॥

स्वाम्यात्मात्मीयज्ञातिवित्तानि । स्वाभिधेयेषु करणेषूपपदेषु पुषो णम् भवति । स्वेन पोषति पुष्यति पुष्णाति वा—स्वपोषं पोषति, एवम् आत्मपोषम्, आत्मीयपोषम्, गोपोषम्, महिषीपोषम्, पितृपोषम्, मातृपोषम्, वित्तपोषम्, रैपोषम् ॥

## ४५४ । स्नेहने पिषः ॥

स्निह्यते सिच्यतेऽनेनेति स्नेहनमुदकादि । स्नेहवाचिनि करण उपपदे पिषो णमु भवति । उदकेन पिनष्टि—उदपेषं पिनष्टि, एवं तैलपेषम्, घृतपेषम् । उदकस्योदः पेषवासवाहनधिषु च निपात्यते ॥

## ४५५ । बन्धोऽधिकरणे ॥

अधिकरणे नाम्न्युपपदे बध्नातेर्णम् भवति । चक्र बद्धः—चक्रबन्धं बद्धः, गुप्तिबन्धं बद्धः, हस्तबन्धं बद्धः ॥

## ४५६ । संज्ञायां च ॥

अधिकरणेऽनधिकरणे चोपपदे बध्नातेर्णम् भवति संज्ञायां गम्यमानायाम् । क्रौञ्चे क्रौञ्चेन वा बद्धः, क्रौञ्चबन्धं बद्धः, एवं मयूरिकाबन्धम्, अट्टालिकाबन्धम् । बन्धविशेषाणामियं संज्ञा ॥

## ४५७ । कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम् ॥

जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहिभ्यां णम् भवति यथासंख्यम् । जीवनाशं नष्टः—जीवो नष्ट इत्यर्थः, पुरुषवाहं वहति—पुरुषो वहतीत्यर्थः । कर्त्रोरिति किम् ? जीवेन नष्टः, पुरुषेणोढः ॥

## ४५८ । ऊर्ध्वे शुषिपूरोः ॥

ऊर्ध्वे कर्त्र्याविन्युपपदे शुषेः पूरेश्च णम् भवति । ऊर्ध्वशोषं शुष्कः, ऊर्ध्वं पूरं पूर्णः, ऊर्ध्वः सन्नित्यर्थः ।

अन्यथाकारं भुङ्क्त इत्यादिषु किमर्थं णमो विधानम् ? व्याप्यत्वाद् द्वितीया भविष्यति । यथा—ओदनपाकं शेते । प्रहेर्ने घ्नन्ति कर्तव्यमेव । गोष्पदं प्रातीति गोष्पदप्रमिति क्रियाविशेषणत्वात्, तद्युक्तम् तरां तमां चेष्यतेऽव्ययत्वात्, पूर्वकालोऽपि यथाभिधानं प्रतिपाद्य एव । तथा,स-विकल्पाधिकारे क्वापि दृश्यते, अन्यथाकारं भुज्यत ओदन इति द्वितीया न स्यात्, यथा—ओदनः पक्त्वा भुज्यते कृत्वयो

हि भावेऽभिधानात् प्रधानशक्त्यभिधाने गुणशक्तिरविहितवत् प्रकाशते ॥

## ४५९ । कर्मणि चोपमाने ॥

कर्त्तरि कर्मणि चोपमानवाचिन्युपपदे धातोर्णम् भवति । चूडक इव नष्टः, चूडकनाशं नष्टः कर्मणि च—सुवर्णमिव निहितम् सुवर्णनिधायं निहितम् , ओदनपाचं पक्वः । उपमान इति किम् ? चूडको नष्टः, सुवर्णं निहितम् ॥

## ४६० । कसादिषु तैरेवानुप्रयोगः ॥

कषादिषु णमो विषयभूतेषु तैरेव कषादिभिरनुप्रयोगः कर्त्तव्ये नान्यैरिति, अनुप्रयोगश्च पूर्वकालतामभिद्योतयेव । निमूलकाषं कषति । कषादिष्विति किम् ? चेलक्नोपं वृष्टो देवः ॥

## ४६१ । तृतीयायामुपदंशेः ॥

तृतीयान्त उपपदे उपपूर्वाद् दन्शेर्णम् भवति । मूलकेनोपदंशं भुङ्क्ते, मूलकादिकरणतया भुजिना युक्तमप्युपदंशिना व्याप्तमित्युपपदं स्यात् । वाधिकाराद् मूलकेनोपदश्य भुङ्क्ते । तृतीयायामिति किम् ? मूलकमुपदश्यभुङ्क्ते ॥

## ४६२ । हिंसार्थाच्चैककर्मकात् ॥

तृतीयान्त उपपदे हिंसार्थाद्धातोरनुप्रयोगेण समानकर्मकाण्णम् भवति । दण्डेनोपघातं दण्डोपघातं गाः कलयति । एक कर्मकादिति किम् ? दण्डेनाहत्य भूमिं गोपालको गाः सादयति ॥

## ४६३ । सप्तम्यां च प्रमाणासत्त्योः ॥

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णम् भवति प्रमाणे गम्यमाने प्रत्यासत्तौ च । सम्बन्धाविवक्षायां न यथासंख्यम् । द्व्यङ्गुलेनोत्कर्षम्, द्व्यङ्गुल उत्कर्षम्, द्व्यङ्गुलोत्कर्षं गण्डिकां छिनत्ति । केशैर्ग्राहम् केशेषु ग्राहम् , केशग्राहं युध्यन्ते ॥

## ४६४ । उपपीडरुधकर्षश्च ॥

तृतीयान्ते सप्तम्यन्ते चोपपद उपपूर्वेभ्य एभ्यो णम् भवति । पार्श्वाभ्यामुपपीडम्, पार्श्वयोरुपपीडम्, पार्श्वोपपीडं शेते । व्रजेनोपरोधं, व्रज उपरोधम्, व्रजोपरोधं गाः सादयति । पाणिनोपकर्षम्, पाणावुपकर्षम्, पाण्युपकर्षम् धाना भक्षयति ॥

## ४६५ । अपादाने परीप्सायाम् ॥

परि समन्तादाप्तुमिच्छा परीप्सा त्वरेत्यर्थः । आपादान उपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम् । शय्याया उत्थायम् शय्योत्थायं धावति, रन्ध्रादुपकर्षम्, रन्ध्रोपकर्षं पयः पिबति । परीप्सायामिति किम् ? आसनादुत्थाय गच्छति ।

## ४६६ । द्वितीयायां च ॥

द्वितीयान्ते चोपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम् । लोष्टं ग्राहम्, लोष्टग्राहं युध्यन्ते । एवं नामत्वरन्ते येनायुधमपि नाद्रियन्ते ॥

## ४६७ । स्वाङ्गेऽध्रुवे ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गसंज्ञकेऽध्रुवे द्वितीयान्त उपपदे धातोर्णम् भवति । भ्रुवौ विक्षेपम्, भ्रूविक्षेपं जल्पति । अक्षिणी काणम्, अक्षिकाणं हसति । अध्रुव इति किम् ? उत्क्षिप्य शिरः कथयति । यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवम् ॥

## ४६८ । परिक्लिश्यमाने च ॥

परि समन्तात् क्लिश्यमाने स्वाङ्गे च द्वितीयान्त उपपदे धातोर्णम् भवति । उरांसि प्रतिपेषम्, उरःप्रतिपेषम् युध्यन्ते । कृत्स्नमुरः पीडयित्वा युध्यन्त इत्यर्थः ॥

## ४६९ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥

व्याप्यमान आसेव्यमाने च द्वितीयान्त उपपदे एभ्यो धातुभ्यो णम् भवति । भुतत्वाद् विश्यादिक्रियाभि साकल्येन द्रव्याणामेव सम्बन्धो व्याप्तिरीप्सा, अतो द्रव्यस्य द्विवचनम् । आसेवा तात्पर्य्यम् आभीक्ष्ण्यं, तच्च क्रियाया एवेति । विश्यादीनां णमन्तानां द्विर्वचनं भवति । गेहं गेहमनुप्रवेशमास्ते, गेहमनुप्रवेशमनुप्रवेशमास्ते, गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते, गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपादमनुप्रपादमास्ते, गेहं गेहमवस्कन्दमास्ते, गेहमवस्कन्दमवस्कन्दमास्ते । समास एव वीप्साभीक्ष्ण्यार्थमभिधत्ते शब्दशक्तित्वात्—गेहानुप्रवेशम्, गेहानुप्रपातम्, गेहानुप्रपादम् गेहावस्कंदमास्त इति । व्याप्यमानासेव्यमानयोरिति किम् ? गेहमनुप्रविश्य भुङ्क्ते । आभीक्ष्ण्येणम् सिद्ध एव, उपपदसमासविभाषार्थमिदम् ॥

## ४७० । तृष्यस्वोः क्रियान्तरे कालेषु ॥

कालेषु द्वितियान्तेषूपपदेषु क्रियान्तरे गम्यमाने तृष्यस्वोर्णम् भवति । द्व्यहं तर्षम् द्व्यहतर्षं गाः पाययति । द्व्यहमभ्यासम् , द्व्यहाभ्यासं गाः पाययति । अद्य उत्पानं यच्च द्व्यहेऽतीते भविष्यति, तन्मध्यपातिना तर्षयोगेनाभ्यसनेन च गवां पानक्रिया व्यवधीयते । तृष्यस्वोरिति किम् ? द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तर इति किम् ? अहरभ्यस्येषून् गतः—अभ्यसनेनेषवः कालाश्च व्याप्यन्ते न गतिर्व्यवधीयते । कालेष्विति किम् ? योजनमभ्यस्य गाः पाययति । क्रियाग्रहणं सुखार्थम् ॥

## ४७१ । नाम्न्यादिशिग्रहोः ॥

नाम्नि स्वरूपे द्वितीयान्त उपपद आदिशेर्ग्रहेश्च णम् भवति । नामान्यादेशम्, नामादेशं ददाति, नामान्यभिग्राहम्, नामग्राहमाह्वयति ॥

## ४७२ । कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च ॥

यथेष्टमिति वीप्सायामव्ययीभावः । अव्यय उपपदे कृञो णम् भवति क्त्वा च, अयथेष्टाख्याने गम्यमाने । ब्राह्मण ! पुत्रस्ते जातः, नीचैःकारम्, नीचैःकृत्य, नीचैःकृत्वाचष्टे, उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण ! कन्या तेगर्भिणी, किं तर्हि वृषल्युच्चैःकारम्, उच्चैःकृत्य, उच्चैः कृत्वाचष्टे, नीचैर्नामाप्रियमाख्येयम् । अयथेष्टाख्यान इति किम् ? ब्राह्मण ! पुत्रस्ते जातः, उच्चैः कृत्वाचष्टे । समासविकल्पार्थं क्त्वाग्रहणम् ॥

## ४७३ । तिर्य च्यपवर्गे ॥

तिर्यक्शब्द उपपदे ञो णम् भवति क्त्वा च । अपवर्गे गम्यमाने । तिर्य्यक्कारम्, तिर्य्यक्कृत्य, तिर्य्यक्कृत्वागतः—परिसमाप्य गत इत्यर्थः । अपवर्ग इति किम् ? तिर्यक्कृत्वा काष्ठं गतः ॥

## ४७४ । स्वाङ्गे तसि ॥

स्वाङ्गसंज्ञके तस् प्रत्ययान्त उपपदे कृञो णम् भवति । मुखतः कारम्, मुखतःकृत्य, मुखतः कृत्वास्ते । स्वाङ्ग इति किम् ? सर्वतः कृत्वा गतः । अव्ययाधिकारान्मुखे तश्यतीति मुखतः कृत्वा गत इति ॥

## ४७५ । भुवस्तूष्णीमि च ॥

स्वाङ्गे तस् प्रत्ययान्ते तूष्णीम्शब्दे चोपपदे भुवो धातोर्णम् भवति क्त्वा च । मुखतो भावम्, मुखतोभूय, मुखतो भूत्वास्ते । तूष्णीम्भावम्, तूष्णीम्भूय, तूष्णीं भूत्वास्ते । कथं नानाकारम्, नानाकृत्य, नाना कृत्वा भुङ्क्ते । विनाकारम् , विनाकृत्य, विना कृत्वा गत इति क्रियाविशेषणमेव । नाम्नां युक्तार्थत्वाद्वा समासः । नाना कृत्वा काष्ठानि गत इति सापेक्षत्वान्न समासः । एवं नानाभावम्, नानाभूय, नाना भूत्वास्ते । विनाभावम्, विनाभूय, विना भूत्वा गत इति । तथा अन्वग्भावम् , अन्वग्भूय, अन्वग् भूत्वास्ते । आनकूल्य एव समासोऽभिधानात् । तेनान्यथा भूत्वा तिष्ठति शत्रुः ॥

## ४७६। कर्तरि कृतः॥

कृत्संज्ञकाः प्रत्ययाः कर्त्तरि वेदितव्याः। करोतीति कर्त्ता, कारकः। पचः, नन्दनः। निराकाङ्क्षेषु वाक्येषु परिभाषेयं शेषभूता वा। ल्युट्-करणेनाप्यातस्यात्तु न पाक्षिकी वृत्तिः॥

## ४७७। भावकर्मणोः कृत्यक्तखलर्थाः॥

पूर्वस्यापवादोऽयम् भावे कर्मणि च कृत्याः क्तः खलर्थाश्च वेदितव्याः। शयितव्यं भवता, भोक्तव्यं ओदनो भवता, आसितं भवता, कृतः कटो भवता, ईषदाढ्यम्भवं भवता, ईषत्करः कटो भवता, ईषत्पानं भवता, ईषत्पानः सोमो भवता, अर्थादकर्मकेभ्यो भावे सकर्मकेभ्यश्च कर्मणीति॥

## ४७८। आदिकर्मणि क्तः कर्तरि च॥

आदिक्रियायां यः क्तो विहितः स कर्त्तरि कारके वेदितव्यो यथाप्राप्तं च। प्रकृतः कटं भवान्, प्रकृतः कटो भवता, प्रभुक्तो भवान्, प्रभुक्तं भवता, प्रशब्द आदिक्रियाद्योतकः। बहूनां क्रियाक्षणानामादिक्रियाक्षणोऽतीत एव। भविष्यति कटे कटशब्दस्तादर्थ्यात्॥

## ४७९। गत्यर्थाकर्मकश्लिषशीङ् स्थासवसजनरुहजीर्य्यतिभ्यश्च॥

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च कर्त्तरि क्तो वेदितव्यः। चकाराद् यथाप्राप्तं च। गतो ग्रामं भवान्, प्राप्तो ग्रामं भवान्, गतो ग्रामो भवता, प्राप्तो ग्रामो भवता, गतमनेन, प्राप्तमनेन। अकर्मकेभ्यः—शयितो भवान्, शयितं भवता। श्लिषादयः सोपसर्गाः सकर्मकाः। श्लिष आलिङ्गनार्थः—आश्लिष्टो गुरुं भवान्, आश्लिष्टो गुरुर्भवता। अधिशयितः खट्वां भवान्, अधिशयिता खट्वा भवता। उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता। उपासितो गुरुम्भवान्, उपासितो गुरुर्भवता। वस निवासार्थ एव—अनूषितो गुरुं भवान्, अनूषितो गुरु-

भवता । अनुज्ञातो माणवको माषविकाम्, अनुज्ञाता माषविका माणवकेन । आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता । अनुजीर्णो वृषलीं भवान्, अनुजीर्णा वृषली भवता ॥

## ४८० । दाशगोघ्नौ सम्प्रदाने ॥

एतौ सम्प्रदाने निपात्येते । दाशृ दाने, दाशन्ते यस्मै—स दाशः, गां हन्ति यस्मा आगताय स गोघ्नोऽतिथिः, निपातनादच्टकौ । अर्घ्यार्हा ऋत्विगादय एव तद्योग्यतयाऽप्युच्यन्ते ॥

## ४८१ । भीमादयोऽपादाने ॥

एते निपात्यन्तेऽपादाने । बिभेत्यस्मादिति—भीमः, एवं भीष्मः । चण्डः, प्रस्कन्दनः, प्रपतनः, समुद्रः, स्रुवः, एत औणादिका व्युत्पत्तिश्च यथाकथञ्चित् ॥

## ४८२ । ताभ्यामन्यत्रोणादयः ॥

ताभ्यां सम्प्रदानापादानाभ्यामन्यत्र कारक उणादयो भवन्ति । कृवापाजिमिस्वदिसाध्यशूभ्य उण् इत्यादयः कर्त्तरि प्राप्ताः कर्मादिष्वपि कथ्यन्ते । करोतीति—कारुः, वातीति—वायुः, कृष्यत इति—कृषिः, तन्यत इति तन्तुः ॥

## ४८३ । क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥

ध्रुवो निश्चलः स च क्रियाविशेषणम्, तस्य भावो ध्रौव्यम्, अवस्थानात्मकक्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते । प्रत्यवसानं भोजनम् । ध्रौव्यार्थेभ्यो गत्यर्थेभ्यः प्रत्यवसानार्थेभ्यश्च क्तोऽधिकरणे विहितस्यो यथाप्राप्तं च । इदमेषामासितम्, आसितमेभिः, आसितो भवान्, इदमेषां यातम्, इह तैर्यातम्, ग्रामस्तैर्यातः, ग्रामं ते याताः । अधिकरणं कर्मकर्ता च नोक्तमिति लिङ्गार्थमात्रे प्रथमैव । इदमेषां भुक्तं, पीतम्, इह तैर्भुक्त ओदनः, पीतं पयः । भोजनार्थात् कर्त्तर्यपि स्यादिति व्यवहितः पाठः । कथं भुक्ता विप्राः, पीता गाव इति ? अन्यत्रापीति वचनात्, तद्योगाद् अर्श आदित्वाद् वा । देवभेदे वृद्धः सम्पन्नाः शालय इति शालिहेतवः सम्पन्ना इत्यतीतता ॥

## ४८४ । युवुझामनाकान्ताः ॥

एषां स्थाने ऽन अक अन्त इत्येत आदेशा भवन्ति यथासंख्यम् । नन्दनः, पाचकः, गण्डयन्तः, मण्डयन्तः—गण्डिमण्डिजिनन्दिभ्यो झच् । कथं भुज्युः, मृत्युः ? भुजिमृङ्भ्यां युक्त्युकावौणादिकस्य बहुलत्वात्, कृदधिकाराच्च । ऊर्णोः सन्त्यस्य—ऊर्णायुः ॥

## ४८५ । समासे भाविन्यनञः क्त्वो यप् ॥

नञोऽन्यस्याव्ययस्य क्त्वान्ते नैव समासे भाविनि क्त्वाप्रत्ययस्य यबादेशो भवति । प्रणम्य, प्रदीव्य, आपृच्छ्य, अधीत्य, उपेत्य । भविग्रहणमुपदेशार्थमिति तेन पञ्चमोपधाप्रभृतीनां दीर्घादिकं न स्यात् तोऽन्तश्च स्यात् । खाट्कृत्य, कन्यानलंकृत्य, सत्कृत्य, असत्कृत्य, अन्तर्हत्य, कणेहत्य पयः पिबति, मनोहत्य, पयः पिबति, तावत्पिबति यावत्तृप्त इत्यर्थः । पुरस्कृत्य, अस्तंकृत्य, अच्छगत्य, अच्छव्रज्य, अच्छोद्य अदःकृत्य चिन्तयति, तिरोभूय तिरस्कृत्य, उपाजेकृत्य, अन्वाजेकृत्य, साक्षात्कृत्य, मध्येकृत्य, पदेकृत्य निवचनेकृत्य, उरसिकृत्य, मनसिकृत्य, हस्तेकृत्य, पाणौकृत्य, प्राध्वंकृत्य, उपनिषत्कृत्य, जीविकाकृत्य अनुकरणं च कृता भूषणादरानादरेष्वलं सदसत् । अग्रहणोऽन्तर् तृप्तौ च कणेमनसी पुरोऽस्तं च । अच्छ च गत्यर्थवदिभिः, अनुपदेशेऽदस् । तिरोऽन्तर्धौ । सतिरस् उपाजेऽन्वाजे, साक्षात्प्रभृतीनि च कृञा वा । मध्ये पदेनिवचने, अनत्याधान उरसिमनसी । नित्यं हस्ते पाणावुद्वाहे बन्धने प्राध्वम् । उपनिषदौपम्ये जीविका च पूर्वे समस्ताश्च । समास इति किम् ? तिरः कृत्वा, उपाजे कृत्वा । अनञ इति किम् ? अकृत्वा पर्युदासोऽयम्, तेन—सर्वस्मात्—परमकृत्वा ॥

## ४८६ । चजोः कगौ धुड्घानुबन्धयोः ॥

चजोः कगौ भवतः । धुटि घानुबन्धे च प्रत्यये परे । निमित्तेन

तु सम्बन्धस्याविवक्षितत्वान्न यथासंख्यम् । पक्ता, भोक्ता पाकः, भोगः । रुग्नः । भुग्न इति नित्यमपि मत्वं बाधित्वाऽन्तरङ्गत्वाच्च वर्णस्य क्रिरस्ति । घघानुबन्धे कृति व्यावृत्तिः स्यादिति घुग्-ग्रहणम् ॥

## ४८७ । न्यङ्क्वादीनां ह्श्च घः ॥

न्यङ्कु । इत्येवमादीनां चजोः कगौ भवतः ह्श्च घो भवति । नावञ्चेः डुः—न्यङ्कुः । भृमृतृचरित्सरितनिमस जिशीङ्भ्य उः—मद्गुः । प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च—भृगुः । स्फायितञ्चिवञ्चीत्यादे रक्—तक्रम्, वक्रम् । असुन्—उच्यतेऽस्मिन्निति—ओकः । श्वति-पचः प्रवसर्गः—सन्ञेः सृजेश्च पचाद्यच् श्वपाकः, मांसपाकः, कतोतपाकः, उलूकपाकः, कर्मण्यण् । दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव—पचाद्यच्, गद्यनिपातनादुपधाया दीर्घत्वं सप्तम्याश्चालुक् दूरेपाकः, फलेपाकः, क्षणेपाक इति केचित् । मेहतीत्यच्—मेघो जलद एव । अवदाघः, निदाघः, अर्हतेः अर्घः—घञ् संज्ञायाम् अन्यथा अवदाहः, निदाहः, अर्हः ॥

## ४८८ । न कवर्गादिव्रज्यजाम् ॥

कवर्गादेर्व्रजेरजेश्च चजोः कगौ न भवतः । कूजः, खर्जः, गर्जः, परिव्राजः, उदाजः, आज्यं घृतम् । वञ्चेर्गताविति वक्तव्यम्—वञ्च्यत इति वञ्च्यां गता वणिजः—गन्तव्यं गता इत्यर्थः । गताविति किम् ? वङ्क्यं काष्ठम्—वञ्चिरत्र कौटिल्ये ॥

## ४८९ । ण्यण्यावश्यके ॥

आवश्यकभावे गम्यमाने ण्यणि चजोः कगौ न भवतः । अवश्यपाच्यम्, अवश्यभोज्यम् । आवश्यक इति किम् ? पाक्य ओदनः ॥

## ४९० । प्रवचर्चिरुचियाचित्यजाम् ॥

अनावश्यकार्थं वचनम् । एषां चजोः कगौ न भवति ण्यणि परे ।

प्रवाच्यः पाठविशेषः—तद्वान् ग्रन्थोऽप्युच्यत इति शब्दविषयता। अर्च स्तुतौ—अर्च्यः। रोच्यः, याच्यः, त्याज्यः। कथं शोच्यः? हेतिमन्तत्वात् ॥

## ४९१। वचोऽशब्दे ॥

वचेर्घ्यणि को न भवति अशब्दविषये। वाच्यम्। अशब्द इति किम्? वाक्यं पदसमुदायः। वक्तव्यस्यरचनारम्भयोग इत्यपि स्यात् ॥

## ४९२। निप्राभ्यां युजः शक्ये ॥

निप्राभ्यां परस्य युजः शक्येऽर्थे घ्यणि गो न भवति। नियोक्तुं शक्यः—नियोज्यो भृत्यः एवं प्रयोज्यः। शक्य इति किम्? नियोक्तुमर्हति—नियोग्यः, प्रयोग्यः प्रभुः ॥

## ४९३। भुजोऽन्ने ॥

भुजो भक्ष्येऽर्थे घ्यणि गो न भवति। भोज्यमन्नम्, भोज्यं पयः। अन्न इति किम्? भोग्यः कम्बलः, भोग्या भूः ॥

## ४९४। भुजन्युब्जौ पाणिरोगयोः ॥

भुजन्युब्जौ घञन्तौ पाणिरोगयोरर्थयोर्यथासंख्यं निपात्येते। भुज्यतेऽनेनेति—भुजः पाणिः, न्युब्जितः शेतेऽस्मिन्निति—न्युब्जो रोगविशेषः—"व्यञ्जनाच्च" इति घञ्। पाणिरोगयोरिति किम्? भोगः, न्युद्गः—गत्वे दीर्घश्च इष्यते ॥

## ४९५। दृग्दृशदृक्षेषु समानस्य सः ॥

समानस्य दृगादिषु सो भवति, वचनात् क्विप्टक्सकः। सदृक्, सदृशः, सदृक्षः। योगविभागात् पक्षादिषु च,—सपक्षः, सज्योतिः—इत्यादि यथेष्टं समासः। पक्ष, ज्योतिः, जनपद, रात्रि, नाभि, बन्धु, पत्नी। रूपादौ वा—समानो रूपः—सरूपः। रूप, नाम, गोत्र, स्थान, वर्ण, वयः, धर्म, जातीय, उदर, उदर्य। सब्रह्मचारीति नित्यम् ॥

## ४९६ । इदमी ॥

इदम् दृगादिष्वीर्भवति । ईदृक्, ईदृशः, ईदृक्षः । अभेदबलात् सर्वस्य ॥

## ४९७ । किम् की ॥

किम् दृगादिषु कीर्भवति । कीदृक्, कीदृशः, कीदृक्षः । इदं किं परिमाणमस्य—इयान् कियान्—सद्यआद्यत्वात् ॥

## ४९८ । अदोऽमूः ॥

अदो दृगादिष्वमूर्भवति । अमूदृक्, अमूदृक्शः, अमूदृक्षः । केचिद् अमूकादृक् अमुकादृशः, अमूकादृक्ष, इति तदायत्त एव ॥

## ४९९ । आ सर्वनाम्नः ॥

सर्वनाम्नो दृगादिष्वा भवति । तादृक्, तादृशः, तादृक्षः । भवादृगित्यन्तरङ्गत्वाल्लोपः । अन्यादृगिति सर्वनाम्न इति वचनादन्यशब्दादपि दृशः क्विप्टक्शमिति । यत्तदेतत् परिमाणमस्य—यावान्, तावान्, एतावन् इति सद्यआद्यत्वात् परिमाणे वन्तुवात्त्वं चेति ॥

## ५०० । विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ क्वौ ॥

विष्वग्देवयोः सर्वनाम्नश्चान्त्यस्वरादेरवयवस्याञ्चतौ क्विबन्ते परेऽद्रिरादेशो भवति । विष्वगञ्चतीति विष्वद्र्यङ्, देवद्र्यङ्, यद्र्यङ्, तद्र्यङ्, सर्वद्र्यङ् अद्र्यङ् अमुद्र्यङ् ॥

## ५०१ । सहसन्तिरसां सध्रिसमितिरयः ॥

एषां सध्रि समि तिरि इत्येत आदेशाः यथासंख्यं भवन्ति अञ्चतौ क्विबन्ते । सहाञ्चतीति—सध्र्यङ्, समञ्चतीति सम्यङ्, तिरोऽञ्चतीति तिर्यङ् ॥

## ५०२ । रुहेर्धो वा ॥

रुहेर्धो भवति वा क्वौ परे । विरोहतीति वीरुत्, वीरुधौ, वीरुट ,

वीवहौ । वेहस्वस्य दीर्घता । व्यवस्थितविभाषया विपूर्वस्यैव, तेन मूवट्, मूवहौ ॥

## ५०३ । मो नो धातोः ॥

धातोर्मकारस्य नकारो भवति क्वौ परे । शमु—प्रशान्, तमु—प्रतान् । नोऽस्त्येत इत्यस्य च लोपः, क्वौ स्थानिवद्भावाल्लिङ्गान्तनकारस्य नलोपो न स्यात् । धातुग्रहणं वानिवृत्त्यर्थम् ॥

## ५०४ । वमोश्च ॥

वमोश्च परयोर्धातोर्मो नो भवति । जगन्वान् । गम्मा—सर्वधातुभ्यो मन् ॥

## ५०५ । स्वरे धातुरनात् ॥

मकारान्तः स्वरे परे धातुरेव भवति । अनात्, आकारो न निवर्तत इत्यर्थः । प्रशामौ, प्रतामौ, जग्मुषः, जग्मुषी । तदाश्रित एव स्वरे । तेन प्रशामन्त्रेति । स्वर इति किम् ? प्रशम्भ्याम् । ये चेष्यते प्रशाममिच्छति—प्रशाम्यति—प्रशामे हितम्—प्रशाम्यम् ॥

## ५०६ । अतीण्घसैकस्वरातामिड् वन्सौ ॥

अतीण्घसैकस्वरान्तानामेव वन्साविड् भवत्यादिः । "आदिनियमेन परोक्षावद्भावादिट्सिद्धो नियम्यते" आदिवान्, ईयिवान्, जक्षिवान्, आदिवान्, पेचिवान्, ददिवान, पपिवान्, दरिद्रांचकृवानित्यादि भाष्यम् । अत्यादिग्रहणादेव वन्सौ द्विर्वचने सत्येकस्वरा ग्रहीतव्या नेकत्वं वचनादिषः । एषामिति किम् ? बभज्वान्, जगम्वान् ॥

## ५०७ । गमहनविदविशदृशां वा ॥

अप्राप्ते विभाषेयम् । एषां वन्साविड् वा भवति ॥ जग्मिवान, जग्वान्, जघ्निवान्, जघन्वान्, विविदिवान्, विविद्वान्—बहुमि

सविकरणैः साहचर्याल्लाभार्थस्य विदेर्ग्रहणम् । विविशिवान् विविश्वान्, ददृशिवान्, ददृश्वान् ॥

## ५०८ । दाश्वान् साह्वान् मीढ्वांश्च ॥

एते निपात्यन्ते ।

"द्विर्वचनमनिट्त्वंच सहेर्दीर्घो मिहेरपि ।
ढत्वं च खलु तन्त्रत्वात् सर्वाणि वचनानि च ॥"

## ५०९ । नश्रयुर्णवृतां कानुबन्धे ॥

श्रयतेरुवर्णान्तस्य वृञ्वृङोर्ऋकारान्तस्य च कानुबन्धे सार्वधातुके नेड् भवति । श्रितः, श्रितवान्, श्रित्वा । युतः, युतवान्, युत्वा । रुतः, रुतवान्, रुत्वा । लूनः, लूनवान्, लूत्वा । वृतः, वृतवान्, वृत्वा । कीर्णः, कीर्णवान्, कीर्त्वा—वचनाद् विकृतेऽपि स्यात् । शेश्रियितः, लोलुवित इति सिद्धये एकस्वरमनुवर्तयन्त्यन्ये, तेषाम् ऊर्णोतेर्वक्तव्यमेव—प्रोर्णुतः, प्रोर्णुतवान् ॥

## ५१० । घोषवत्योश्च कृति ॥

घोषवति तौ च कृत्संज्ञके नेड् भवति । ईश्वरः, दीप्रः, शर्मा, दीप्तिः, आगतिः, बुद्धिः । तिङ् च—तन्तिः, सन्तिः । कथं निगृहीतिः, निपठितिः, निकुचितिः, आलोचितिः, उपस्निहितिः ? मधुकल्पुतिवाधिकारात् ग्रहादेरिड् भवति । अपचितिरिति पूजायां निष्कृतौ चेष्यते । कथं शस्त्रम् ? आगमस्यानित्यत्वात् । पत्रमिति—"युग्यं पत्रे" इति वचनात् ॥

## ५११ । वेषुसहलुभरुषरिषां ति ॥

एषां तकारादावसार्वधातुक इड् भवति वा । एष्टा, एषिता । सोढा, सहिता । लोब्धा, लोभिता । रोष्टा, रोषिता, रेष्टा । रेषिता । इदनुबन्धः किम् ? इष गतौ, आभीक्ष्ण्ये वा—एषिता नित्यम् ॥

## ५१२ । रधादिभ्यश्च ॥

तीति न वर्तते पृथग्वचनात् ! टानुबन्धलिङ्गाद् रधादिभ्यश्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरिड् भवति वा । रत्स्यति, रधिष्यति । नङ्क्ष्यति, नशिष्यति । प्रावृत्करणं रधादिः । ररन्धिव, ररन्धिम इति क्रादि नियमान्नित्यमिट् ॥

## ५१३ । स्वरतिसूतिसूयत्यूदनुबन्धात् ॥

स्वरतेः सूतेः सूयतेरूदनुबन्धाच्च परस्यासार्वधातुकस्य व्यञ्जना-देरयकारादेरादिरिड् भवति वा । स्वर्ता, स्वरिता । सोता, स-विता । सुवतेस्तु नित्यम्—सविता, निगोढा, निगूहिता । विधोता, विधवितेति धुञ्। धूञ् च सिद्धम् । स्वरिष्यतीति परत्वाद्विकल्पो न स्याद् व्यवस्थितवावचनात् । तथा स्वृसूङोश्च क्त्वानुबन्धे नित्यं स्यात्—स्वृत्वा, सूत्वेति । "अपतिनिष्कुषोरिति" वचनाद् निष्कु-षोर्वेडस्तीति गम्यते । असार्वधातुकस्य व्यञ्जनादेरयकारादेरिति—निष्कोष्टा, निष्कोषिता ॥

## ५१४ । उदनुबन्धपूक्लिशां क्त्वि ॥

उदनुबन्धात् पुवः क्लिशश्च क्त्वीड् भवति वा । शमु—शान्त्वा, शमित्वा । पूङ् पूञ् वा—पूत्वा, पवित्वा । क्लिष्ट्वा, क्लिशित्वा । ऊदनु-बन्धस्य क्लिशेश्च प्राप्ते विभाषा, पुवः क्त्वानुबन्धेऽप्राप्तपक्ष ॥

## ५१५ । जॄव्रश्चोरिट् ॥

जॄव्रश्चिभ्यां क्त्वीड् भवति । जरित्वा, जरीत्वा । व्रश्चित्वा । क्राद्-यादिकत्वाद् जॄष—जीर्त्वा । व्रश्चेर्वचनान्नित्यमिडिति । पुनरिड्-ग्रहणमुत्तरत्र वानिवृत्त्यर्थम् ॥

## ५१६ । लुभो विमोहने ॥

विमोहने लुभः क्त्वीड् भवति । लुभित्वा । गार्ध्येतु—लुब्ध्वा लुभित्वा ॥

## ५१७ । क्षुधिवसोश्च ॥

चकारेण लुभो विमोहन इत्यनुकृष्यते उत्तरार्थम् । क्षुधिवसोश्च क्त्वीड् भवति । क्षुधित्वा , उषित्वा । प्रतिषेधबाधकमिदम् ॥

## ५१८ । निष्ठायां च ॥

क्षुधिवसिभ्यां विमोहने लुभेश्च निष्ठायामिड् भवति । क्षुधितः, क्षुधितवान् । उषितः, उषितवान् । लुभितः, लुभितवान् गार्द्ध्येतु व्यावृत्त्या विभाषापि बाध्यते—लुब्धः, लुब्धवान् ॥

## ५१९ । पूक्लिशोर्वा ॥

पुवः क्लिशश्च निष्ठायामिड् भवति वा । पवितः, पवितवान् पूतः, पूतवान् । क्लिश, क्लिशू—क्लिशितः, क्लिशितवान् । क्लिष्टः, क्लिष्टवान् ॥

## ५२० । न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः ।

एभ्यो धातुभ्यः पतिनिष्कुषवर्जितेभ्यो निष्ठायां नेड् भवति । उड्डीनः, उड्डीनवान् । शूनः, शूनवान् । दीपी—दीप्तः, दीप्तवान् । ओलस्जी—लग्नः, लग्नवान् । लस्जेरीदनुबन्धबलादिडभावे सत्यं स्यात्केद् ईदनुबन्धः किम् ? सविकल्पकं वा ज्ञापकं स्यादिति । तथाडीश्वी च कर्तव्यौ । विकल्पेटां च गुहू—गूढः, गूढवान् शमु—शांतः, शांतवान् । अपतिनिष्कुषोरिति किम् ? पतितः, पतितवान् । निष्कुषितः, निष्कुषितवान् । कथं दरिद्रितः, दरिद्रितवान् ? एकस्वरोऽत्र स्मर्तव्यः—अपति निष्कुषोरिति पर्युदासाद् वा ॥

## ५२१ । आदनुबन्धाच्च ॥

आदनुबन्धाच्च धातोर्निष्ठायां नेड् भवति । ञिमिदा—मिन्नः, मिन्नवान् । ञिक्ष्विदा—क्ष्विण्णः, क्ष्विण्णवान् । चकारोऽनुक्तसमुच्चयार्थः, तेन जपिवमिभ्यां वा—जप्तः, जपितः । वान्तः, वमितः ।

श्याङ्भ्यां श्वसः—विश्वस्तः, विश्वसितः। आश्वस्तः, आश्वसितः। कर्त्तरि कर्मणि चायं प्रतिषेधः। भावादिकर्मणोर्वेति वक्ष्यति॥

## ५२२। भावादिकर्मणोर्वा॥

आदनुबन्धाद्धातोर्भाव आदिक्रियायां च निष्ठायामिड् भवति वा। भिन्नं, मेदितमनेन, प्रमिन्नः, प्रमेदितो भवान्। वेट्त्वात् सिद्धे योगविभागो ज्ञापयति—यदर्थस्य विभाषा, तदर्थस्यैव प्रतिषेध इति। तेन—"गमहनविद्विशदृशां वा" इति साहचर्याल्लाभार्थस्य विदेर्ग्रहणे ज्ञानार्थस्य प्रतिषेधो न स्यात्—विदितः, विदितवान्॥

## ५२३। क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु॥

एभ्यो मन्थादिष्वर्थेषु क्ते नेड् भवति यथासंख्यम्। क्षुब्धो मन्थः,—चलितो मन्थ इत्यर्थः मन्थ इति द्रवद्रव्यालोड़िताः सक्तव उच्यन्ते। वाह प्रयत्ने—वाढं भृशम्—अत्रावृत्त्यातिशयोऽभ्युपगमश्च गृह्यते, न तु शीघ्रार्थः। स्वान्तं मनः—वाह्येष्वविचिन्तितमित्यर्थः। ध्वान्तं तमः। फण गतौ—फाण्टम्—अनायासनिर्यातत्वात् सद्यो भिषजोद्धृतौषधं द्रवद्रव्यमेवेष्यते कष शिष—कष्टोऽग्निः, कष्टः पर्वतः—कृच्छ्रहेतुत्वात् कृच्छ्रं गहनमप्युच्यते, कृच्छ्रं दुःखम्, सति मुख्ये गौणोऽप्यभिधानम्। घुषिरशब्द इति भ्वादौ—घुष्टा रज्जुः। घुष्टं शरीरम्। घुषिरविशब्दन इति चुरादौ विशब्दने तु स्यादिट् अवघुषितं वाक्यमाह, विशब्दन इति प्रतिषेधाच्चुरादावपि न स्याद् विभाषयेति, तेनेदं सिद्धम्—"महीपालवचः श्रुत्वा जुघुषुः पुष्पमानवाः"। अनेकार्थत्वाद् भौवादिक एव वा विशब्दनेऽपि—स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः। मन्थादिष्विति किम्? क्षुभितः, वाहितः, स्वनितः, ध्वनितः, फणितः, कषितः, घुषितः। तथा भिन्नाधिकरणेऽपि—क्षुभितं मन्थेन, वाहितं भृशं,

स्वनितं मनसा, ध्वनितं तमसा, फाणितमनायासेन, कषितं कृच्छ्रेण, घुषितं शरीरेण । कथम् उद्घुष्टं कोकिलयेति ? प्रकृत्यर्थविशेषणात् । कथं क्षुब्धः समुद्र इत्युपमानाद्भविष्यति ॥

## ५२४ । लग्नम्लिष्टविरिब्धाः सक्ताविस्पष्टस्वरेषु ॥

लग्नादयः कान्ताः सक्तादिष्वर्थेषु यथासंख्यं निपात्यन्ते । लगे—लग्नं सक्तम् । लगितमन्यत् । म्लेच्छ—म्लिष्टम् अविस्पष्टम्, म्लेच्छित-मन्यत् । रेभृ—विरिब्धः स्वरः । स्वरो ध्वनिरत्र । विरेभितमन्यत् । अन्ये तु विरिभितमिति प्रत्युदाहरन्ति रिभिं सौत्रं धातुं मत्वेति । धृष्टो विशस्तः इति धृषेरादनुबन्धात् शसोश्चोदनुबन्धाद् वेडिति प्रति-षेधः प्रागल्भ्य एव रूढः, अन्यत्र धर्षितः, विशसित इत्यभिधानाश्रयो-ऽनित्यत्वाद् वा ॥

## ५२५ । परिवृढदृढौ प्रभुबलवतोः ॥

एतौ प्रभुबलवतोरर्थयोर्यथासंख्यं निपात्येते । परिपूर्वस्य बृंहे-रिड्भावो नलोपश्च, तथा दृंहेश्च, बृहदृहौ प्रकृत्यन्तरे तयोरपीत्येके परिवृढः प्रभुः, दृढो बलवान्, स्थूलोऽपि दृढो बलवानेवाभिधीयते । कथं परिवृढस्य गतः । परिवृढादिन् समासाभावाद् यब् न स्यात् ? सत्यम् तत्करोतीति सिद्धे संग्रामयुद्ध इति गणपाठो ज्ञापयति । नाममात्रादिन्निति । अपचायितः । अपचित इति चायिना चिञा च पूजावृत्तिना सिद्धम् कथं वृत्तं पारायणं विप्रेण, वृत्तो गुणश्छात्रे-णेति ? अन्तर्भूतेऽनर्थवृत्तेर्भविष्यति, इनन्तस्यापि वर्तितो गुणेऽनेनेति भवतिण्यमिति मतम् । अन्ये त्विनोऽध्ययने वृत्तमिति निपातयन्ति ॥

## ५२६ । संनिविभ्योऽर्देः ॥

सन्निविभ्यः परस्यार्देर्तेःके नेड् भवति । समर्णः, न्यर्णः, व्यर्णः । निष्ठायामनिटार्तेर्विकल्पमन्ये ॥

## ५२७ । सामीप्येऽभेः ॥

अभेः परस्यार्देते: क्ते नेड् भवति सामीप्येऽर्थे । अभ्यर्णा सेना । सामीप्य इत्यर्थः । अनतिदूर इत्येकेऽभिधानात् ॥

## ५२८ । वा रुष्यमत्वरसंघुषास्वनाम् ॥

एभ्यः क्ते नेड् भवति वा रुष्टः । रुषितः—वेपुसहलुभरुषेत्यादिना वेट्त्वात् प्रतिषेधः प्राप्तः । अम गतौ न त्वम् रोग इति इनन्तत्वात्—अभ्यान्तः, अभ्यमितः । तूर्णः, त्वरितः—आदनुबन्धाच्चेति प्रतिषेधः प्राप्तः । सङ्घुष्टं, सङ्घुषितं वाक्यमाह । सङ्घुष्टौ, सङ्घुषितौ दम्यौ—सम्पूर्णौ घुषिरविशब्दनेऽपि परत्वादयमेव । आङ्पूर्वस्य स्वन—आस्वन्तः, आस्वनितो मृदङ्गः । आस्वान्तं, आस्वनितं मनः । परत्वा-न्मनोऽभिधानेऽप्ययमेव ॥

## ५२९ । हृषेर्लोमसु ॥

लोमसु वर्त्तमानाद्ध हृषेः क्ते नेड् भवति वा । हृष्टानि, हृषितानि, लोमानि । हृष्टम्, हृषितं लोमभिः । हृष्टाः, हृषिताः, केशाः । हृषु अलीकथ इत्यस्य उदनुबन्धत्वाद् निष्ठायामनिट् । हृष तुष्टावित्ययं तु सेट् । उभयोरपि विभाषेयम् । लोमान्यङ्गजानि मूर्धजानि च गृह्यन्ते, यथा—"लोम नखं स्पृष्ट्वा शौचं कर्त्तव्यमिति" हृषिर्लोमसु वर्त्तमानो लोमकर्त्तक एव । लोमस्विति किम् ? हृष्टश्चात्र इत्यलीकार्थस्य, हृषितश्चात्र इति तुष्टार्थस्य । लोमस्वित्युपलक्षणं, तेन विस्मयप्रतिघातयोर्वा स्यात्—हृष्टो हृषितश्चात्रः विस्मित इत्यर्थः । हृष्टा हृषिताः दन्ताः । प्रतिहता इत्यर्थः ॥

## ५३० । दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः ।

एत इनन्ता वा निपात्यन्ते । दान्तः, दमितः । शान्तः, शमितः । पूरी दैवादिकश्चौरादिकश्च—पूर्णः, पूरितः । दसु—दस्तः, दासितः । स्पष्टः, स्पाशितः । छद छद संवरणे—छन्नः, छादितः । मारण॰

तोषणनिशामनेषु ज्ञा मानुबन्धश्च—ज्ञप्तः, ज्ञपितः । इट प्रतिषेधे इनो लुग् निपात्यते, ज्ञपेर्वेट्त्वाद् नित्यं मिट् प्रतिषेधे प्राप्ते ॥

## ५३१ । रान्निष्ठातो नोऽपूमूर्छिमदिख्याध्याभ्यः ॥

रेफात्परस्य निष्ठातकारस्य नकारो भवति । न तु पूमूर्छिमदिख्याध्याभ्यः । शीर्णः, शीर्णवान् । गुरी—अवगूर्णः, अवगूर्णवान् । यदि रश्रुतिरपिस्यात्कृतमित्ति न णत्वम् न स्यात् ऋकारावयवेन व्यवधानात् । चरितमित्यत्र निष्ठावयवेनेटा व्यवधानात् । कृतस्यापत्यं कार्त्तिरित्यसिद्धं बहिरङ्गमन्तरङ्ग इति । प्रतिषेधः किम् ? पू—पूर्तः, मूर्छा—मूर्तः । मदिख्याध्याभ्यः पराभ्यां प्राप्ते—मत्तः, ख्यातः, ध्यातः ॥

## ५३२ । दाद् दस्य च ॥

दकारात्परस्य निष्ठातकारस्य नकारो भवति दकारस्य च नो । भिन्नः, भिन्नवान् ॥

## ५३३ । आतोऽन्तःस्थासंयुक्तात् ॥

अन्तःस्थासंयुक्तादाकारात्परस्य निष्ठातकारस्य नकारो भवति । ग्लानः, ग्लानवान् । विम्लानः, विम्लानवान् । म्लानः, म्लानवान् ॥ धात्वधिकारात्—निर्यातः, निर्यातवान् ॥

## ५३४ । ल्वाद्योदनुबन्धाच्च ॥

लूञादिभ्य ओदनुबन्धेभ्यश्च परस्य निष्ठातकारस्य नकारो भवति । लूञ्—लूनः, लूनवान् । ज्या—जीनः, जीनवान् । रुजो—रुग्णः, रुग्णवान् । भुजो—भुग्नः, भुग्नवान् । स्वादय ओदनुबन्धाः—षूङ् प्राणिप्रसवे—सूनः,सूनवान् । दूङ्—दूनः, दूनवान् । गणकृतस्यानित्यत्वात् पूञो नाशे—पूना यवाः विनष्टा इत्यर्थः । नाश इति किम् ? पूतं धान्यम्, कल्पितमित्यर्थः । दुग्वोर्दीर्घश्च—विदूनः, विदूनवान् । विगूनः, विगूनवान् । चकारोऽनुक्तसमुच्चयार्थः, ऋल्वादिभ्यश्च क्तेः—कीर्णिः, गीर्णिः, लूनिः, पूनिः, धूनिः । ल्यो चेति यावल्ल्वादिस्ततो वृत्करणात् ह्राज्याग्लाभ्यश्च—ह्रानिः, ज्यानिः, ग्लानिः ॥

## ५३५ । व्रश्चेः क च ॥

व्रश्चेः परस्य निष्ठातकारस्य नकारो भवति कादेशश्चान्ते । व्रश्चेरेव श्रुतत्वाच्छ्लोपधस्य व्रश्चेर्धुट्यन्तलोपे सति षत्वबाधकं कत्वं स्यात्—वृक्णः वृक्णवान् ॥

## ५३६ । क्षेर्दीर्घात् ॥

दीर्घान्तात् परस्य क्षेर्निष्ठातकारस्य नकारो भवति । क्षीणः, क्षीणवान् । दीर्घादिति किम् ? क्षितायुर्जाल्मः, क्षितकृत्तपस्वी ॥

## ५३७ । श्योऽस्पर्शे ॥

अस्पर्शे वर्तमानाच्छ्यायतेर्निष्ठातकारस्य नकारो भवति । शीनं घृतम्, शीनवद्घृतम् । अस्पर्श इति प्रसज्योऽयंनञ् । शीतं वर्तते, शीतं जलम् । गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तम्, न तु रोगे, तेन प्रतिशीनमिति नत्वं भवत्येव ॥

## ५३८ । अनपादानेऽञ्चेः ॥

अनपादाने वर्तमानादञ्चतेः परस्य निष्ठातकारस्य नकारो भवति । समक्नः, समक्नवान्—संसक्त इत्यर्थः । अनपादान इति किम् ? उदक्तमुदकम्, कूपादुद्धृतमित्यर्थः । व्यक्मि मजे कणम् । अञ्चितः, अञ्चितवानिति इटा व्यवहितत्वात् । पूजायामञ्चतेरिड्भावो नलोपश्च नेष्यते ।

## ५३९ । अविजिगीषायां दिवः ॥

अविजिगीषायां वर्तमानाद् दिवः परस्य निष्ठातकारस्य नकारो भवति । आद्यूनः, आद्यूनवान् । अविजिगीषायामिति किम् ? द्युतं वर्तते । विजिगीषया ह्यक्षपातः क्रियते । सिनोतेः कर्मकर्तरि ग्रासे वक्तव्यम्—सिनो ग्रासः स्वयमेव, बद्ध इत्यर्थः ॥

## ५४० । ह्रीघ्रात्रोन्दनुदविन्दां वा ॥

एभ्यः परस्य निष्ठातकारस्य नकारो भवति वा । ह्रीणः, ह्रीणवान् ।

ह्रीतः, ह्रीतवान् । घ्राणः, घ्राणवान् । घ्रातः, घ्रातवान् । त्राणः, त्राणवान् । त्रातः त्रातवान् । उन्दी—समुन्नः, समुन्नवान् । समुत्तः, समुत्तवान् । नुद—नुन्नः, नुन्नवान् । नुत्तः, नुत्तवान् । विद विचारे—विन्नः, विन्नवान् । वित्तः, वित्तवान् । व्यवस्थितविभाषया नित्यं संज्ञायाम् देवत्रातः ॥ तथा

"विचारार्थाद्विभाषैव ज्ञानार्थान्नित्यमिड् यतः ।
भोगादन्यत्र लाभार्थात्सत्तार्थाच्च विदेः सदा"

## ५४१ । क्षैशुषिपचां मकवाः ॥

एभ्यस्त्रिभ्यो यथासंख्यं निष्ठातकारस्य मकवा भवन्ति । क्षामः, क्षामवान् । शुष्कः, शुष्कवान् । पक्वः, पक्ववान् । द्वयोर्विभाषयोर्मध्ये यो विधिः स नित्य एव ॥

## ५४२ । वा प्रस्त्यो मः ॥

प्रपूर्वस्य स्त्यायतेर्वा निष्ठातकारस्य मकारो भवति । प्रस्तीमः, प्रस्तीमवान् । प्रस्तीतः, प्रस्तीतवान् । मत्वान्नित्यं सम्प्रसारणम् ॥

## ५४३ । निर्वाणोऽवाते ॥

निर्वाण इति निपात्यते वातविषयश्चेद्वात्वर्थो न भवति । निर्वाणोऽग्निः । दीप्त्यु परमे वर्त्तते, निर्वाणो भिक्षुः । रागादिप्रशमनेऽत्र । अवात इति किम् ? निर्वातो वातः । विरोधेऽत्र । कथं निर्वाणो दीपो वातेन ? अत्र वातः करणं न त्वाधारः, निर्वातं वातेनेति भावेऽपि वात एव कर्त्ता ॥

## ५४४ । भित्तर्णवित्ताः शकलाधमर्णभोगेषु ॥

भित्तादयः कान्ता शकलादिष्वर्थेषु यथासंख्य निपात्यन्ते । भित्तं शकलमिति पर्य्यायः । ऋ गतौ—ऋणं शोध्यम् । ऋणेऽधमोऽधमर्णः । तद्विषये निपातनम् । अधमर्णग्रहणं कालान्तरादिविनियमोपलक्षणं,

तेनोपसर्गविषयेऽपि स्यात्, वित्तम्—वित्तं द्रव्यम्। भुज्यत इति भोग उच्यते। वित्तमिव वित्तमित्युपचारात् प्रतीतेऽप्यभिधीयते॥

## ५४५। अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः॥

एते क्तान्ता निपात्यन्ते न चेदुपसर्गात्परे भवन्ति। तत्र ञिफला विशरणे, निष्ठातकारस्य लत्वम्—फुल्लः। क्तवन्तोरपि लत्वमिच्छन्त्यन्ये—फुल्लवान्। क्षीबकृशिभ्यामुत्पूर्वाच्च लाघेः परस्यैव निष्ठातकारस्यैव लोप इड् भावश्च—क्षीबः, कृशः, उल्लाघः। अनुपसर्गादिति किम्? प्रफुल्लतः, प्रक्षीबितः, प्रकृशितः, प्रोल्लाघितः। कथं सम्प्रफुल्लः, उत्प्रफुल्लः? फुल्ल विकसनेऽस्मा सिद्धम्। परिकृश इति केन सिद्धम्, वचनं तु रूपान्तरं स्यादिति॥

## ५४६। अवर्णादूटो वृद्धिः॥

धातोरधातोर्वाऽवर्णात्परस्योटो वृद्धिर्भवति। शव—शौः, शावौ, शावः। धावु—धौतः, धौतवान्। अवनम्, ऊतिः, पटोतिः। अनानवति अनौः, अनावौ। ऊट इति किम्? अद्योढा। कन्दोढा औरिति सिद्धे वृद्धिग्रहणं मङ्गलार्थम्॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु षष्ठः पादः समाप्तः॥

## ॥ इति कातन्त्रं समाप्तम्॥

